तदनु स्वगृहे पट्टदेवीहस्तेन रसवतीं कारयित्वा स योगी भोजनाय निमंत्रितः । ततः षट् पत्रावलीर्मंडयित्वा नृपेण भोजनार्थमुपविशन् योगी प्रोचे—'स्वामिन्! स्वशिखागतसमुद्गकीमध्यात्तां स्त्रियं निष्कासय' । तेन भयात्तथा कृतं । ततस्तां स्त्रियं जगाद राजा—'त्वमपि तं पुरुषं पूर्ववत् प्रकटीकुरु' तयापि तथा कृतं । ततः स्वस्त्रियं प्राह—"हे प्रमदे! एतद्दीपिकातस्त्वत्पतिं बहिर्निष्कासय । किमर्थं कारागारे क्षिप्तोऽस्ति ? । तेन सार्धं भोजनं कुरु" । तयापि भूपोक्तं कृतं । ततस्तान् भोजनेन संतोष्यान्तर्वैराग्यपरो नृपो धिग्धिग्विषयानिति पौराणां पुर उद्घोष्य व्रतं निश्चलं जग्राह । एकेनैव व्रतेन देवत्वं प्राप्तः । अद्यापि तत्कृतवैराग्यनीतिशृंगारात्मकशतकत्रयं पुस्तकं लोके प्रसिद्धमस्ति । तन्मध्ये परमार्था बहवः सन्तीति ।

एणीदृशां वीक्ष्य विचेष्टितानि भवन्ति के नैव विरक्तचित्ताः ।
विलोक्य भूपः स्वकमातुलिंगं योगं दधौ भर्तृहरिर्नरेन्द्रः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठे स्तंभे नवतितमं व्याख्यानम् ॥ ९० ॥

समाप्तोऽयं प्रथमो भागः ॥ ६ ॥

मायां विलोकयामि'। ततो नृपो रहःस्थितः। रात्रौ तद्वनवासियोगिना स्वशिखात एकां रूब्बिकामाकृष्य तामुद्घाट्य मध्ये जलांजलिः क्षिप्ता। तत्प्रभावात्तत एका सुरूपा स्त्री निःससार। तया सह भोगं विधाय स सुप्तः। ततः स्त्रिया स्ववेणीरक्षितसमुद्गकीतो मंत्रितजलाञ्जलिक्षोटनेन देवकुमारः प्रकटीकृतः। तेन सह विलस्य पुनस्तं विगोप्य समुद्गकीं वेणीस्थामकरोत्। विगतनिद्रो योग्यपि तथा चकार। तच्चरित्रं सर्वं दृष्ट्वा नृपेण ध्यातम्—

"मत्तेभकुंभदलने भुवि सन्ति शूराः केचित्प्रचंडमृगराजवधेऽपि दक्षाः।
किं तु ब्रवीमि बलिनां पुरतः प्रसह्य कंदर्पदर्पदलने विरला मनुष्याः॥ १॥"

इति विचार्य श्रीपुरोद्याने गत्वा तरोरधो निद्रया सुप्तः। इतश्च तत्पुरनृपोऽपुत्रको मृतः। प्रकृतिभिः पञ्च दिव्यानि कृतानि। तानि नृपान्तिक आगतानि। नृप उत्थाय तेषां मंत्र्यादीनां पुर आचष्ट—'न मम राज्येन प्रयोजनं'। ततः सर्वे पौरा जगुः—'अस्माकं जीवितदानं देहि कृपया'। नृपस्तत्प्रार्थनामंगीकृत्य तद्राज्यं न्यायेन चकार। पूर्वनृपपुत्री सर्वैः प्रसह्य स परिणायितः। सापि नवयौवनैकदा गवाक्षस्था एकं श्रेष्ठिपुत्रं वीक्ष्य नेत्रबाणेन तद्धृदयं जघान। सोऽपि राज्ञीमिलनोत्सुक एकां नरप्रमाणां दीपसहस्रमालां दीपिकां मध्यसुषिरां कारयित्वा स्वयं मध्ये स्थितः। ततः संकेतित-नरैर्नृपाय तद्दीपिकायाः प्राभृतं कृतं। नृपेण स्वान्तःपुरे मोचिता। ततः स समयं प्राप्य मध्यतो निःसृत्य राज्ञ्या सह विषयान् भुक्त्वा पुनस्तन्मध्ये प्रविवेश। अन्यदा तन्नरवाससो दवरको दीपिकायाः काष्ठसन्धितो बहिर्निर्गतः। तं नृपो पश्यति स्म। यथा यथा तमाकर्षति तथा तथा तं दवरकं वृद्धिमन्तं दृष्ट्वा तन्मध्ये जारनरं निश्चित्य मौनमाधाय स्थितः।

मत्वाऽमरफलं ददे । प्रोक्तं च—"गृहाणेदं, अनेन भक्षितेन बहु जीव्यते, नीरोगता च भवति । तव भाग्यं नास्त्यत इदं दत्तमस्ति" । स च विप्रो गृहे नीत्वा भोक्तुमिच्छन् दध्यौ—'इदं फलं यो जगदाधारः स्यात्तस्मै दीयते' । एवं विमृश्य राज्ञे दत्तं । राज्ञा स्वपट्टदेव्यास्तत्प्रभावमुक्त्वा दत्तं । तया स्वोपपतेर्हस्तिपकस्य प्रभावकथनपूर्वं दत्तं । कुन्तारेण ध्यातं—'मम बहुजीवितेन किं ? अतो मयाऽभीष्टाया वेश्याया दीयते' । ततस्तस्या दत्तं । वेश्यया चिन्तितं—'ममानेन भक्षितेन किं ? प्रजानाथस्य ददामि' । इति विचार्य भर्तृहरये दत्तं । भर्तृहरिस्तत्फलमुपलक्ष्य पप्रच्छ—'कुतः समागतमिदं?' । तया नृपदंडभयाद्यथातथं प्रोक्तं । ततो हस्तिपकाय पृष्टं । तेनापि ताडनभयेन राज्ञीनाम प्रोक्तं । ततो नृपस्तां पप्रच्छ । सा तु भयविह्वला किमप्युत्तरकरणेऽक्षमा जाता । तामवध्यां मत्वा संसारासारतां दधत् भणति स्म—

"यां चिन्तयामि सततं मयि सा विरक्ता साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परितप्यति काचिदन्या धिक् तां च तं च मदनं च इमां च मां च ॥ १ ॥
संमोहयन्ति मदयन्ति विडंबयन्ति निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां किं नाम वामनयना न समाचरन्ति ॥ २ ॥"

एवं ध्यात्वा तृणवद्राज्यं मालवकं त्यक्त्वा नृपो व्रतं जग्राह । योगिसन्न्यासव्रतं कृत्वा भुवि पर्यटन् क्वचिन्नगरोद्याने एकत्र तापसस्थले गतः । तापसं नत्वा पुरो निषण्णः । तेनानादरे कृते नृपो दध्यौ—'नूनमयं मायावी वर्तते, प्रच्छन्नमस्य

मगोचरां चक्रे । तेन तत्र नागराणां तयोर्द्धश्वरचरित्रं प्रोक्तं । तदा पित्रादिभिर्ज्ञातं । पूर्णमनोरथः स श्राद्धः स्वगृहं ययौ । तौ दम्पती तु जातपूर्णप्रतिज्ञौ दीक्षामादाय मुक्तिभाजौ बभूवतुः ।

शीलप्रभावः किल कोऽपि दम्पती तौ येन शस्यौ मुनितो बभूवतुः ।
बिभ्रन्तु (तु) तद्ब्रह्म सदा सुखेप्सवः सौभाग्यहेतुर्भवदुःखवारणम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे एकोननवतितमं व्याख्यानम् ॥ ८९ ॥

---

## ॥ अथ नवतितमं व्याख्यानम् ॥ ९० ॥

अथ स्त्रीष्वनेकदोषान् विज्ञाय व्रतं स्वीकार्यमित्याह—

स्त्रीषु कापट्यमूलेषु नरो धीमान्न विश्वसेत् । वदत्यन्यं गृह्णात्यन्यं (करोत्यन्यं) तृप्तिर्न विषये कदा ॥ १ ॥

नवरं स्त्रीणां रतौ तृप्तिर्न कदा स्यात् । यतः—

स्त्रीणां द्विगुण आहारो लज्जा तासां चतुर्गुणा । षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ १ ॥

अत्र श्लोकभावार्थो भर्तृहरिनृपोदन्तेन ज्ञेयः । स चायम्—

अवन्त्यां भर्तृहरी राजा । तत्र विप्रो मुकुन्दो निःस्वो हरसिद्धिं लक्ष्मीहेतव आरराध । तया तुष्टया तस्याल्पपुण्यं

सायासायं डुक्खं तविरहम्मि य सुहं जउ तेणं । देहिंदियसुक्कडुक्खं सुक्खं देहिंदियाजावे ॥ १ ॥

परं च हे मृगाक्षि ! डुःखप्रदे विषये मम मनो न रोचते । यत उक्तम्—

विषस्य विषयाणां च पश्यतां महदन्तरम् । उपजुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ १ ॥

अतो हे सुन्दरि ! त्रिधा आजन्म शीलं गांगेयस्येव गांगेयपावनं नित्यशो मेऽस्तु । परमावाभ्यां स्वरूपमिदं पित्रादीनामपि न ज्ञापनीयं । कोऽपि वृत्तान्तमिमं ज्ञास्यति तदावश्यं दीक्षामादास्यावः" इत्थं निश्चयमाधाय तौ दम्पती स्वजीवितमिव शीलं दधतुः । एकत्र शयने रात्रौ सुप्तयोस्तयोर्न कश्चिदपि मदनोन्मादो जायते । सदा रहसि शीलगुणवर्णनमेवाकुर्वाताम् । एवं जावचारित्रपात्रयोस्तयोः समयो व्यतिचक्राम ।

अस्मिन्नवसरे चंपायां केवली विमलनामा साधुः समवासरत् । तद्देशनां जिनदासश्रेष्ठी श्रुत्वा निजाभिग्रहं जगाद— "जगवन् ! चतुरशीतिसाधुसहस्राणां पारणं कारयामि । मनोरथोऽयं कदा सफलो जावी" । इति श्रुत्वा केवली प्राह— "एतावतां मुमुक्षूणां युगपत्संगमः कथं जविता ? । दैवात्कर्हिचिदियत्सु मिलितेषु साधुषु अंबरपुष्पवच्छुद्धान्नपानसामग्री डुर्लजा । अतः कच्छदेशस्थयोर्विजयाविजयश्रेष्ठिदम्पत्योरशनादिन्निर्जक्तिं कुरु । तेन जूरिपुण्यं जवति । यतः—

चउरासीइसहस्सं समणाणं पारणेण जं पुन्नं । तं किण्हसुक्कपक्खेसु सीलपियकंतजत्तेण ॥ १ ॥

श्रुत्वैवं जिनदासेन तत्स्वरूपं पृष्टः केवली तयोर्वृत्तमजाणीत् । ततो जिनदासो जक्तिजरस्तत्र गत्वा तयोर्जक्तिं वाचा-

प्रियाः प्रभूता भवन्ति । यथा वसुदेवस्य द्वासप्ततिः स्त्रीसहस्रं । चक्रिणां च द्विनवतिसहस्रैकलक्षस्त्रीणामन्तःपुराणि" । श्रुत्वेति तां प्राह—"हे सुशीले ! प्रसह्य मातापितृभ्यामहं दीक्षातो निवार्य परिणायितः । न विषयसेवनादायुर्वृद्धिर्जगत्सु महत्त्वं वा सर्वजीवेभ्य आधिक्यं वा । केवलं मनस्यौत्सुक्यमात्रं स्यात् । यतो विशेषावश्यकवृत्तौ—

नग्नः प्रेत इवाविष्टः कुणन्तीमुपगुह्य ताम् । गाढायासितसर्वांगः स सुखी रमते किल ॥ १ ॥

पक्षिपश्वादयोऽपि विषयं सेवन्ते । किमस्मिंस्तत्त्वं । तथा च हे सुभ्रू ! देवभवेष्वगणितविषया भुक्ता बहुवर्षाणि । यत उक्तं लोकप्रकाशे—

दोवाससहस्स ठिई विसया होहिज उड्ढदेवाणं । पणसयपणसयहाणी, जोइसियवणभवणवासाणं ॥ १ ॥

अन्यच्च हे पद्माक्षि ! यत्संसारे स्रक्चन्दनांगनादिकं पुद्गलजनितं विनाशि परसंयोगोद्भवं सौख्यं तत्त्वतो दुःखरूपमेव मनःसंकल्पजत्वादौपचारिकत्वाच्च । यतः श्रीमज्जिनभद्रेरुक्तं—

विसयसुहं दुक्खं चिय दुक्खपडिआरउ तिगिच्छ्व । तं चिय उवयाराउ न उवयारो विणा तत्थं ॥ १ ॥

विषयसुखं दुःखमेव नूनं दुःखप्रतिकारः क्वाथपानडम्भदानादिचिकित्सा इव . तच्चौपचारिकं सौख्यं किंचित्तथ्यं । पारमार्थिकसौख्यं तु वस्तु विना न स्यात् । आत्मीयानन्दरोधकं सातासातकर्मतो जातं तत्सौख्यरूपं को व्यपदिशति । उक्तं च—

स्पष्टः । श्लोकोक्तप्रबन्धश्चायम्—

कच्छदेशेऽर्हद्दासः श्रेष्ठी । तस्य पत्नी अर्हद्दास्यासीत् । तयोर्विजयाभिधस्तनयः । स च गुरोः पार्श्वेऽधीते स्म । तेनैकदा शीलमाहात्म्यं निर्ग्रन्थमुखाच्छ्रुतं । तद्यथा—

**अमराः किंकरायन्ते सिद्धयः सहसंगताः । समीपस्थायिनी संपच्छीलालंकारशालिनाम् ॥ १ ॥**

इत्याकर्ण्य स्वदारसंतोषव्रतं गृहीतं विजयेन । स्वदारा अपि शुक्लपक्षे न सेव्या इति नियमवांस्तस्थौ । इतस्तत्रैव पुरे धनावहधनश्रियोः सुता विजयानाम्नी । सैकदा शीलवर्णनं श्रुत्वा स्वपतिसंतोषव्रते कृष्णपक्षे स्वपतिरपि न सेव्य इत्यभिग्रहं जग्राह । ततो घुणाक्षरन्यायाद्दैवसूत्रितयोस्तुल्यरूपयोस्तयोरेव विवाहोऽभूत् । ततो रात्रौ स्वावासमन्दिरे सज्जितषोडशशृंगारा नव्यनव्यवस्त्रा सा स्वाम्यन्यर्णं आययौ । विजयस्तां सुलोचनां व्याजहार—

**त्वं च मे हृदयं जीव उच्छ्वासः प्राण एव वा । संसारसुखसर्वस्वं प्राणिनां हि प्रियाजनः ॥ १ ॥**

**त्वं प्रिया चेच्चकोराक्षि स्वर्गलोकसुखेन किम् । त्वं प्रिया यदि मे न स्यात्स्वर्गलोकसुखेन किम् ॥ २ ॥**

परं हे शुभ्रे ! शुक्लपक्षे त्रिधा शीलं सर्वतः पूर्वं मया गृहीतं । अथ तस्य पक्षस्य त्रयो दिवसा अवशिष्टाः । ततो लीलामनुभविष्यावः । श्रुत्वेति सा भृशं म्लानिं प्राप्ता । तेन म्लानिहेतुं पृष्टा साभाषिष्ट—'स्वामिन्मम कृष्णपक्षस्य नियमोऽस्ति' । तदाकर्ण्य भृशं खेदमानसं पतिं वीक्ष्य सा ब्रूते स्म—"हे नाथापरां प्रियां परिणीय भोगान् भुंक्ष्व । पुंसां

पंचिंदिया मणुस्सा एगनरभुत्तनारिगप्भंमि । उक्कोसे नव लक्खा जायंती एगहेलाए ॥ ३ ॥
नव लक्खाणं मज्झे जायइ इक्कस्स दोह्न व समत्ती । सेसा पुण एमेव य विलयं वच्चंति तत्थेव ॥ ४ ॥

समत्ती समाप्तिः पूर्णतेति शास्त्रवाक्यादिह शीलभंगे प्रथमव्रतं भग्नमेव । तथा च द्वितीयव्रतमपि । न च कामिनां सत्यवादित्वं । यदुक्तं—

वणिक् पण्यांगना दस्युर्द्यूतकृत्पारदारिकः । द्वारपालश्च कौलश्च सप्तासत्यस्य मन्दिरम् ॥ १ ॥

तथा तृतीयव्रतभंगोऽपि ज्ञेयः । ननु पित्राद्यनुज्ञया परिणीतासु स्त्रीषु कथं भंगः ? । उच्यते—अब्रह्मसेवायां तीर्थंकरस्वामिप्रमुखादत्तमपि भवेत् । तत्र जिनेन्द्रैर्मोक्षेच्छूनां सर्वथाऽब्रह्मनिषेधात् । स्वामी मंरुलाधिपस्तेनाप्यदत्तमननुज्ञातं । अदत्ते अन्ये द्वे स्वयमभ्यूह्ये । तुर्यव्रतभंगस्तु प्रकट एव । पञ्चमस्य परिग्रहव्रतस्य भंगं विना कामिन्यपि नसंभवतीत्यर्थः । यतो दंरुकाचार्ये—

तेणं नववाडिउ भग्गा दिन्नो य दंसणग्घाउ । जो कुणइ जुवइसंगं सव्ववयप्पंसणं तस्स ॥ १ ॥

इत्थं बहुदोषदूषितमब्रह्म विज्ञाय हे जीव त्वं तस्मात्कारणात् दुःशीलतां त्यज जहीहि इति श्लोकार्थः ।

अथ केचिद्गृहिणोऽपि प्रथमवयस्त आजीवितं ब्रह्मव्रतं पालयन्तीत्युच्यते—

पाल्यते नियमः कैश्चिद्बाल्येऽप्याद्दत उत्तमैः । दम्पतिभ्यामिव ब्रह्म शुक्लाशुक्लस्वपक्षयोः ॥ १ ॥

जह देवीए अखुद्धो नियठाणं वरसुहं च संपत्तो । तह विसएहिं अक्खुद्धो सुद्धो जीवो लहइ मुक्खं ॥ ४ ॥

इत्युपनयो ज्ञेयः ।

रत्नाख्यदेव्यां दृढकाममुद्वहन् द्विधा समुद्रे जिनरक्षितोऽपतत् ।
भोगास्पृहाभाग्जिनपाल इत्यभूत्पात्रं श्रियां यत् परमात्मसंसदि ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभेऽष्टाशीतितमं व्याख्यानम् ॥ ८८ ॥

## ॥ अथैकोननवतितमं व्याख्यानम् ॥ ८९ ॥

अथैतद्व्रतभंगे सर्वेषामपि भंगः स्यादित्याह—

व्रतानामपि शेषाणां चतुर्थव्रतभंगके । लीलया भंग तामाहुस्तस्माद्दुःशीलतां त्यज ॥ १ ॥

तुरीयव्रतभंगे शेषाणां चतुर्णां प्राणातिपातादीनां । अपीति नूनं । लीलयाऽक्लेशेन । भंगतां जिनाः प्राहुः । तद्यथा—

इत्थीजोणीए संभवंति बेइंदियाई जे जीवा । इक्को व दो व तिन्नि व लक्खपुहत्तं च उक्कोसं ॥ १ ॥
पुरिसेण सहगयाए तेसिं जीवाण होई उद्दवणं । वेणुगदिठंतेणं तत्तायसलागनाएणं ॥ २ ॥

वदत्—"भद्रौ ! सा व्यन्तरी दुष्टास्ति । युवाभ्यां न भेतव्यं । मद्विकुर्विताश्वपृष्ठे तिष्ठतम् । एवं कृते सा देवतैत्य सरागमंजुलवाण्या युवां क्षोभयिष्यति । यस्य क्षोभो भविष्यति, तमहं समुद्रजले पातयिष्यामि" । इति ताभ्यामंगीकृते स यक्षस्तौ स्वपृष्ठौ संस्थाप्य चचाल । तावत्सा देवी स्वावासे आगता । तावदृष्ट्वा पृष्ठे धाविता । लावण्याश्रित्य सरागशोकवचनानि जजल्प—'हे मुग्धौ ! मामबलां विहाय युवयोर्गमनं नार्हं । क्षम्यतां ममापराधः' । इत्याद्यनेकालापैरेको जिनरक्षितः सरागदृष्ट्या क्षोभितो व्यलोकयत् । यक्षेणावधिना तच्चित्तं विषयासक्तं ज्ञात्वा पातितः, देव्यासिना खंडशः कृतः । जिनपालस्तु दृढप्रतिज्ञस्तत्संमुखमपि नावालोकयत् । क्षेमेण चंपायां यक्षेण स मुक्तः । यक्षः स्वस्थानं ययौ । एतत्स्वरूपं पित्रोः कथितं । ततो वैराग्यात् श्रीवीरपार्श्वे दीक्षां लात्वा सौधर्मे गतः । द्विसागरायुः स च्युत्वा विदेहे सेत्स्यति ।

अस्मिन् ज्ञाते तत्त्वमिदं । यत उक्तं षष्ठांगे—

भोगे अवेक्खयंता पडंति संसारसागरे घोरे । भोगेहिं णिरवकंखा तरंति संसारकंतारं ॥ १ ॥

दुहियजियाणइवयणं सेलगपुट्ठाहिरोहणसमाणं । नीरनिहि व भवोहो सिवगमणं सगेहगमणं व ॥ २ ॥

जह देवीए मोहा सेलगपुट्ठा चुओ गओ निहणं ।
विसयविमोहाओ तहा भवभवे पडइ चरण व ( चरणा वा ) ॥ ३ ॥

पालयन्ति, तेषां कीर्तिर्विश्वेपि न माति इत्यर्थः । अत्रार्थे जिनपालस्योदाहरणं । तच्चेदम्—

चंपानगर्यां माकन्दी वणिक् । तस्य भार्या भद्रा । तयोः पुत्रौ जिनपालजिनरक्षकौ । ताभ्यां समुद्रे एकादश यात्राः कृताः । विघ्नरहितं द्रव्यमुपार्जितं । पुनराग्रहेण निजौ पितरावनुज्ञाप्य पोतं भृत्वा चलितौ । चुल्लीवातेन पोतं भग्नं शैलाहतं । फलकेन रत्नद्वीपे गतौ । तत्र वने ताभ्यां वाप्यां क्रीडा कृता । इतश्च तद्द्वीपवासिनी देवतैत्य तौ प्रत्यवक्— 'मया सह भोगा भुञ्जनीयाः, अन्यथाऽनेनासिना शिरश्छेदं करिष्यामि' । तद्वाभ्यां प्रतिपन्नं । सा च शुभपुद्गलप्रक्षेपं कृत्वाऽशुभान्मुक्त्वा ताभ्यां सह भोगान् भुंक्ते ।

अन्यदा 'एकविंशतिवारान् यावत्समुद्रः काष्ठादिकमपहृत्य निर्मलीकार्यः' इति शक्रादेशे समागते सा तयोरेवं शिक्षां ददौ—"युवाभ्यां दक्षिणवने न गन्तव्यं, यतस्तत्र दृग्विषः सर्पोऽस्ति । अस्मिन् प्रासादे स्थेयं । अन्यथाऽन्यत्र वने गम्यं" । इत्युक्त्वा देवी गता । ताभ्यामचिन्ति—'किं कारणमत्र निषेधः कृतः ?' । इति विचिन्त्य तत्र वने गतौ । बहुतरास्थिचयं पश्यतः स्म । पुनरग्रे नरमेकं शूलास्थं वीक्ष्य ताभ्यां पृष्टं—'कस्त्वं' । नरेणोक्तं—"वणिगहं । पोते भग्नेऽत्रागमं । देवतया सह भोगान् भुक्त्वा स्थितः । युवां यदागतौ तदा लघुतरापराधेऽप्येवंविधावस्था तया चक्रे" । तौ भीतौ दध्यतुः—या गतिरस्याभूत् सा गतिरावयोरपि न दुर्लभा । पुनरपि स नरः पृष्टः—'कथमावयोर्मोक्षः ?' । नर आह—"पश्चिमदिशि शैलकयक्षो वर्तते । स पर्वतिथौ महता शब्देन भणति—कं तारयामि कं पालयामीति । युवाभ्यां तस्य चैत्ये गत्वा पूजा कार्या । प्राप्ते समये वाच्यं यक्षराजास्मान् पालयेति" । तच्छ्रुत्वा ताभ्यां तथा कृतं । तदा यक्षोऽ-

## ॥ अथाष्टाशीतितमं व्याख्यानम् ॥ ८८ ॥

अधुना ब्रह्मचर्यस्यैहिकं गुणमाह—

**ज्ञानादसर्वधर्माणां जीवितं शीलमेव ये । रक्षन्ति प्राणिनस्तेषां कीर्तिर्माति न विष्टपे ॥ १ ॥**

ज्ञानं मत्यादिगुणः, तदादिर्येषां ते एतादृशा दर्शनचारित्रादयः सर्वधर्मास्तेषां जीवितं प्राणभूतं शीलमेव ब्रह्मचर्यमेव । तद्विना सर्वे धर्मा व्यर्थाः । यत उक्तं परागमेऽपि—

"एकरात्र्युषितस्यापि या गतिर्ब्रह्मचारिणः । न सा क्रतुसहस्रेण कर्तुं शक्या युधिष्ठिर ॥ १ ॥"

जिनांगे तु ब्रह्मव्रतिनोऽङ्गनाङ्गं सविकारं दर्शनाद्यपि न कल्पते । यत उक्तमाद्यपञ्चाशके—

**उन्नंगदंसणे फासणे य गोमुत्तगहण कुसुमिणे(य) । जयणा सवत्थ करे इंदियअवलोयणेअ,तहा ॥१॥**

स्त्रीणां उन्नांगानि रागजनकानि नोपेत्य द्रष्टव्यानि । अथवा कथंचित्तेषु दृष्टेषु स्पृष्टेषु वा रागबुद्धिर्न कार्या । यतः—

**न शक्यं रूपमद्रष्टुं चक्षुर्गोचरमागतम् । रागद्वेषौ तु यौ तत्र तौ बुधः परिवर्जयेत् ॥ १ ॥**

गोमूत्रग्रहणमपि गोयोनिमर्दनेन न कार्यं, किं तु यदा स्वयं मूत्रयति तदैव । आगाढकार्ये पुनर्योनिमर्दनेऽप्यञ्जिष्वंगो न कार्यः । कुस्वप्ने स्त्रीभोगे तत्कालमुत्थायेर्यापथिप्रतिक्रमणपूर्वमष्टोत्तरशतोच्छ्वासप्रमाणः कायोत्सर्गः कार्यः । तथेन्द्रियावलोकने चशब्दाद्भाषणादौ च सर्वत्र यतना दृष्टिनिवर्तनादिरूपा कार्या । किं बहुना ? तद्ब्रह्मव्रतं ये प्राणिनो रक्षन्ति

तथा च मौनीन्द्रशासनेऽपि—

जह किंपागफलाणं परिणामो न सुंदरो । तह भुत्ताण भोगाणं परिणामो न सुंदरो ॥ १ ॥"

इत्यादिवाक्यात्प्रबुद्धो दुर्न्यायव्रणरोहिणीं रोहिणीं क्षमयामास । तद्यथा—

"सन्ति विश्वे दुराचारोपदेष्टारः पदे पदे । हितार्थमुपदीकर्तुं विरला एव केचन ॥ १ ॥"

इत्युक्त्वा स्वदारसंतोषव्रतेन सह गृहमाजगाम । तदनु धनावहोऽपि परदेशाद्धनं लात्वा गृहे विवेश । अन्यदा चेटीमुखान्नरेन्द्रागमनोदन्तं श्रुत्वा दध्यौ—'नूनमनया शीलं खंडितं । विजने समागतः स कथं स्त्रियं मुञ्चति ?' । इत्यन्तर्विकल्पवान् रजन्यां निःस्नेहपरस्तस्थौ । ततस्तत्पुण्योदयेन वृष्टिजनिर्नदीपूरेण च नगरं सर्वं रुद्धं । सदयया तया गोपुरोपरिस्थितया हस्ते नीरमादायेत्युक्तं—'हे सरित् ! गंगावत् त्रिशुद्ध्या शीलं यदि मे स्यात्तदा त्वमपसर' । इत्युक्तं श्रुत्वा तत्पूरं दृष्टेरगोचरं गतं । सर्वैस्तच्छीलं प्रशंसितं । धनावहोऽपि सस्नेहस्तच्छीलधर्मं ननाम ।

श्रीरोहिणी श्रीजिनराजधर्मं प्रोद्भावनाद्वैतममुं विधाय ।
कृत्वा कृतार्थं च मनुष्यजन्म प्राप्ता प्रभूतां सुकृतप्रतिष्ठाम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे सप्ताशीतितमं व्याख्यानम् ॥ ८७ ॥

॥ १८५ ॥

यथा भ्रान्त्या नरोऽनेकचन्द्रं कश्चिद्विलोकते । तथा कामभ्रमभ्रान्तः स्त्रीषु मुह्यति कामुकः ॥ २ ॥

हे नृप ! लौकिकशास्त्रेऽपि अब्रह्म निन्दार्हं । यतः लिंगपुराणे—

मासं यावदनाहारः पारणे कन्दमूलभुक् । मनसि तापसीमिच्छन् सोऽपि मूषामुखो मृतः ॥ १ ॥

तद्यथा—सेलकपुरोद्याने मठिकायां तापसो मासोपवासी तिष्ठति । तत्रैकदा तापसी एका समायाता । रात्रौ स्वशीलभंगभीरुणा तापसेनेति शिक्षिता—"भोस्तापसि त्वया रात्रौ मठिकाकपाटौ सुदृढीकृत्य शयितव्यं । रात्रावत्र राक्षसः समेति । स स्त्रियं भक्ष्यति । मद्वचसा त्वामालापयिष्यति । अभिज्ञानं वदिष्यति । परं त्वया नोद्घाट्यं कपाटं । उद्घाटिते तु त्वदेहं ग्रसिष्यति" । इत्युक्त्वा तापसो मठिकाया बहिः सुप्तः । अर्धरात्रे मदन उद्दीप्तस्तस्यांगे । अनेकविलापान् विधाय मध्ये प्रवेशनाय द्वारमूषामध्ये पुनः पुनर्मुखं क्षिपन्मृतः । शीलाखंडनाद्देवो जातः । प्रत्यूषे आगत्य सर्वेषां स्वस्वरूपं प्रोच्य मैथुनं न्यषेधयत् । तथा च विष्णुपुराणेऽप्युक्तम्—

वाणारस्यां गंगोपकंठे नन्दतापसेन बहुवर्षाणि यावत्तपः कृतं । एकदा गंगायां स्नानं कुर्वतीं स्त्रियं वीक्ष्य स मोहितः । तस्याः पृष्ठे गृहं गतः । तां प्रार्थयत् । सोवाच—'स्वामिन्नहं चांडाली । यूयं तपस्विनः । तव व्रतखंडनं न योग्यं' । इति तद्वचनमवगणय्य कामपीडितस्तां जजंभे । ततो नेत्रे उद्घाटिते । पश्चात्तापपरः शिलायां स्वशिर आस्फाल्य मृतः । यतः—

श्रीराम राम धिग् धिग् मे जन्मनो जीवितस्य च । यश्चिरं दुश्चरं तप्त्वा चांडालीसंगमं गतः ॥१॥

परविवाहकरणं । स्वापत्येष्वपि संख्याभिग्रहो न्याय्यः । यस्तु कृष्णस्य चेटकराजस्य च स्वापत्येष्वपि विवाहनियमः श्रूयते स चिन्तकान्तरसद्भावे द्रष्टव्यः इति तृतीयः । तथा मदने कामेऽत्याग्रहः तीव्रानुराग इति चतुर्थः । अनंगः कामस्तत्प्रधाना क्रीडाऽधरादिचुंबनं परदारेषु कुर्वतोऽनंगक्रीडा वात्स्यायनाद्युक्तं चतुरशीतिकरणासेवनं वा इति पञ्चमः । ब्रह्मणि ब्रह्मचर्यव्रते एतेऽतिचारास्त्याज्याः । अत्रार्थे रोहिण्युदाहरणम्—

पाटलीपुरे श्रीनन्दनृपो राज्यं शास्ति । तत्र धनावहः श्रेष्ठी । तस्य रोहिणी प्रिया सुशीला वर्तते । अन्यदा श्रेष्ठी समुद्रयात्रायां ययौ । रोहिणीं गवाक्षस्थां भूपतिरेकदा ददर्श । तां वीक्ष्य स्मरातुरः स्वां चेटीं तत्र प्राहिणोत् । चेट्यैत्योक्तं—'भो रोहिणि ! त्वत्पुण्यं महत् । येन नृपस्तवांगालिंगनाभिलाषुको जातः' । इत्याकर्ण्य सा दध्यौ—"अहो मूढा निजकुलधर्ममपि मुञ्चन्तो न लज्जन्ति । अथायं नृपो मत्तदन्तीव मे शीलमुन्मूलयिष्यति । अत उपायेनैवायं बोध्यः" । इति ध्यात्वा चेटीं प्राह—'त्वयाद्य रात्रौ नृपोऽत्र प्रेष्यः' । ततश्चेटीवचनात् हृष्टो नृपस्तत्सदन आययौ । सापि भूमिदत्तदृक् अभ्युत्थानादिना सेवां चकार । ततो भोजनसमये स्वर्णरूप्यकांस्यादिनवनवस्थालानि मुक्त्वा नवनववेषाभिः स्त्रीभिः शतशोऽपवरकतो निःसृत्य स्थालेषु विविधवर्णास्वादैका रसवती भोक्तुं परिवेषिता । ततो नवनवस्थालेभ्योऽपि रसं स्वादमान एकमेव रसं विज्ञाय विस्मितस्तामवोचत्—'हे मुग्धे ! एतेषु रसेषु विशेषः कथं न दृश्यते ? ।' साप्याह—"राजन् ! विवेकी तु एकस्मिन् पात्रे करं निदधाति स्वादैक्यात् । यतः—

**स्थानस्थगनभेदेन विशेषो न रसस्य चेत् । को भेदस्तर्हि रामास्तु रूपवेषादिभेदतः ॥ १ ॥**

इत्यादिवचनतः स्वश्वर्तुर्देवरस्य च माहात्म्यं वीक्ष्य तया त्रिधा शीलादिधर्मः स्वीकृतः ।

शीलव्रताद्यन्वितमर्त्यसंस्तवान्मार्गं ददावंबुनिधिर्नृपप्रियाम् ।
धत्ते हृदि स्वे यदि तत्प्रयच्छेत् कर्मोदधिस्तं शिवमार्गमद्भुतम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तम्भे षडशीतितमं व्याख्यानम् ॥ ८६ ॥

## ॥ अथ सप्ताशीतितमं व्याख्यानम् ॥ ८७ ॥

अत्रापि पञ्चातिचारा वर्जनीयास्तद्यथा—

**इत्वरात्तागमोऽनात्तागतिः परविवाहनम् । मदनात्याग्रहोऽनंगक्रीडा च ब्रह्मणि स्मृताः ॥ १ ॥**

इत्वरा प्रतिपुरुषमयनशीला वेश्येत्यर्थः । सा चात्ता च कंचित्कालं भाटीप्रदानादिना संगृहीता । अथवा इत्वरकालमात्ता । तस्या गम आसेवनं । इयमत्र भावना—भाटीप्रदानादित्वरकालस्वीकारेण स्वकलत्रीकृतवेश्यां सेवमानस्य स्वबुद्धिकल्पनया स्वदारत्वेन व्रतसापेक्षत्वान्न भंगः । अल्पकालपरिग्रहाच्च वस्तुतोऽन्यकलत्रत्वाद्भंग इति प्रथमः । अनात्ताऽपरिगृहीता वेश्या स्वैरिणी प्रोषितभर्तृकाऽनाथा वा तस्यां गतिरासेवनं इयं परस्त्री न भवतीति बुद्ध्याऽनाभोगादिना वातिचार इति द्वितीयः । तथा परेषां परकीयापत्यानां कन्यादानफललिप्सया संबन्धादिना वा विवाहनं परिणयनविधानं

सती पत्युः प्रभोः पत्तिर्गुरोः शिष्यः पितुः सुतः । आदेशे संशयं कुर्वन् खण्डयत्यात्मनो व्रतम् ॥ १ ॥

इति ध्यात्वा नदीपार्श्वं गता । पत्युक्तं विनयेन यदोक्तं तदा नद्या मार्गो दत्तः । देवकुले गत्वा देवरं नत्वा धर्मं शुश्राव । ततो मुनिना पृष्टा—'तव नद्या कथं मार्गो दत्तः?' । तया यथास्वरूपे प्रोक्ते मुनिः प्राह—"शृणु, मम सहोदरो मया सह व्रताकांक्षी लोकानुग्रहकाम्यया राज्यं भोगांश्चानुभवन्नपि व्यवहारतो निश्चयतो ब्रह्मचार्येव । यतः—

तदेवं गृहवासेपि पंकेऽब्जस्येव तस्थुषः । निर्लेपमनसो राज्ञो घटते ब्रह्मचारिता ॥ १ ॥"

ततः सा वनैकदेशे स्वभोजनाय सार्धमानीतेन शुद्धेनाहारेण देवरं प्रतिलाभ्य स्वयं बुभुजे । ततस्तया गन्तुकामया मुनिः पृष्टः—'मया कथं नद्युत्तार्या?' । मुनिर्जगौ—

"नदी देवी त्वया भाष्या यद्यसौ मुनिराव्रतात् । उपोषितश्चरेन्नित्यं तदा मार्गं प्रयच्छ मे ॥ १ ॥"

पुनर्विस्मयमापन्ना राज्ञी नद्यास्तटं गता । श्रावयित्वा मुनेर्वाक्यं नदीं तीर्त्वा ययौ गृहे ॥ २ ॥

राज्ञी नृपमभ्येत्य ज्ञातं पूर्वं निवेद्य पप्रच्छ—'स्वामिन्मयाद्य पारणं कारितः स मुनिः कथमुपोषितः?'। राज्ञोचे—"हे देवि! शृणु आगमवाक्यं । यतः—

निरवज्जाहारेणं साहूणं निच्चमेव उववासो । उत्तरगुणवुड्ढिकए तह वि हु उववासमिच्छंति ॥ १ ॥

अकृताकारितं शुद्धमाहारं धर्महेतवे । अश्नतो हि मुनेर्नित्योपवासफलमुच्यते ॥ २ ॥"

॥ १०३ ॥

तृतीययामं प्रोच्य नृपमगात्। तथैव प्रार्थितवते तस्मै सा तुर्यं यामं निवेद्य तुर्ययामेऽहमाकारणीयेति संकेतं पतिमात्रा विधाय स्वावासे रिक्ते सायं तस्थौ। तदैव यामे समायातं विप्रं स्नानपानादिना प्रथमं यामं व्यतीयाय। इतः सेनापतिरायथौ। तच्छब्देन वेपमानवपुषं विप्रं मञ्जूषाखानके ( कोणके ) चिक्षेप। एवं चतुरोऽपि निक्षिप्य प्रभाते रुदती कुटुंबेनेत्यवादि—'किं रोदिषि?' । साप्याह—'कष्टे मद्भर्तुरक्षेमवार्तागता' । इति श्रुत्वा तत्स्वजनै राजामात्यसेनापतीन् स्वस्वगृहेष्वलभमानैर्विज्ञप्तो राजपुत्रः—'देव समुद्रदत्तश्रेष्ठिपुत्रः परदेशे मृतस्तेन तद्विभवो गृह्यताम्'। सोऽपि तत्र गतोऽन्यत् किमप्यपश्यन् दृढदत्ततालकां तां मञ्जूषामादाय यावदुद्घाटयति तावत्तस्यास्ते चत्वारो निर्ययुः। तं विप्रं देशान्निष्कास्य भूपस्तां सत्कृत्य प्रशशंस।

इत्यादिः गुरुपार्श्वे ताभ्यां धर्मः श्रुतः। कुमारदेवेन स्वदारसन्तोषव्रतं गृहीतं । चन्द्रो दीक्षां प्राप्य शुद्धाहारं गृह्णन् तपस्वी बभूव। एकदा विहारं कुर्वन् श्रीपुरासन्नदेवकुले समेत्य तस्थौ। तदा राजा वंदित्वा गतः। राज्ञी 'दिवा चन्द्रयतिं वन्दित्वा भोक्ष्ये' इत्यभिग्रहं ललौ। प्रभाते मुनिवन्दनाय यावद्विनिर्गता तावदन्तरा नदी जलपूर्णा जाता उपरि जलदवृष्टितः। तद्वीक्ष्य खिन्नां तामाकर्ण्य राजा प्राह—नद्या उपकंठं गत्वा त्वयेति वक्तव्यं—

"हे देवि नदि भर्ता मे देवरव्रतवासरात्। आरभ्य व्रतचारी चेन्मार्गं देहि तदा द्रुतम्॥ १॥"

सा दध्यौ—"अहं पत्युः शीलसंबन्धं जानामि। परं तत्र सर्वं ज्ञास्यते। संप्रति पतिवाक्यं। करोमि पतिनिदेशसंशये पतिव्रतत्वखंडनं भवेत्। यतः—

## ॥ अथ षडशीतितमं व्याख्यानम् ॥ ८६ ॥



पुनरेतद्व्रतं स्तूयते—

**यः स्वदारेषु संतुष्टः परदारपराङ्मुखः । स गृही ब्रह्मचारित्वाद्यतिकल्पः प्रकल्प्यते ॥ १ ॥**

ब्रह्मचर्यरतो गृही मुनिसन्निभः कथ्यते । अत्रार्थे प्रबन्धोऽयम्—

श्रीपुरे कुमारदेवचन्द्रौ द्वौ राजसुतौ भ्रातरौ गुरुदेशनां श्रोतुमुद्याने गतौ । मुनिः प्राह—

**"जो देइ कणयकोडिं अहवा कारेइ कणयजिणभवणं ।**
**तस्स न तत्तिय पुण्णं जत्तिय बंभवए धरिए ॥ १ ॥**

तथा च केचिज्जीवाः शीलवतीवत्स्वशीलं व्यसनेऽपि न त्यजन्ति । तथा हि—लक्ष्मीपुरे समुद्रदत्तः श्रेष्ठी स्वप्रियां गृहे विमुच्य सोमभूतिविप्रेण सह परदेशमगात् । कतिचिद्दिनानन्तरं विप्रः श्रेष्ठिदत्तं पत्रं गृहीत्वा स्वगृह आगात् । शीलवती स्वपतिप्रेषितपत्रग्रहणाय विप्रगृहे गता । विप्रस्तां विलोक्य स्मरातुर इत्यभणत्—'हे कृशोदरि ! तावन्मया सह रमस्व । पश्चात्तव पतिलेखार्पयामि' । पंडिता सा प्राह—'मद्गृहे रात्रिप्रथमयामे त्वया समागन्तव्यं' । इत्युदीर्य गत्वा सेनापतिं प्राह—'देव ! मत्पतिलेखमसौ नार्पयति' । इति श्रुत्वा तां दृष्ट्वा सोऽपि विकलः प्राह—'हे सुभ्रूः ! तावन्मदुक्तं कुरु । पश्चात्तद्दापयामि' । इतीरिता स्वव्रतभंगभीरुः सास्मै द्वितीययामं प्रोच्य मंत्रिणमगात् । तथैवोक्तवते तस्मै

पतति तावन्नागिलेनाग्निना दह्यमानाविव स्वक्रमौ संवृतौ । सा क्रुद्धा लोहगोलं विकृत्य तमेवं बभाषे—'नो मां त्वं भज । नो चेत्त्वां भस्मसात्करिष्यामि' । स निर्भयो दध्यौ—

"दशावस्थादशग्रीवो देवदानवदुर्जयः । कंदर्पराक्षसेन्द्रो यच्छीलास्त्रेणैव साध्यते ॥ १ ॥"

ततः सा सूत्कारं कुर्वती ज्वलल्लोहगोलं तस्य शीर्षे पातयति तावन्नागिलो नमस्कारं स्मरन् गोलकं खण्डशश्चक्रे । ततो लज्जयाऽदृश्यीभूय क्षणेन नन्दास्वरूपं कृत्वा चेटिकोद्घाटितगृहद्वारेणागत्येति जगाद—'स्वामिन्नहं त्वां विना पितुर्गृहे रतिं न लेभे' । स दध्यौ—"सा नन्दा स्वपतिसंतोषनियमा । नूनं तस्या इयं न चेष्टा । रूपं तु तादृशं । परं परिणामस्तादृशो न हि । अतः परीक्षां विना विश्वासो नार्हः" । इति विचिन्त्य सोऽवक्—'हे प्रिये ! यदि त्वं सत्यं नन्दासि तदा मत्समीपेऽस्खलितगत्यागच्छ' । ततः खेचरी यावदागच्छति तावत्सा स्खलिता । धर्ममहिम्ना सत्यं तत्कपटं वीक्ष्य कपटान्तरेण शीलभंगभयाल्लोचं चकार । ततो यक्षदीपं प्राह—'त्वं स्वौकसि व्रज' । यक्षोऽवक्—'यावज्जीवं त्वां सेविष्ये । मत्तेजसा उर्फेई ( उद्योतिका ) न स्यात्' । ततः सूर्योदये नन्दायुतो गुरुपार्श्वे व्रतमवाप्य यक्षदीपेन पुरःस्थेन साश्चर्यं पृथ्व्यां विहरन् सर्वसंयमं प्रपाल्य हरिवर्षे युगलिषु भूत्वा ततो नरत्वं प्राप्य मुक्तिं भेजे ।

यो द्रव्यदीपाद्भुवनावदीपं दधौ स्वचित्ते स च नागिलोऽयम् ।
स्वदारसंतोषदृढप्रतिज्ञो विद्याधरीतोऽपि न चाप कंपम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे पञ्चाशीतितमं व्याख्यानम् ॥ ८५ ॥

गुणयुक्ता त्वां मनागपि चित्ते न धत्ते । यदि व्रतान्यंगीकुरुषे तदा स्वेप्सितं स्यात्" । नागिलः पप्रच्छ—'भगवन् ! सर्वेषु धर्मेषु कः श्रेष्ठः ?' । मुनिराह—'हे भद्र ! जिनेन्द्रैर्निगदितः शीलादिधर्मः सम्यक्त्वपूर्वकः श्लाघ्यः । उक्तं च पूज्यैः—

नियसीलवहणघनसारपरिमलेणं असेसभुवलयं । सुरहिज्जइ जेसिं इमं नमो नमो ताण पुरिसाणं ॥ १ ॥

अन्यच्च—क्षणैकं भावनादाने तपोऽपि नियतिस्थिति । यावज्जीवं तु शीलस्य दुष्करं परिशीलनम् ॥२॥

कलिकारओ वि जणमारओ वि सावज्जजोगनिरओ वि । जं नारओ वि सिज्झई तं खलु सीलस्स माहप्पं ॥३॥"

इत्यादिगुरुवाक्यतः प्रबुद्धः सम्यक्त्वं शीलं च विवेकदीपं च स्वीकृत्य तद्दिनप्रभृति श्रावककृत्यं चकार । अन्यदा नन्दा तं जगौ—"स्वामिन् ! त्वया सम्यक्कृतं । आत्मा विवेके नीतः । यतः—

पूआ जिणाणं दाण मुणीण साहम्मियाण वच्छल्लं । सीलं परोवयारो विवेयतरुपल्लवा एए ॥ १ ॥"

स प्राह—"धर्मस्त्वात्मार्थं विधेयो विवेकेन । यतः—

सदैव दुःखितः प्राज्ञो विवेकांकुशशंकया । सदा प्रहसितो मूर्खस्त्वजायूथपतिर्यथा ॥ १ ॥"

तदाकर्ण्य हृष्टा नन्दा तं भावतः सिषेवे । एकदा नन्दा पितृगृहं गता । निशि चन्द्रज्योत्स्नायां सुप्तो नागिलः । प्रियवियोगिन्या तद्रूपमोहितया विद्याधरपुत्र्या वीक्ष्य पृष्टः—"स्वामिन् ! त्वं मां स्त्रीत्वेन प्रतिपद्यस्व, अहं तवापूर्वं विद्याद्वयं दास्यामि । मम लावण्यादिकं पश्य । मद्वचोऽन्यथा मा कार्षीः" । इत्युक्त्वा सा कंपनाननतनुस्तत्पादयोर्यावत्

सञ्जोगस्तत्स्थूलं । यद्वा मैथुनत्यागरूपं ब्रह्मचर्यं द्विधा सर्वतो देशतश्च । तत्रोपासकः सर्वतोऽशक्तो देशतः स्वीकुर्यादिति जावः । एतद्व्रतविषये प्रबन्धोऽयम्—

अहो ब्रह्मव्रतं मुक्तेः संमुखीकारकारणम् । गीयते नागिलस्येव विपदामुपदाहकृत् ॥ १ ॥

जोजपुरे पुरे श्रीसर्वज्ञधर्मरक्तो लक्ष्मणो नाम वणिक् । तस्य सुता नवतत्त्वज्ञा नन्दाजिधा । तयान्यदा वरार्थी पिता प्रोचे—

"निरञ्जनं दशोन्मुक्तं निःस्नेहव्ययमन्वहम् । धत्ते विकंपं दीपं यः परिणेता ममास्तु सः ॥ १ ॥"

इति तस्या वचः श्रेष्ठी श्रुत्वा दुष्करमजिग्रहं ज्ञात्वा चिन्तार्तस्तां वार्तां पुर उद्घोषयति स्म । तद्वार्तां श्रुत्वा नागिलद्यूतकारेण यक्षसान्निध्यादीदृशो दीपः कारितः । श्रेष्ठी तद्गृहे दीपं दृष्ट्वा हृष्टो नागिलाय स्वपुत्रीं ददौ । पुत्री तं व्यसनासक्तं मत्वा जृशं दूना । परिणीतोऽपि स द्यूतं न मुञ्चति । तेन नित्यं द्रव्यव्ययो जवति । श्रेष्ठी पुत्रीस्नेहान्नित्यं पूरयति । नन्दा तु पत्या सह मनो विनैव परिचरति । तेनैकदा चिन्तितं—'अहो ! अस्या गांजीर्यं यन्मयि महत्यप्यपराधे एषा न कुप्यति' । अन्यदा तेन ज्ञानी जक्तिपूर्वं पृष्टः—'मुने ! मम प्रिया शुद्धाशयापि मां चित्ते न धत्ते' । मुनिस्तं योग्यं ज्ञात्वाऽन्तरंगदीपस्वरूपं प्रोवाच—

"निगद्यतेऽञ्जनं माया नवतत्त्वास्थितिर्दशा । स्नेहव्ययः प्रेमजंगः कंपः सम्यक्त्वखंमनम् ॥ १ ॥
तैर्विमुक्तं विवेकं यो धत्ते सोऽस्तु पतिर्मम । इति दीपछलादाख्यात् पृष्टा नार्थं तु केनचित् ॥ २ ॥

त्वं तु धूर्ततया यक्षमाराध्य पूर्वोक्तदीपं कृतवान् । श्रेष्ठिना तव स्वपुत्री दत्ता । त्वं तु व्यसनी । इयं तु शीलादि-

धृतमपि यममेकं स्थैर्यभावेन येन, धनकनकसुखर्द्धिर्जायते तस्य वर्या ।
परधनपरिहारात्सार्थपोऽभूत्सुरार्च्यः, स इव कुरुत भव्या भव्ययत्नं व्रतेऽस्मिन् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे चतुरशीतितमं व्याख्यानम् ॥ ८४ ॥

## ॥ अथ पञ्चाशीतितमं व्याख्यानम् ॥ ८५ ॥

अथ स्वदारसंतोषलक्षणं व्रतमाह—

संतोषः स्वेषु दारेषु त्यागश्चापरयोषिताम् । प्रथयन्ति गृहस्थानां चतुर्थं तदणुव्रतम् ॥ १ ॥

स्वपरिणीतस्त्रीषु संतोषः स्थिरता गृहिभिर्विधेया । चापरमपरयोषितामात्मव्यतिरिक्तानां मनुष्याणां देवानां तिरश्चां च या योषितः परिणीतासंगृहीताविधवादयस्तासां त्यागो विरतिः । यद्यप्यपरिगृहीतदेव्यस्तिरश्च्यश्च काश्चित्संगृहीतुः परिणेतुश्च कस्यचिदभावाद्वेश्याकल्पा एव भवन्ति, तथापि परजातीयभोग्यत्वात्परदारा एव ता इति वर्ज्याः । स्वदारसंतोषिणस्तु अपराः सर्वा अपि परदारा एव । दारशब्दस्योपलक्षणत्वात् स्त्रियं प्रति स्वपतिव्यतिरिक्तसर्वपुरुषवर्जनमपि द्रष्टव्यमिति भावार्थः । गृहिणां जिनाः तच्चतुर्थमणुव्रतं मैथुनविरमणं प्रथयन्तीत्यर्थः ।

तच्च मैथुनं द्विधा सूक्ष्मं स्थूलं च । कामोदयेन यदिन्द्रियाणामीषद्विकारस्तत्सूक्ष्मं । मनोवाक्कायैरौदारिकस्त्रीणां यः

पिब । नाहं दीयरूस्वामिनः कथयिष्यामि" । श्रुत्वैवं स जगौ—"तृषार्तः प्राणान् गमयिष्यामि । ते तु अनेकभवे प्राप्ता
गताश्च । परमहमदत्तं न गृह्णामि । यतः हास्यतो रोषतो वा छलं कृत्वा योऽदत्तं गृह्णाति स तस्य फलमश्नुते । यतो
वासुदेवपत्न्या रुक्मिण्या वने मयूर्यण्डं करे कृत्वा गोपितं छन्नं । तां मयूरीं सर्वत्र भ्रमन्तीं वीक्ष्य षोडशघटिकान्ते देव्या
पश्चान्मुक्तं देवीकरकुंकुमेन रक्तीभूतमंडं मयूर्या दृष्टं कियत्कालं न सेवितं । तावत्पर्जन्यागमे तु रक्ततापगमेन सेवितं ।
तत्कर्मणा सुतवियोगः षोडश वर्षान् यावज्जातः । इति हास्यतोऽदत्तग्रहणे फलं । रोषतश्च देवानन्दात्रिशलयोश्च ज्ञातम् ।
अतो हे कीर ! स्वाम्यदत्तं न गृह्णामि" । तस्य व्रतदार्ढ्येन तुष्टः शुकः स्वं संवृत्य दिव्यदेहो भूत्वा इत्याचख्यौ—"अहं
सूर्याख्यः खगः । त्वया गुरुपार्श्वे व्रतं गृहीतं, तेन विस्मयमापन्नोऽहं निधिदर्शनादिना तव परीक्षां चकार" । इत्युक्त्वा
बहुधनं तत्पुरो मुमोच । सार्थपतिः प्राह—"मम शुद्धव्यवहारेणार्जितं द्रव्यं सुखाय, किमनेन ? । परं मदीयं धनं त्व-
मेव गृहाण । यतो मयेदं प्रतिपन्नमासीत् यो मेऽश्वं जीवयिष्यति तस्य स्वीयं धनं दास्यामीति । अतस्त्वदीयमेवैतत्" ।
खगो जगौ—"मया तु तव माया दर्शिता । दानार्थं कल्पितं धनं कथं गृह्यते । भोः सार्थेश ! आवयोः श्रियाः स्थानं
क्व भविष्यति ?" । सोऽवक्—"भो धर्म एव महास्थानं । अत आवां जीर्णोद्धारादिना श्रियं कृतार्थां कुर्वहे" । तत
उभावपि तथा चक्रतुः । ततः सार्थपः सार्थेन सह गृह आजगाम । क्रमेण मुनिधर्मं स्वीकृत्यायुःपूर्णेन मृत्वा त्वं लक्ष्मी-
पुञ्जो जातः । अहमपि व्यन्तरदेवो जातः । त्वन्महिम्ना त्वद्भाग्येन प्रेरितोऽहं गर्भदिनादद्य यावज्जलादिवृष्टिं करोमि" ।
इति वाचां श्रुत्वा जातिस्मृतिं प्राप्य लक्ष्मीपुञ्जो दीक्षां जग्राह । क्रमादच्युते गत्वा नरत्वं लब्ध्वा शिवश्रियं प्राप ।

तथा लौकिकेऽपि—

कूटसाक्षी सुहृद्द्रोही कृतघ्नश्चौर्यकारकः । चत्वारः कर्मचंमालाः पञ्चमो जातिसंजवः ॥ २ ॥

यतः—हस्ते नरकपालं ते मदिरामांसजक्षिणि । मनुः पृच्छति मातंगीं किं तोयं दक्षिणे करे ॥ ३ ॥

चंमाली प्राह—

मित्रद्रोही कृतघ्नश्च स्तेयी विश्वासघातकः । कदाचिच्चलितो मार्गे तेनेयं क्षिप्यते बटा ॥ ४ ॥

कूटसाक्षी मृषावादी पक्षपाती जगट्टके । कदाचिच्चलितो मार्गे तेनेयं क्षिप्यते बटा ॥ ५ ॥

वरं वह्निशिखास्पर्शः सर्पास्यं चुंबितं वरम् । वरं हालाहलं लीढं परस्वहरणं न तु ॥ ६ ॥

एवं देशनामाकर्ण्य सोऽदत्तादानविरतिं चकार । अन्यदा जूरिधनलाजार्थं बहुसार्थः सार्थपो देशान्तरे गतः । एकदा सार्थतो भ्रष्टोऽश्वारूढो महारण्ये व्रजन् पुरो लक्षमूल्यां स्वर्णमालां जूगतां वीक्ष्य तृतीयव्रतजंगजयान्नाददौ । ततो मार्गे तुरंगखुरोत्खातजूमौ ताम्रकुंभं द्रव्यपूर्णं निजाल्य कर्करसन्निजं मत्वाऽग्रत एव चलन् वाजिनं सहसा मूर्छागतं वीक्ष्य चिन्तयति स्म—'यदि कोऽप्यमुं वाजिनं सज्जीकरोति तस्य निजं सर्वं धनं दास्यामि'। इति ध्यात्वा तृषातुरो जलार्थमग्रे याति तावद्वृक्षबद्धं पानीयजृतं दीयमं वीक्ष्य पञ्जरस्थेन शुकेनोक्तः—"हे सुजग ! त्वमस्मिन् स्थितं जलं

## ॥ अथ चतुरशीतितमं व्याख्यानम् ॥ ८४ ॥

पुनरेतद्व्रतं प्रस्तूयते—

**अदत्तादाननियमग्रहणैकरतो नरः । लक्ष्मीपुञ्ज इवाप्नोति भवद्वये महत्पदम् ॥ १ ॥**

अदत्तादानं द्विविधं सामान्येन सचित्तेन अचित्तेन च । सचित्तं द्विपदादि, अचित्तमाभरणादि, तयोर्नियमो विरतिरित्यर्थः । श्लोकोक्तवृत्तमिदम्—

हस्तिनागपुरे सुधर्मा वणिक् । धन्या गृहिणी । तौ दारिद्र्याद्दुःखेन कालं गमयतः । अन्यदा रात्रौ स्त्रिया स्वप्ने लक्ष्मीदेवीं पद्महृदे पद्मस्थां दृष्ट्वा प्रत्यूषे स्वपतिं प्रति निवेदितं । स हृष्ट आत्मसत्कं दारिद्र्यं गमिष्यतीत्याह । तदा कोऽपि स्वर्गतश्च्युतो देवस्तस्याः कुक्षाववतीर्णः । तदा पूर्वमित्रदेवैस्तद्गृहे स्वर्णादिवृष्टिः कृता । पूर्णे मासे पुत्रं सुषुवे । तदा स्वजनैर्यथार्थं लक्ष्मीपुञ्ज इति नाम कृतं । स बालः शुक्लपक्षहिमरश्मिज्योत्स्नावद्वृद्धिं प्राप । स्वयंवरे महेभ्यानामष्टौ कन्यास्तेन परिणीताः । अन्यदा स्वौकसि ताभिः सह सौख्यमनुभवन् स्थितः, तावत्कोऽपि देवः प्रकटीभूय तमेवं बभाषे—

"हे सुहृद् ! शृणु ते प्राग्भवम्—

मणिपुरे पुरा गुणधराख्यस्त्वं सार्थप आसीः । एकदा त्वया धर्मदेवस्य वाणीयं श्रुता—

**जन्तोः स्याद्दुःखदं द्रव्यहरणं मरणादपि । अतः सुकृतिभिः कार्यं व्रतं चौर्यविमोचनम् ॥ १ ॥**

नोक्तं—"युष्माभिर्बहुभिः किं प्रयोजनम् ? । यतः—

कृशोऽपि सिंहो न समो गजेन्द्रैः, सत्त्वं प्रधानं न च मांसराशिः ।
अनेकवृन्दानि वने गजानां, सिंहस्य नादेन मदं त्यजन्ति ॥ १ ॥"

इत्युक्त्वा तेऽपि नृपं विना भूमौ पातिताः । ततो नगरस्योपरि व्योम्नि शिलां विकुर्व्योपप्लवमकरोत् । ततो नृपमंत्र्यादयोऽञ्जलिं विधाय प्रोचुः—'अस्मदागः क्षम्यताम्' । देवेनोक्तं—"अस्मद्धर्मगुरोर्जिनदत्तस्य निरपराधस्य कथं बाधा कृता ? अस्य महिम्ना मयेयं सुरर्द्धिः प्राप्ता" । इत्युक्त्वा प्रोक्तः सर्वोऽवदातः । नृपेण भणितम्—

"प्रथमवयसि पीतं तोयमल्पं स्मरन्तः, शिरसि निहितभारा नालिकेरा नराणाम् ।
उदकममृतकल्पं दद्युराजीवितान्तं, न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १ ॥"

ततः प्रसन्नेन देवेन निरूपितं—"यूयं सर्वे मद्गुरोः पादौ नत्वा प्रणमत । तन्मुखेन नमस्कारमंत्रं चौर्यादिव्रतं च गृह्णीध्वं" सर्वेऽपि तथा चक्रुः । जिनदत्तो महामहेन स्वगृह आजगाम । लोका अपि परस्परं प्रत्यक्षं जैनधर्मं प्रशशंसुः ।

प्रोतोऽपि शूल्यामयसश्च लोहखुरोऽल्पकालं नियमं दधत् यः ।
आद्ये विमाने जिनदत्तसंगादहो सुपर्वर्द्धिमलंचकार ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे त्र्यशीतितमं व्याख्यानम् ॥ ८३ ॥

साहसं धृत्वा वदति स्म—'हे भद्र ! त्वं भवकृतपापमालोचय'। तेनापि स्वपापे प्रोक्ते चौर्यादिप्रत्याख्यानं कारितं। "भो भद्र ! एकत्वान्यत्वभावनया क्षणार्धेन पापानि क्षयं यान्ति। त्वं सर्वजीवान् मैत्रीभावेन पश्य। अमुं नमस्कारमंत्रमापदुद्धारकं संस्मर। अहं जलार्थं गच्छामि"। चौरः प्राह—'हे कृपानिधे ! अनेन प्रत्याख्यानेन मंत्रेण च मम पापं यास्यति ?'। श्रेष्ठी प्राह—

"कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च। अमुं मंत्रं जपित्वा च तिर्यञ्चोऽपि दिवं गताः॥१॥"

इत्यादिना तमुपदिश्य स्वयं जलार्थं गतः। चौरः समाधिना तत्समये आयुर्बन्धनान्मृत्वा सौधर्मे सुरो जातः। इदं सत्संगतेः फलं। यतः—

महानुभावसंसर्गः कस्य नोन्नतिकारकः। गंगाप्रविष्टं रथ्यांबु त्रिदशैरपि वन्द्यते॥ १॥

श्रेष्ठ्यपि जलं गृहीत्वागतः। तं मृतं दृष्ट्वा स्वयं राजविरुद्धं ज्ञात्वा शक्रावतारचैत्ये कायोत्सर्गेण तस्थौ। भटैः सर्ववृत्तं नृपाय निवेदितं। राज्ञादिष्टं—'भो भटाः ! एष गोमुखो व्याघ्रो विडंब्य चौरवन्मार्यः'। सुभटाश्चैत्यस्थं श्रेष्ठिनं नृपादेशं प्रोचुः। स ध्यानान्न चलितः। तदा विडंबयामासुः। तावत्स लोहखुरदेवो भवप्रत्ययावधिना धर्मगुरोरीदृशीमवस्थां दृष्ट्वा ध्यायति स्म—

"अक्षरस्यापि चैकस्य पदार्धस्य पदस्य च। दातारं विस्मरन् पापी किं पुनर्धर्मदेशिनम्॥ १॥"

इति विचार्य प्रतिहारवेषं कृत्वा देवेन दण्डैर्हता मूर्छां प्रापुर्योधाः। ततः पौरचतुरंगचमूवृतो नृप आगतः। तदा देवे-

तरामर्गलां दत्वा पूर्वगुप्तीकृतधूमस्तीव्रः प्रसारितः । धूमव्याकुलस्य चौरस्याश्रुपातेन नयनस्थमञ्जनं गलितं । सर्वैः स प्रत्यक्षं दृष्टः । स बद्धा राज्ञोऽग्रे नीतः । चौरो दध्यौ—"मम भोजनं गृहं च द्वयमपि विधिवशाद्गतं । यतः—

निदाघे दाहार्तस्तरलतरतृष्णाकुलमनाः, सरः पूर्णं दृष्ट्वा त्वरितमुपयातः करिवरः ।
तथा पंके मग्नस्तटनिकटवर्तिन्यपि यथा, न नीरं नो तीरं द्वयमपि विनष्टं विधिवशात् ॥ १ ॥

अन्यच्च—

मणिमंत्रौषधैः स्वस्थाः सर्पदष्टा विलोकिताः । नृपैर्दृष्टिविषैर्दष्टो न दृष्टः पुनरुत्थितः ॥ २ ॥"

ततो नृपाज्ञया सुभटास्तं चौरं पुरचत्वरे भ्रमयित्वा शूलिकामुपरि निचिक्षिपुः । तदनु नृपभटाः प्रच्छन्नं पश्यन्ति—'कः पुमाननेन सह वार्तां करोति ? तस्य पार्श्वे सर्वपौरहृतवित्तं शोधनीयं' इति बुद्ध्या ते स्थिताः । अत्र प्रस्तावे जिनदत्तश्रेष्ठी तन्मार्गे समागतः । चौरमाक्रन्दन्तं प्रत्युवाच—

"चौर्यपापद्रुमस्येह वधबन्धादिकं फलम् । जायते परलोकेषु फलं नरकवेदना ॥ १ ॥

यदुपार्जितं कर्म तदन्यथा न स्यात् । प्रान्तेऽपि मनसि अस्तेयादिव्रतमंगीकुरु" । चौरेणोक्तं—

शृगालैर्जग्धितौ पादौ काकैर्जर्जरितं शिरः । पूर्वकर्म समायातं सांप्रतं किं करोम्यहम् ॥ १ ॥

अत्र मम पानीयं शीघ्रं पायय" । श्रेष्ठी राजविरुद्धं ज्ञात्वा तूष्णीं स्थितः । पुनरपि दीनालापैस्तथालापितो यथा

क्षुधाक्रान्तो द्विप्रहरे भोजनाय स्वसद्मनि गच्छन्नृपसौधादागतसरसरसवत्याः सुगन्धमाघ्राय दध्यौ—‘अञ्जनविद्यया मम किमपि न गहनं । गत्वा करोमि राजभोजनं’ । ततोऽदृश्यविद्यया राज्ञा सहैकपात्रे भुंक्त्वा स्वगृहे गतः । एवं प्रतिदिनं स रसगृद्ध्या तत्र समागच्छति । यदुक्तम्—

अक्खाणरसणी कम्माण मोहणी तह वयाण बंभवयं ।
गुत्तीण य मणगुत्ती चउरो दुक्खेण जिप्पंते ॥ १ ॥

बहुदिनै राजा कृशांगो जातः । तं प्रति सचिवः प्रोचे—“स्वामिन् ! किं युष्माकमन्नेऽरुचिर्जातास्ति ? । यतः—

अन्नेन गात्रं नयनेन वक्त्रं न्यायेन राज्यं लवणेन भोज्यम् ।
धर्मेण हीनं बहु जीवितव्यं न राजते चन्द्रमसा निशीथम् ॥ १ ॥

यद्वा काचिच्चिन्तास्ति ? । यतः—

चिन्ता दहति शरीरं शरीरस्था सदापि हि । रुधिरामिषौ ग्रसते नित्यं दुष्टपिशाचिवत् ॥ १ ॥”

राजा प्राह—“हे अमात्य ! महदाश्चर्यं । अहं प्रत्यहं द्विगुणं भुञ्जामि । कोऽप्यञ्जनसिद्धो मया सह भुंक्ते । तेन नारकवदुदराग्निर्न शाम्यति” । श्रुत्वेति मंत्रिणा महानसस्थाने सर्वत्र शुष्कार्कपुष्पाणि क्षिप्तानि । समये तानि पदाघातेन चूर्णीभूतानि वीक्ष्य भूपोक्तं निश्चित्य द्वितीयेऽह्नि पदाभ्यामर्कसुमनश्चूर्यमाणध्वनिना चौरं ज्ञात्वा द्वारे दृढ-

वित्तान्युपार्जयन् सप्तक्षेत्र्यामनेकधा व्ययं कुर्वन् प्रौढीं परां प्राप । तदनु सर्वोऽपि लोकः शुद्धद्रव्यमेतस्येति कृत्वा व्यवसायाद्यर्थं गृह्णाति । प्रवहणे पूरणेऽपि तस्यैव द्रव्यं निर्विघ्नवृत्त्यर्थं क्षिप्यते । कालेन तन्नाम्नापि सर्वत्र ऋद्धिरिति कृत्वाऽद्यापि प्रवहणचालनावसरे 'हेलासा' इति लोकाः कथयन्ति । एवं शुद्धव्यवहारे वञ्चकश्रेष्ठिदृष्टान्तः ।

एवं शुद्धव्यवहार इहापि प्रतिष्ठाहेतुः । तस्मान्न्याय एव परमार्थतोऽर्थोपार्जनोपायोपनिषत् ।

हेलेसा इति भाषाभिरुच्चै रटन्ति नाविकाः । क्रमेणैति तरीव्यूहस्तत्तेजोऽस्तेयसत्त्वजम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे द्व्यशीतितमं व्याख्यानम् ॥ ८२ ॥

---

## ॥ अथ त्र्यशीतितमं व्याख्यानम् ॥ ८३ ॥

अथैतद्व्रताकरणे फलमाह—

परस्वं तस्करो गृह्णन् वधबन्धादि नेक्षते । लकुटं दुग्धपायीव बिडाल उपरिस्थितम् ॥ १ ॥

व्याधधीवरमार्जारादिभ्यश्चौरोऽतिरिच्यते । निगृह्यते नृपतिभिर्यदसौ नेतरे पुनः ॥ २ ॥

कंठ्यौ । भावार्थस्तु ज्ञातेनानेन ज्ञेयः—

श्रेणिकपितृप्रसेनजिन्नृपपुरे राजगृहे लोहखुरस्तस्करो वर्तते । एकदा स द्यूतक्रीडां कृत्वा याचकेभ्योऽजितं द्रव्यं दत्वा

एकदा वध्वा जर्ता पृष्टः—'कस्मात्तातो युष्मानपरनाम्नाकारयति ?'। तेन सर्वोऽपि व्यवसायव्यतिकरोऽकथि। वध्वा धर्मार्थिन्या श्रेष्ठी विज्ञप्तः—"एवं पापव्यवहारादिनाऽर्जितं वित्तं न धर्मकर्मणे नापि जोगाय न च गृहे तिष्ठति। ततो न्यायार्थार्जनं श्रेयः"। श्रेष्ठिनोक्तं—"कथं निर्वाहो न्यायेन व्यवहरतः? लोकः कोऽपि न विश्वसिति"। वध्वोक्तं—"धनं स्वल्पमपि व्यवहारशुद्धं बहु मिलति तिष्ठति च सुक्षेत्रोप्तस्वल्पबीजवद्बहुफलं, निःशंकतया जोगादिप्राप्तिश्च।

यतः—धनं यच्चार्ज्यते किंचित्कूटमानतुलादिभिः। नश्येत्तन्नैव दृश्येत तप्तपात्रेऽम्बुबिन्दुवत् ॥ १ ॥

अन्नाएण विढत्तं दव्वमसुद्धं असुद्धदव्वेण। आहारो वि असुद्धो तेण असुद्धं सरीरं पि ॥ २ ॥

देहेण असुद्धेणं जं जं किज्जइ कयावि सुहकिच्चं। तं तं न होइ सहलं बीअं पि व ऊसरनिहित्तं ॥ ३ ॥

यदि न प्रत्ययो जवति तदा षण्मासीं यावत्कूटवृत्तिपरिहारेण न्यायवृत्त्या व्यवसायं कुरुध्वं"। ततो वधूवचसा श्रेष्ठी तथा चक्रे। षण्मास्या पञ्चसेरमितं स्वर्णमर्जितं। सत्यव्यवहारेण लोकाः सर्वेऽपि तस्यैव हट्टे गृह्णन्ति ददति च। लोके कीर्तिः सर्वेषां विश्वासश्च जातः। स्वर्णमानीय वध्वाः समर्पितं। वधूः प्राह—'परीक्षा क्रियते'। ततः पंचसेरी कारिता। चर्मवेष्टितां स्वनामांकितां च कारयित्वा दिनत्रयं राजपथे मुमोच। केनापि न दृष्टा। ततो लात्वा क्वापि महाजलाशये क्षिप्ता। मत्स्येन गिलिता। मत्स्योऽपि कस्यचिज्जालिकस्य जाले पपात। पाटनानन्तरं निर्गता पंचसेरी। नाम्नोपलक्ष्य श्रेष्ठिनो हट्टे मात्सिकेनानीता। किञ्चिद्दत्वा गृहीता च। वधूवचसि प्रत्ययो जज्ञे। ततः शुद्धव्यवहारपरत्वेन बहु-

न चैवं श्रावकस्य युज्यते । एतद्व्रतपालनं च व्यवहारशुद्ध्यैव स्यात् । यदुक्तं—

**परार्थग्रहणे येषां नियमः शुद्धचेतसाम् । अन्यायान्ति श्रियस्तेषां स्वयमेव स्वयंवराः ॥ १ ॥**

गृहिणामन्यायोपार्जितं वर्षादिप्रान्ते राजचौराग्निजलादिभिरपि ह्रियमाणत्वान्न चिरस्थायि नोपभोगपुण्यचयादिहेतुरपि । उक्तं च

**अन्यायोपार्जितं वित्तं दश वर्षाणि तिष्ठति । प्राप्ते चैकादशे वर्षे समूलं च विनश्यति ॥ १ ॥**

वंचकश्रेष्ठिवत् । तच्चेदम्—

क्वापि सन्निवेशे हेलाकः श्रेष्ठी । हली भार्या । भालकः सुतः । श्रेष्ठी मधुरालापकूटतुलामानवपुराणादिमीलनरसभेदचौराहृतादानादिपापव्यवहारप्रकारैर्मुग्धग्रामिकलोकवञ्चनवृत्त्या धनार्जकः । स हि परवञ्चनया परमार्थतः स्वात्मवञ्चक एव । यतः—

**कौटिल्यपटवः पापा मायया बकवृत्तयः । भुवनं वंचयमाना वञ्चयन्ते स्वमेव हि ॥ १ ॥**

मिलितमपि द्रव्यं वर्षप्रान्तेऽन्यायायातत्वाच्चौराग्निराजादिभिरपह्रियते । क्रमेण सुतो यौवने ग्रामान्तरवासिसुश्रावकश्रेष्ठिसुतां परिणायितः । वधूर्गृहे समागता । श्राविका ज्ञातधर्मा सा । श्रेष्ठिनो हट्टं गृहासन्नं । श्रेष्ठी ग्रहणदानाद्यवसरे पूर्वसंकेतितपंचपोष्करत्रिपोष्करमानकसंबन्धेन सुतस्यापि पंचपोष्करत्रिपोष्कररूपापरनाम्नाह्वानं करोति । क्रमेण लोकैर्ज्ञातवृत्तान्तैः वञ्चकश्रेष्ठी इति नामान्तरं दत्तं श्रेष्ठिनः ।

**चौरश्चौरार्पको मंत्री भेदज्ञः काणकक्रयी । अन्नदः स्थानदश्चेति चौरः सप्तविधः स्मृतः ॥ १ ॥**

अत्रापि भंगसापेक्षनिरपेक्षाभ्यामतिचारः प्रथमः । तथा तच्छब्देन स्तेनपरामर्शः । स्तेनैरानीतमाहृतं कुंकुमादि तस्या-दानं ग्रहणं मूल्यादिना । इदं हि लोभदोषात् काणकक्रयेण गृह्णन् चौरो व्यपदिश्यते । तदित्थं चौर्यकरणाद्व्रतभंगः, वाणिज्यमेव मया विधीयते, न चौर्यमित्यध्यवसायतो व्रतनिरपेक्षत्वाभावादभंगः, इत्युभयरूपत्वादतिचारो द्वितीयः । वैरुध्ये राज्ये इति शेषः । वैरिराज्ये राज्ञाऽननुज्ञाते वाणिज्यार्थं गामुकं गमनशीलं । उपलक्षणत्वाद्राजनिषिद्धदन्तलो-होपलादिवस्तुग्रहणं । यद्यपि स्वस्वामिनाऽननुज्ञातस्य "सामीजीवादत्त तित्थयरेणं तहेव य गुरूहिं" इत्यनेन तत्कारिण-श्चौर्यदंडयोगेनादत्तादानरूपत्वाद्व्रतभंग एव, तथापि विरुद्धगमनं कुर्वता मया वाणिज्यमेव कृतं न चौर्यमिति बुद्ध्या लोके च चौरोऽयमिति व्यपदेशाभावादतिचारतेति तृतीयः । तथा प्रतिरूपं सदृशं व्रीहीणां पलंजिः घृतस्य च वसातैलमि-त्यादिना क्रिया व्यापारः स चतुर्थः । तथा मीयतेऽनेनेति मानं सेतिकादि हस्तादि च, तस्यान्यत्वं हीनमानेन ददाति अधिकेन च गृह्णातीति पञ्चमः, प्रतिरूपक्रियामानान्यत्वं परवञ्चनेन परद्रव्यादानाद्भंग एव, केवलं खात्रखननादिकं चौर्यं प्रसिद्धं मया तु वणिक्कुलोपजीवनमेवेति बुद्ध्या सापेक्षत्वादतिचारः । एते स्तेये संश्रिताः त्याज्या इत्यर्थः ।

यद्वा कूटतुलामानकरणे तस्करत्वं प्रकटमेव । यदाह—

**तौल्येन किंचित्कलया च किंचिन्मापेन किंचित्तुलया च किंचित् ।**
**किंचिच्च किंचिच्च समाहरन्तः प्रत्यक्षचौरा वणिजो भवन्ति ॥ १ ॥**

विमानमारोप्य सभार्योऽत्रानीय मुक्तः । स च स्वस्थानं गतः" । इति श्रुत्वा विस्मितः श्रीचौलुक्यः प्राह—'धन्यस्त्वं यः संकटेऽपि स्वनियमं न जहौ' । इत्यभिनंद्य गुरुवन्दनाय जगाम । तदा गुरुः प्राह—

"अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः । त्वं तु संतोषतो मुञ्चन् सत्यं राजपितामहः ॥ १ ॥"

राजर्षिधर्मार्हतनीतिराघवचौलुक्यसिंहाद्यभिधानमुद्वहन् ।
नित्यं परस्वग्रहणे पराङ्मुखो जीयाज्जिनेन्द्रागमवित्कुमारपः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे एकाशीतितमं व्याख्यानम् ॥ ८१ ॥



## ॥ अथ द्व्यशीतितमं व्याख्यानम् ॥ ८२ ॥

अथैतद्व्रतस्य पञ्चातिचारानाह—

स्तेनानुज्ञा तदानीतादानं वैरुद्ध्यगामुकम् । प्रतिरूपक्रियामानान्यत्वं च स्तेयसंश्रिताः ॥ १ ॥

स्तेनाश्चौरास्तेषामनुज्ञा चौर्यक्रियायां प्रेरणा । यथा—"किमद्यकल्ये यूयं निर्व्यापारास्तिष्ठथ । यदि शंबलादिकं नास्ति भवतां तदहं प्रयच्छामि । युष्मदानीतवस्तुनो यदि विक्रायको नास्ति, तदाहं विक्रेष्ये । इत्यादिवचोभिः अथवा स्तेयोपकरणानां कुशिकादीनामर्पणादिना चौराणां स्तेयक्रियायां व्यापारणं । एवं करणे सोऽपि चौर एव । उक्तं च नीतिग्रन्थे—

यूयं निर्गमनोपायं श्रृणुत—

अस्त्यत्रासन्ने पञ्चशृंगो द्वीपः । तत्र सत्यसागरो राजा । तेनचैकदा मृगयागतेन हता सगर्भा मृगी। मृगोऽपि तद्दुःखेन
मृतः । तद्दृष्ट्वा सत्यसागरेणामारिपटहो दापितः । अद्य पूर्वप्रेषितकीरमुखाद्युष्मदापदं ज्ञात्वाहं नौकेशो नाविकः प्रहितो-
ऽस्मि । एतस्य गिरेः कटके द्वारमस्ति । तेन प्रविश्य गिरेः परत्र पार्श्वे गम्यते । तत्र पुरमुद्धसमस्ति । तत्र जिनचैत्ये
गत्वा पटहो वाद्यते । तस्य रवेण त्रस्ताः सर्वे भारंडविहगाः समुड्डयन्ते । तेषां पक्षवायुना नावो मार्गे पतिष्यन्ति इति"।
तदनु तत्र गमनेऽनिच्छकानन्यान् वीक्ष्य दयापरः कुबेर एव गतः । तेन नाविकोक्तमनुष्ठितं तत्र गत्वा । निर्गतानि सह-
स्रप्रवहणानि । भृगुपुरे च प्राप्तानि क्षेमेणेति । ततोऽग्रतः कुबेरस्वरूपं नावगच्छामि । अतो हे नृप ! विंशतिकोटिस्वर्णं
अष्टकोटिरूप्यं सहस्रतुलामितरत्नानि च त्वं गृहाण" । नृपस्तद्द्रव्यं तृणवदवगणय्य प्राह—"हे मातः ! तव पुत्रोऽचि-
रेण समेष्यति । इदं सर्वद्रव्यं धर्मे यथेच्छं वा वितर" । इत्याश्वास्य यावन्निर्गच्छति, तावता स कुबेरो विमानारूढः सजा-
यः समाययौ । जातं महदाश्चर्यं । मातरं नृपं च प्रणम्य स्थितं तं राजा पृष्टवान्—'हे साहसधन ! तस्मिन् शून्यपुरे
किमभूत् ?' । स जगाद—"स्वामिन् ! तत्र पुरे एकत्र प्रासादे मयैका कन्या दृष्टा । तयोक्तं—अहं पातालकेतुविद्याध-
रस्य पुत्री । कन्यकां मां विद्धि । स च मत्पिता मांसलोलुपतया कियता कालेन मार्जारीं भक्षितवान् । तेन पलाशन-
व्यसनो राक्षसोऽजनि । तेन सर्वे नागरा भक्षिताः । संप्रति त्वाहाराय क्वापि गतोऽस्तीति । अत्रावसरे तन्माता पिता
चागत्य मे कन्यां ददौ । मयापि पाणिमोचने मांसादिनियमं स मार्गितः, प्रबोधितश्च । तेन स्वीकृतव्रतेन विद्याधरेणाहं

अयुतानि गवामष्टौ पञ्च पञ्च शतानि च । हलहट्टालिसद्मानां यानपात्रानसामपि ॥ २ ॥
पूर्वजोपार्जिता लक्ष्मीरियत्यस्तु गृहे मम । इतो निजभुजोपात्तां करिष्ये पात्रसात्पुनः ॥ ३ ॥

एवमृद्धिपत्रवाचनेन हृष्टः सविस्मयो राजा गृहांगणे यावदागच्छति, तावता कुबेरमाता गुणश्री रोदनं कुर्वती दृष्टा—

"पुत्त कुबेर गुणायर गउंसि तं कत्थ देहि पडिवयणं। हा वच्छ पिच्छ लच्छी तए विणा जाइ रायहरं ॥१॥"

तच्छ्रुत्वा राजा दध्यौ—

"नरकान्तं भवेद्राज्यमित्यार्यैर्यदुदीर्यते । तन्नूनं रुदतीवित्तसमाकर्षणपाप्मना ॥ १ ॥"

ततः कुबेरस्य मातृजायाद्याक्रन्दं श्रुत्वा प्राह—"हे मातः ! किं शोचसि ? यतः—

आकीटाद्यावदिन्द्रं मरणमसुमतां निश्चितं बान्धवानां,संबन्धश्चैकवृक्षोषितबहुविहगव्यूहसांगत्यतुल्यः
प्रत्यावृत्तिर्मृतस्योपलतलनिहितप्लुष्टबीजप्ररोहप्राया प्राप्येत शोकात्तदयमकुशलैः क्लेशमात्मा मुधैव॥१॥

इत्युपदिश्य प्राह—'कः समायातः ?' । गुणश्रीराह—'वामदेवनामा मित्रमयं' । राज्ञा तद्वृत्तं पृष्टः स आह—"देव !
इतो भृगुपुरे गत्वा पञ्चपञ्चशतनरोपेतपञ्चशतप्रवहणैः प्राप्तः परकूलं । तत्र चतुर्दशकोटिसुवर्णलाभो जातः । ततः
प्रतिनिवृत्तानां प्रतिकूलवायुना पञ्चशतप्रवहणानि विपमगिरिवलयसंकटे पातितानि । पूर्वमपि कस्यचित्पञ्चशतप्रवह-
णानि तत्र सन्ति । तेषामनिर्गमनेन श्रेष्ठी विपन्नः। अत्रान्तरे समागतः कश्चिन्नौवित्तो नावारूढः, भणितं च तेन—"भो

कार्यं पृष्टं, तदा ते प्राहुः—'प्रतिवर्षं द्वासप्ततिलक्षद्रव्यायो भवति'। इति ज्ञात्वा नृपो रुदतीद्रव्यं मुमोच। पाटितं च पट्टकपत्रं। इति चौर्यवृत्तिमृतस्वपरिहारे पटहो दापितोऽष्टादशसु देशेषु।

एकदा सभायां चत्वारो महाजनमहत्तरा एत्य नृपं नत्वोपविष्टाः। विलक्षांस्तान् दृष्ट्वा राजाह—'को हेतुरद्य सभागमे ? किमिदं वैलक्ष्यं ! किं कोऽपि पराभवः ?'। तदनु महाजनाः प्राहुः—

"कुतः प्रजानां राजेन्द्र ! त्वयि शासति मेदिनीम्। पराभवोऽसमाधिर्वा जायते जनवत्सल ॥ १ ॥

परमत्रत्यो गुर्जरपुरवणिग्मूर्धन्यः कुबेरश्रेष्ठी समुद्रे समागच्छन् कथाशेषतां प्राप्तः इति तत्परिच्छदो निःपुत्र इत्याक्रन्दन्नस्ति तद्गृहद्रव्यं राजा यद्यात्मसात्कुरुते तदा तस्यौर्ध्वदेहिकं क्रियते। तद्धनमगणितमस्ति"। ततो राजाह—"भो महाजनाः! मया मृतस्वग्रहणं प्रत्याख्यातं, परं तस्य गृहसारं विलोकयामः"। इत्युक्त्वा महत्तरादिपरिवृतो राजा तद्गृहमाजगाम। तदनु सौवर्णकलशश्रेणि क्वणत्किंकिणीक्वाणवाचालितदिग्मंडलं कोटिध्वजावलिहस्तिशालातुरंगशालाविराजितं कुबेरगृहं विलोक्य महत्तरदर्शितं स्फटिकशिलानिर्मितं चैत्यालयं गतः। तत्र चैत्ये मरकतमणिमयं श्रीनेमिजिनं नत्वा राजसौवर्णकलशस्थालारात्रिकमंगलदीपादि देवपूजोपकरणादि वीक्ष्य कुबेरदत्तव्रतटिप्पनीं वाचितवान्। तत्र परिग्रहप्रमाणे स्वर्णस्य षट् कोटयस्तारस्याष्टतुलाशतानि महार्हा दश मणयश्च।

कुंभखारीसहस्रे द्वे प्रत्येकं स्नेहधान्ययोः। पञ्चायुतानि वाहानां सहस्रमपि हस्तिनाम् ॥ १ ॥

आहृतं केनचित् हृत्वा दत्तं । स्थापितं न्यासीकृतं केनचित्स्वपार्श्वे भूमौ वा । नष्टं क्वापि गतमिति स्वामिना यन्न ज्ञायते । विस्मृतं क्वापि मुक्तं स्वामिना यन्न स्मर्यते । पतितं गच्छतो वाहनादेर्भ्रष्टं । स्थितं स्वामिपार्श्वे यदवस्थितं । एवंविधं परकीयं धनं नाददीत कचिद्द्रव्यक्षेत्राद्यापद्यपि सुधीः प्राज्ञः । यत उक्तं च—

द्वे कार्ये कुलीन इह प्राणान्तेऽपि करोति न । परद्रव्यापहारं च परस्त्रीपरिरंभणम् ॥ १ ॥
स्वर्णादिकेऽप्यन्यधने पुरःस्थे सदा मनीषा दृषदीव येषाम् ।
संतोषपीयूषरसेन तृप्तास्ते द्यां लभन्ते गृहमेधिनोऽपि ॥ २ ॥

इत्यस्तेयं तृतीयमणुव्रतं ज्ञेयमित्यर्थः । अत्रार्थे परमार्हतनृपप्रबन्धोऽयम्—

पत्तने नृपस्य पुरः श्रीहेमसूरयोऽदत्तादानव्रतं स्तुवन्ति—

"अयं लोकः परलोको धर्मो धैर्यं धृतिर्मतिः । मुष्णता परकीयं स्वं मुषितं सर्वमप्यदः ॥ १ ॥"

इत्युक्ते राजा प्राह—

"निष्पुत्रो म्रियते यो यस्तस्य तस्य हृताशया । पुत्रतां प्रतिपद्यन्ते नृपाः कष्टं धनाशया ॥ १ ॥
तदद्यप्रभृति मुक्तमेव मयाऽदत्तस्वं मृतस्वं च । भवतु मे तृतीयव्रताङ्गीकारः" । इति प्रपद्य राजपर्षदि पञ्चकुलमा-

सम्यग्जगवदुक्तं धर्ममाकर्ण्य स्वं जन्म सफलं करोमि । यतः—

न देवं नादेवं न गुरुमकलंकं न कुगुरुं, न धर्मं नाधर्मं न गुणपरिणद्धं न विगुणम् ।
न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं, विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ १॥"

इति ध्यात्वा श्रीवीरान्तिके गत्वेति देशनां शुश्राव—

"यातनां विविधामत्र परत्र नरके गतिम् । दौर्भाग्यं च दरिद्रत्वं लभते चौर्यतो नरः ॥ १ ॥"

इति जिनवाणीं श्रुत्वा गृहीतद्वादशव्रतः श्रेणिकस्य पुरः स्ववंशनामकर्मादि निवेद्य गिरिकन्दरासु निहितं धनं पौराणां दत्वा स्वयं प्रव्रज्य दिवं ययौ ।

यां दंभतो वीक्ष्य सुरर्द्धिमत्र तां सत्यां दिदृक्षूत्सुक (क्षुः स च) रौहिणेयकः ।
श्रीवीरवाग्भिः कृतचौर्यसंयमाद्दिव्यामदंभां सुरसंपदं दधौ ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभेऽशीतितमं व्याख्यानम् ॥ ८० ॥

## ॥ अथैकाशीतितमं व्याख्यानम् ॥ ८१ ॥

पुनरेतद्व्रतं प्रस्तूयते—

आहृतं स्थापितं नष्टं विस्मृतं पतितं स्थितम् । नाददीतास्वकीयं स्वमित्यस्तेयमणुव्रतम् ॥ १ ॥

'हा मयेदं श्रुतमिति मां धिक्' इत्यादि चिन्तयन्नग्रे गच्छन् परितो भ्रमद्भिर्नृपपुरुषैः कथमपि रौहिणेयो धृत्वा राज्ञोऽग्रे नीतः । राज्ञा वध आदिष्टेऽभयः प्रोचे—'स्वामिन्नायं हन्तव्यः' । 'कस्त्वं' इति राज्ञोक्ते सोऽवोचत्—"हे देव ! शालिपुरवासी दुर्गचन्द्राह्वः कौटुंबिकः कार्येणागतः । पुरीरोधे सति भयभीरुरहं वप्रं लंघयित्वा व्रजन्नारक्षकैर्धृतः । नाहं चौरोऽस्मि" । इति वदन् स कारागृहे क्षिप्तः । शालिग्रामे नृपेण तदवदातशुद्ध्यर्थं चरः प्रेषितः । तन्मुखादंभविजृंभितं विज्ञायाभयेन स्वसौधे दोगुंदुकसुखतुल्येऽप्सरोनिभाभिः रमणीभिः परिवृते पल्यंके पायितमद्यः परिधापितचीनांशुकः स शायितः । क्रमेणोत्तीर्णमद्यस्तां दिव्यर्द्धिमवलोक्य विस्मितः सोऽभयादिष्टैर्नरैः जय जय नंदेति मंगलानि भणद्भिरभाणि—"हे देव ! अत्र विमाने त्वं सुरोऽभूः, एते वयं तव दासाः, एताश्चाप्सरसस्तव पत्न्यः, आभिः सह रमस्व, इदं पुण्यैर्ढौकितं" । इत्युक्त्वा यावत्ते संगीतं कुर्वन्ति तावदेकेन काञ्चनदंडेन द्वाःस्थेनागत्याभिदधे—"देव ! प्रथमं स्वर्गस्थितिं कृत्वा सर्वं प्रेक्ष्यं । योऽत्र देवः संजायते स चादौ प्राक्तने सुकृतासुकृते वदति" । इत्यभिहिते चौरो दध्यौ—"लोहखुरात्मजो रौहिणेय एवाहं, न चाहं मृतः, तेनेदं कैतवजालं रचितमस्ति" । इति स्मृतपूर्वाकर्णितगाथार्थेन महीमिलितचरणान् स्वेदमलिनकरणान् म्लानमालान् तान् सनिमेषेक्षणमालान् वीक्ष्य प्रोचे—"मया पूर्वस्मिन् जन्मनि सप्तक्षेत्र्यां धनमवापि, कदापि चौर्यादिकं न कृतं, दानादिधर्मत इदं प्राप्तं" इत्यादि श्रुत्वा मंत्रिणो जगुः—'ईदृशेनापि दंभेन यो न वञ्चितः स मोच्यः' इति नीतिपरेण मंत्रिणा राजाज्ञया स मुमुचे । ततः "धिक् पितुरादेशं । हा येनेयन्तं कालमहं वंचितः । ईहां विनाप्येकशो वीरवाक्यश्रवणेनेह भवेऽप्ययद्को गुणो जातः, परभवेऽप्यनेनैव भावी च । अथ

करादत्तं । एवं श्राद्धस्य अनन्तकायाजक्ष्यादि तीर्थकरादत्तं । सर्वदोषविमुक्तमपि यद्गुरूननभिमंत्र्य भुज्यते तद्गुर्वदत्तमित्यर्थः । इह स्वाम्यदत्तस्याधिकारः । सूक्ष्मं च स्वामिनमननुज्ञाप्य तृणलेष्टादिग्रहणरूपं, बादरं च येन जने चौरव्यपदेशः स्यात्तत्स्थूलमपि कथ्यते । चौर्यबुद्ध्या क्षेत्रखलादावल्पस्यापि ग्रहणं स्थूलमेव । आभ्यां प्रकाराभ्यामाद्यं स्वाम्यदत्तं द्विधा मतं । तत्र श्राद्धस्य सूक्ष्मे यतना, स्थूलात्तु निवृत्तिरेवेत्यर्थः ।

अथैतद्व्रतफलमाह—

वधादप्यधिकं स्तेयं तेनैको यद्विपद्यते । धने हृते पुनः प्रौढक्षुधैव सकलं कुलम् ॥ १ ॥
त्यक्तचौर्यो रौहिणेयो यदाप सुरसंपदम् । प्राणान्तेऽपि परस्वं तन्न हर्तव्यं विवेकिना ॥ २ ॥

श्लोकोक्तसंबन्धोऽयम्—

वैभारगिरिकन्दर्यां वसन् प्रान्तकाले लोहखुरेण पित्रा वीरवचनश्रवणे कारितनिषेधो रौहिणेयस्तस्करो राजगृहं स्वैरं मुमोष । एकदा चौर्यं विधाय स्वपुरमागच्छन्नन्तराले जिनसमवसरणं मत्वेति दध्यौ—'कर्णौ पिदधामि, येन वीरवाक्यश्रवणं पितुराज्ञाभंगश्च न स्यात्' । तथा कृत्वा गच्छतस्तस्य पादे कंटको लग्नः । तेन गन्तुमशक्तः स यावदेकेन पाणिना पादात् कंटकं निष्कासयति, तावत्तस्य भागवती वाणी कर्णे न्यपतत्—

"अणिमिसनयणा मणकज्जसाहणा पुप्फदामअमिलाणा ।
चउरंगुलेण भूमिं न छिबिंति सुरा जिणा बिंति ॥ १ ॥"

शः शकला बभूवुः, नृपस्योपरि पुष्पवृष्टिः पपात । 'हे सत्यवादिन् चिरं जय' इति वदन् प्रत्यक्षीभूय यक्षो जगौ— 'भो नृप तवाद्यैव जिनयात्रां कारयामि, एतद्विमानमलंकुरु' । ततस्तदारूढो जिनयात्रामर्चां च कृत्वा यक्षसान्निध्येन शत्रुं विजित्य स्वराज्यं बुभुजे । क्रमात्प्रव्रज्य दिवं ययौ ।

हंसेति शब्दो वरितो विहंगैरपां ह्रदे तेन मुदं दधुस्ते ।
श्रीहंसराजेत्यभिधां दधत् यः सत्योदधेरप्सरसौख्यमाप(सुरालये सौख्यमवाप सत्यात्)॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ षष्ठस्तंभे एकोनाशीतितमं व्याख्यानम् ॥ ७९ ॥

---

## ॥ अथाशीतितमं व्याख्यानम् ॥ ८० ॥

इति द्वितीयव्रतमुक्तं । इदानीं तृतीयव्रतभेदानाह—

तदाद्यं स्वामिनादत्तं जीवादत्तं तथा परम् । तृतीयं तु जिनादत्तं गुर्वदत्तं तुरीयकम् ॥ १ ॥
सूक्ष्मबादरभेदाभ्यामाद्यादत्तं द्विधा मतम् । सूक्ष्मे हि यतना कार्या श्राद्धः स्थूलं च संत्यजेत् ॥ २ ॥

यद्वस्तु धनकनकादिकं स्वामिना न दत्तं तदाद्यं स्वाम्यदत्तं । यत्फलादि सचित्तं स्वकीयं भिनत्ति तदपरं द्वितीयं जीवादत्तं । यतस्तेन फलादिजीवेन न खलु निजप्राणास्तस्मै दत्ताः। गृहस्थेन दत्तमाधाकर्मादि तीर्थकराननुज्ञातत्वात् साधोस्तीर्थ-

विचिन्त्येत्येवं जगाद–'भो अहं मार्गभ्रष्ट इहायातः'। पुनस्तेन तद्बुद्धिः प्रोक्ता, तदापि स आह–'भो अहं हंसः'। इति
नृपवाक्यं श्रुत्वा क्रोधेनाचष्ट—'भो विकल किमन्यदुत्तरं ददासि?'। पुनः क्षितीशेनोक्तं–'यत्र त्वं मम मार्गं दर्शयिष्यसि,
तत्र यास्यामि'। ततो बधिरोऽयमिति ज्ञात्वा स व्याधो निराशो गतः। राजाग्रे संचरन् एकं साधुं वीक्ष्य नमस्कृत्याग्रतश्चलित-
स्तावच्छस्त्रपाणी भिल्लौ नृपमित्यूचतुः–"भो अस्मत्स्वामी चौर्याय निःसरन्नन्तरे मुनिं दृष्ट्वाऽशकुनं विज्ञाय पश्चाद्वलितः। तेनावां
तं मुनिं हन्तुं प्रेषितौ स्वः। भो ब्रूहि, स क्वापि दृष्टः?"। स राजा संप्रत्यसत्यं सत्यायत इति विचिन्त्योचे–"वाममार्गेण स यतिर्व्रज-
त्यस्ति, परं युवयोर्न मिलिष्यति, कुत्रापि वायुवदप्रतिबन्धत्वात्"। ततस्तावितस्ततो विलोक्य गतौ। ततो भूपः शुष्क-
पर्णाद्यशनं कृत्वा रात्रौ स्वापाय यावत्तिष्ठति तावद्बहूनामित्यालापं शृणोति स्म—'तृतीयदिने संघं लुंटयिष्यामः'।
श्रुत्वेति सचिन्तः क्ष्मापः क्षणं स्थितस्तदा कैश्चित्सुभटैरित्येवं पृष्टः—"भो भवता चौरा दृष्टाः? वयं गोधिपुरेशस्य भृत्या
राज्ञा संघरक्षायै प्रेषिताः स्मः"। इति निशम्य राज्ञा चिन्तितम्—"यदि चौरान् दर्शयामि तदैते तान् घ्नन्ति, न वच्मि,
तदा चौरैः संघो लुप्यते। अत्र मम किं वक्तुं युक्तं" इति विमृश्य प्राह—"मया तु न दृष्टाः, परं क्वापि भवद्भिरेव
वीक्ष्याः। यद्वा किं तेषां विलोकनेन? संघस्यैव रक्षणं कुरुध्वं"। तच्छ्रुत्वा ते संघे गताः। तदा चौरा एत्य तं जगुः—
"भोः! त्वयाऽस्माकं जीवितं रक्षितम्। अतः परं चौर्यं हिंसां च न करिष्यामः। अमुं लाभं त्वं गृहाण"। इत्युक्त्वा
दस्यवो गताः स्वस्थले। हंसनृपोऽग्रे गच्छन् कैश्चिदश्ववारैरिति पृष्टः—'भो अस्मत्स्वामिवैरी हंसः क्वापि त्वया दृष्टः, तं
विनाशयिष्यामः'। सोऽनृतभयादाह—'अहमेव हंसः'। ततः क्रुधा ते राज्ञः शीर्षे खड्गं यावन्मुञ्चन्ति तावत्खड्गस्य शत-

श्रुत्वेति धर्मे नियमं सूनृतस्य जग्राह । अन्यदा नृपो रत्नशृंगगिरौ चैत्रीयात्रोत्सवे श्रीऋषभस्वामिनं नंतुं स्वल्पपरिच्छदवृतश्चचाल । यावदर्धमार्गे गतस्तावदेकेन चरेण त्वरितमागतेन राजेति विज्ञप्तः—"देव ! त्वयि यात्रायै चलिते सति सीमालभूपालेन बलात्त्वत्पुरं गृहीतं । अथ यद्युक्तं तत्कुरु" । समीपस्थैर्भटै राजा विज्ञप्तः—'स्वामिन् ! पश्चाद्गम्यते' । राजा तानेवं जगौ—

"संपदो विपदोऽपि स्युः पूर्वकर्मवशाद्भृशम् । मूढा मुदं विषादं वा तत्संपत्तिषु तन्वते ॥ १ ॥
लभ्यभाग्यं परित्यज्य जिनयात्रामहोद्यमम् । नेदानीं भाग्यलभ्याय युक्तं राज्याय धावनम् ॥ २ ॥
धनेन हीनोऽपि धनी मनुष्यो यस्यास्ति सम्यक्त्वधनं महार्घ्यम् ।
धनं भवेदेकभवे सुखार्थं भवे भवेऽनन्तसुखं सुदृष्टेः ॥ ३ ॥"

इत्युक्त्वा राजाऽग्रत एव चलितः छत्रधारकं विना सर्वोऽपि परिकरः स्वगृहसारां कर्तुं गतः । राजा निजालंकारान् सुगुप्तान् कृत्वा छत्रधरवस्त्राणि परिधाय यावदग्रे याति तावत्कोऽपि मृगस्त्वरितं राज्ञः पश्यत एव वल्लीनिकुञ्जे प्रविष्टः । तदैवैकः किरातो धनुषि चापं संधाय मृगमनुधावन् नृपमेवमभाषिष्ट—'कथय त्वं मम, मृगः कुत्र यातः ?' । श्रुत्वा नृपो मनस्यचिन्तयत्—

"जन्तूनामहितं यत्तन्न वाच्यं सत्यमप्यहो । सुधीभिर्धीप्रपञ्चेन बोधनीयोऽथ पृच्छकः ॥ १ ॥"

शास्त्रे सर्वाणि यानि तपोजपज्ञानदर्शनादिधर्मकृत्यानि, तेषामाद्यं मुख्यं सूनृतमेवोक्तं प्रभुभिः । श्रूयते हि—कस्यापि श्रावकस्य सूनुर्निर्धर्मा पित्रा प्रसह्य गुरुपार्श्वे नीतो धूर्ततया गुरूक्तान् द्वादशव्रतादिनियमान् प्रतिबुद्ध इव सादरं प्रतिपद्य नियमदार्ढ्यार्थं गुर्वादिभिः प्रशस्यमानः प्राह—'एतेष्वेको द्वितीयव्रतनियमो मम मुत्कलो दुष्पालत्वाद्गृहस्थस्य'। एतावता सर्वमिदमसत्यमेव मयोक्तमिति तस्याशयः । ततश्चायोग्योऽयमित्युपेक्षितो गुरुपित्रादिभिः ।

तत्सत्यं विना कुतीर्थिकैः प्रोक्तो धर्मः, स निरर्थकः । यदाहुः—

चार्वाकैः कौलिकैर्विप्रैः सौगतैः पंचरात्रिकैः । असत्येनैव विक्रम्य जगदेतद्विडंबितम् ॥ १ ॥
अल्पादपि मृषावादाद्रौरवादिषु संभवः । अन्यथा वदतां जैनीं वाचं त्वहह का गतिः ॥ २ ॥
अहो पुरजलस्रोतःसोदरं तन्मुखोदरम् । निस्सरन्ति यतो वाचः पंकाकुलजलोपमाः ॥ ३ ॥
ज्ञानचारित्रयोर्मूलं सत्यमेव वदन्ति ये । धात्री पवित्रीक्रियते तेषां चरणरेणुभिः ॥ ४ ॥

अत्रार्थे हंसनृपस्योदन्तः । स चायम्—

राजपुर्यां हंसो राजोपवनश्रियं प्रेक्षितुं गतः । वने तत्रैको मुनिर्दृष्टः । तत्पुरो निषण्ण इदं शुश्राव—

"सच्चं जसस्स मूलं सच्चं विस्सासकारणं परमम् । सच्चं सग्गद्दारं सच्चं सिद्धीइसोवाणं ॥ १ ॥
दुग्गंधो पूइमुहो अणिट्ठवयणो अ फरुसवयणो य । जलएलमूअमम्मण अ(एए) लिअजंपणे दोसा ॥२॥

रादानं विदन्नस्मि। पर कस्य पुरो वच्मि!"। एवं तयोः परस्परं मर्म नृपराज्ञ्या श्रुतं। तया तयोरुक्तं कृतं। राजा नीरुक् कृतः। वल्मीकाहिं विनाश्य निधानमाददे।

इति स्वपरसमयनिन्द्यं गुह्यप्रकाशनं केषांचिदपि न करोति, स एव व्रती ज्ञेयः।

तथाऽन्यमुद्राक्षरादिना कूटस्यार्थस्य लेखनं कूटलेखः। यथाऽपरमात्रा कुणालं प्रति नृपलिखितपत्रस्योपरि कूटलेखः कृतः। तेन महाननर्थो जातश्चेति। आह—कूटलेखश्च स्थूलासत्यत्वात्कथं न तत्करणे व्रतभङ्गः? इति चेत्सत्यं, परमसत्योक्तिर्मया प्रत्याख्याता, इदं तु लेखनं इत्यभिप्रायेण मुग्धबुद्धेः व्रतसापेक्षस्यातिचार एव। यद्वाऽनाभोगादिनाऽतिचारता। इति पञ्चमोऽतिचारः।

पञ्चातिचारा ननु हेयरूपा मालिन्यदा ये नियमे द्वितीये।
प्रोक्ता जिनेन्द्रैर्व्रतधर्मिणस्तान् त्यक्त्वा गुणं गृह्णत सत्यकान्तम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभेऽष्टसप्ततितमं व्याख्यानम् ॥ ७८ ॥

॥ अथैकोनाशीतितमं व्याख्यानम् ॥ ७९ ॥

अथ सत्यवादिनः स्तौति—

सर्वेषां धर्मकार्याणामाद्यं सत्यमुदीरितम्। तद्विना गदितो धर्मः कुतीर्थिकैर्निरर्थकः ॥ १ ॥

तेन स्त्रीषु कः प्रेमावतारः यतः—

वंचकत्वं नृशंसत्वं चञ्चलत्वं कुशीलता । एते नैसर्गिका दोषा यासां तासु रमेत कः ॥ २ ॥”

श्रुत्वेति मौनमाधाय स्थिता । अन्यदा श्वश्रूवध्वोः कलहे जाते परस्परमर्मोद्घाटनविषये वध्वा तच्चरित्रं प्रोक्तं । तदाकर्ण्य सा दध्यौ—“अहो ! इयन्तं कालं पत्या मन्मर्म मनसि रक्षितं । अथ तु मंत्रभेदः कृतः । तेनालं मम प्राणैः” इति कंठपाशेन प्राणान् जहौ । तद्वीक्ष्य श्रेष्ठ्यपि तदकरोत् श्रेष्ठिसुतस्तु तां मुक्त्वा वैराग्याद्दीक्षां लेभौ ।

इत्यादि श्रुत्वा परगुह्यानि ये पिदधति ते धन्याः । यतः—

कप्पासह सारिच्छा विरला जणणी जणंत । निअअंगह कड्ढेविजण परगुज्झह ढंकंति ॥ १ ॥

तथा चोक्तं लौकिकशास्त्रेऽपि—

ये परस्परमर्माणि प्रवदन्ति नराधमाः । ते स्वयं निधनं यान्ति वल्मीकोदरसर्पवत् ॥ १ ॥

तथाहि—पृथ्वीपुरनृपः सुन्दरनामा । स चान्यदा वक्रशिक्षितेनाश्वेनारण्ये निन्ये । श्रमवशादश्वादुत्तीर्य तरोरधः सुप्तः । तस्य मुखे एको लघुसर्पः प्राविशत् । ततः स्वगृहे आगतः । जठरस्थाहिपीडया करपत्रमोचनाय गंगां प्रति गच्छन् वर्त्मन्येकस्य न्यग्रोधस्याधस्तात्सुष्वाप । तदा वायुभक्षणाय मुखे निर्गतमहिं वल्मीकान्निःसृतो भुजंगो बभाषे—“रे पापिष्ठ ! निर्गच्छैतस्योदरात् । किं करोमि ? सकांजिकेन कटुकचिर्भटीमूलेन भवद्विनाशोपायं जानन्नसि । परं स कोऽपि नास्ति, यत्पुरो वदामि” । इति श्रुत्वोदरसर्पस्तमवादीत्—“अहमपि विलक्षिप्तेनोष्णतैलेन भवन्तं निहत्य निधे-

भंगरूपत्वेनातिचारतैव। इति तृतीयोऽतिचारः। यत्कस्यचित्संबद्धमाकारेंगितचेष्टाभिर्ज्ञात्वाऽन्यस्मै तस्य कथनं गुह्यभाषणं। गुह्यं गूहनीयं न सर्वस्मै यत्कथनीयं तत्। यथा—एते हीदमिदं राजविरुद्धादिकं मंत्रयन्ते। गुह्यभाषणे गुह्यमाकारादिना विज्ञानाधिकृत एव गुह्यं प्रकाशयति, मंत्रभेदे तु स्वयं मंत्रं भिनत्तीत्यनयोर्भेदः। इति चतुर्थोऽतिचारः। मंत्रादिभेदे दोषमाह—

**गुह्यवाक्यं न वक्तव्यं कदाचिदपि धीधनैः। यन्मर्मकथनाज्झे दुःखभाक् स्त्रीमृतौ वणिक् ॥ १ ॥**

तथाहि—वर्णपुरे पुण्यसारःश्रेष्ठी। स चैकदा स्वप्रियामानेतुं गतः श्वशुरगृहे। तामन्यासक्तां हठादादाय वर्त्मनि व्रजन् तृषार्तः कूपात्पयः कर्षंस्तया स्वपतिः कूपे क्षिप्तः। सा प्रणश्य स्वगृहे गता। पित्रा पृष्टाऽभाषिष्ट—"मत्पतिश्चौरैर्लुंटितो मारितो भविष्यति न वेति। अहं तु नंष्ट्वा समागां"। इत्युक्त्वा सा गृहे स्वैरं तस्थौ। पुण्यसारोऽपि स्तोकजलकूपात्पान्थैः कर्षितः। स पुनः श्वशुरौकसि गतः। तदा पथिस्वरूपं पृष्टोऽभाषिष्ट—'तस्करैरहं जीवन् मुक्तः, इयं तु नष्टाऽत्रागात् तद्वयं जातं'। इति मर्मपिधानेन पत्यौ प्रकामं प्रमुदितां तामादाय गृहे समेतः। क्रमात्प्रीतिपरयोस्तयोः सुतः समजनि। एकदा भुञ्जानस्य तस्य भाजने वातुलोछालितं रजः पतत्तया निजोरोजांचलेन न्यवारि। तदा च स्मृतपूर्वचरित्रः स मनाक् स्मितमकरोत्। सुतेन विजने हास्यकारणं पृष्टः कथमपि तच्चरित्रं पुत्रस्य पुरः प्रोचिवान्।

एकदा स्वजातिगर्वं कुर्वन्तीं स्वस्त्रियं रहसि मातुश्चरित्रं स्माह—"धिग्भवतीनां जातिं। यतः—

**नितम्बिन्यः पतिं पुत्रं पितरं भ्रातरं क्षणात्। आरोपयन्त्यकार्येऽपि दुर्वृत्ताः प्राणसंशये ॥ १ ॥**

तत्तो वेगवईए देहे वियणा समुट्ठिया तिव्वा । पाउब्भूया अरई सूणं वयणं च सहस त्ति ॥ १ ॥

ततः सा संजातपश्चात्तापा मुनेः पार्श्वे गत्वा सर्वलोकसमक्षं स्वनिन्दापरा 'मया मुधैव तदालं साधोर्दत्तं मात्सर्येण' इति क्षमयित्वा पादयोः पतिता । ततः शासनदेवतया सज्जीकृता । धर्मं श्रुत्वा दीक्षां लात्वा सौधर्मे देव्यभूत् । ततश्च्युत्वा जनकसुता सीता जाता । कूटालदानादत्र सा कलंकं प्राप्तेति । मुनिस्तु लोकैर्महितः ।

इत्थं सदा निन्द्यमवर्णवादं त्यजन् परेषां श्रवणं च तस्य ।
जगज्जनश्लाघ्यतया गृहस्थः सद्धर्मयोग्यो भवतीह सम्यक् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे सप्तसप्ततितमं व्याख्यानम् ॥ ७७ ॥

॥ अथाष्टसप्ततितमं व्याख्यानम् ॥ ७८ ॥

शेषातिचारानेवाह—

विश्वासेन स्थिता ये च तेषां मंत्रप्रकाशनम् । अन्यस्मै भाषणं गुह्यं कूटलेखश्च पञ्चमः ॥ १ ॥

विश्वासेन स्थिता उपगता ये मित्रकलत्रादयस्तेषां मंत्रो विचारस्तस्य प्रकाशनं भेदः तस्यानुवादरूपेण सत्यत्वाद्यद्यपि नातिचारता, तथापि मंत्रितार्थप्रकाशनजातलज्जादितो मित्रकलत्रादेर्मरणादिसंभवेन परमार्थतोऽस्यासत्यत्वात् कथंचि-

विमृशन्ती तामेव निन्दाकर्त्रीं ब्राह्मणीं जग्राह। सद्यः श्यामा कुब्जा कुष्ठिनी च जाता। सर्वेऽपि तां निनिन्दुः। इत्यया स्वेच्छया लोकान् प्रत्यूचे—

"कुंभनितम्बयुगलेन किं विष्ठं बालकस्य जननी व्यपोहति।
कंठतालुरसनाभिरुज्झता दुर्जनेन जननी व्यपाकृता ॥ १ ॥"

तदेवं सकलजनगोचरोऽवर्णवादो न श्रेयान्, किं पुना राजामात्यदेवगुरुसंघादिषु। तत्रापि साध्वाद्यवर्णवादेन भवान्तरे नीचैर्गोत्रकलंकाद्यापत्तिः। यतः—

"निव्वित्तिऊण तिव्वं पावं पावेइ सो दुहमणंतं। सीयाइव पुव्वभवे मुणि अब्भक्खाणदाणाओ ॥ १ ॥"

अत्र भरते मृणालकुंरुपुरे श्रीभूतिपुरोधाः। तस्य भार्या सरस्वती। तयोः पुत्री वेगवती। एकदा तत्रैकः साधुरागात्। उद्याने प्रतिमया तिष्ठति। लोको भक्त्या तं ववन्दे। साधुपूजां वीक्ष्यालीकमात्सर्येण वेगवती लोकानाह—"एष पाखंडी मुंडः किं पूज्यते द्विजान्मुक्त्वा। एष मया रमण्या सह रममाणो दृष्टः" इति कूटमालं दत्तवती। ततः साधोः पूजादिभ्यो मुग्धा निवृत्ताः। मुनिस्तु तज्ज्ञात्वा "मा जिनशासनेऽपभ्राजना मन्निमित्तं भूयादिति" मनसिकृत्य 'यावदेतत्कलंकं नोत्तरति तावन्मया न भोज्यं' इति प्रतिज्ञाय कायोत्सर्गेण स्थितः। ततः शासनदेवतासांनिध्यात्—

१ कुंभशकलद्वयेन. २ विष्टाम्. ३ अधःकृता.

इति द्वितीयोऽतिचारः । तथा—

अभ्याख्यानात्खरो भावी श्वा वा भवति निन्दकः । परभोक्ता कृमिर्भावी कीटो भवति मत्सरी ॥१॥

दूषणं मतिरुपैति नोत्तमी माध्यमी स्पृशति भाषते न च ।
वीक्ष्य पार्श्वमथ भाषतेऽधमा रारटीति सहसाधमाधमा ॥ २ ॥

सहसाऽभ्याख्यानोपरि संबन्धोयं लौकिकस्य—

सुग्रामे सुन्दरश्रेष्ठी दाता लोकप्रियः । यतः—

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः । आगच्छन् वांछ्यते लोकैर्वारिदो न तु वारिधिः ॥ १ ॥

एका तु प्रातिवेश्मिकी ब्राह्मणी तं श्रेष्ठिनं निन्दति—"वैदेशिका अत्रागच्छन्ति, असौ धर्मीति तेऽस्य स्वद्रव्यं निक्षिपन्ति, ते तु विदेशे म्रियन्ते, इत्यस्योत्सवः, ज्ञातोऽयं धर्मीति"। एकदा निशि कार्पटिकः क्षुधार्त आयातः। तदा च किञ्चिद्भोज्यं पेयं च नाभूत्। स तु दाता दानव्रती आभीरीगृहात् तक्रमानीय तमार्पयत्। सोऽम्रियत, तत्तक्रमुद्घाटमुखायामाभीरीशिरःस्थायां स्थाल्यां शकुनिकाधोधृतमहाहिमुखगलितगरलमिलितमासीत्। प्रातस्तं मृतं दृष्ट्वा वृद्धा जहर्ष—'दृष्टं दातुश्चरितं ? विषदोऽयं ग्रन्थिकालोभात्' अत्रान्तरे सा कार्पटिकहत्या भ्रमन्ती चिन्तयति स्म—"कस्याहं लगामि? दाता विशुद्धात्मा, सर्पोऽप्यज्ञः परवशश्च, शकुनिका सर्पाशना, आभीर्यज्ञा, तत्को मया ग्राह्यः? एवं

न सत्यमपि भाषेत परपीडाकरं वचः । लोकेऽपि श्रूयते यस्मात्कौशिको नरकं गतः ॥ १ ॥

कौशिकाख्यो लौकिकर्षिः सत्यवादीति प्रसिद्ध्या प्रसिद्धस्तपश्चरति । एकदा चौरा ग्रामं मुषित्वा मुनेरग्रे भूत्वा वने नष्टाः । पृष्ठे व्याहरिकाः समेताः । मुनिं दृष्ट्वा प्राहुः—'त्वं सत्यवादित्वात् सत्यं कथय, चौराः क्व मार्गे गताः?' । स दध्यौ—

"अशुद्धकथने शुद्धं पृच्छतां पातकं महत् । यतो मृग्यापि नादायि पापमेतत्स्वमूर्धनि ॥ १ ॥"

इति स्मृत्युक्तज्ञातं विचार्य तेन चौरस्थानं दर्शितं । पश्चात्तैस्ते विनाशिताः । ऋषिर्नरकं गतः ।

तथैकः परमर्षिर्वने तपस्तपति । अन्यदा व्याधैस्त्रासिता मृगास्तदग्रे भूत्वा वने गताः । तैः पृष्टं—'मृगाः क्व गताः?' तेन दयावतोक्तं—'या पश्यति, न सा ब्रूते । या ब्रूते, न सा पश्यति' । श्रुत्वेति ते दध्युः—'अयं लोकबहिर्मुखः किं वेत्ति ?' इत्युक्त्वान्यत्र गताः । मृगाश्चोद्धरिताः । ऋषिः स्वर्गतः ।

ततः प्रमादात् परपीडनोपदेशोऽतिचारः, यद्वा युद्धार्थालीकप्रपञ्चशिक्षणं । इति प्रथमोऽतिचारः ।

अनालोच्य सहसाऽभ्याख्यानमसद्दोषाध्यारोपणं यथा—चौरस्त्वं पारदारिको वेत्यादि न कस्यचिन्नरस्य वाच्यं । अन्ये तु रहस्याभ्याख्यानं पठन्ति । व्याचक्षते च—रह एकान्तस्तत्र भवं रहस्यं । अभ्याख्यानमसदध्यारोपणमभिशंसनं च । यथा—यदि वृद्धा स्त्री ततस्तस्यै कथयति—'अयं तव भर्ता तरुण्यामतिप्रसक्तः' । अथ तरुणी, तत एवमाह—'अयं ते भर्ता मुग्धासु रक्तः' । अथवा दंपत्योः पुरः रहसि भवं चेष्टितं, तस्याभिशंसनं हास्यादिना, न तु तीव्रसंक्लेशेन । यदाह—

सहसब्भक्खाणाई जाणंतो जइ करेज्ज तो भंगो । जइ पुण णाभोगाईहिंतो तो होइ अइयारो ॥ १ ॥

असत्यवचनं प्राज्ञः प्रमादेनापि नो वदेत्। श्रेयांसि येन भज्यन्ते वात्ययेव महाद्रुमाः ॥ १ ॥

त्वं तु रुष्ट इहैकभवं सुखं हंसि। सत्यव्रते तु भग्नेऽनन्तभवदुःखं भवति"। इति श्रुत्वा राजा तं शिक्षां ददौ—'त्वं द्वितीयव्रतमिवान्यान्यपि व्रतानि गृहाण'। तेन तथा कृतं। ततो जीर्णकोशाध्यक्षं निर्धाट्य नृपेण श्रीकान्तस्तत्पदे स्थापितः। स क्रमाच्छ्रैष्ठेयशाब्दो बभूव।

अंगीचकारैकयमं दृढात्मधीः श्रीकान्तचौरो जिनदासवाक्यतः।
अत्रैव तेनेष्टफलं जनैः स्तुतं लब्धं ततः स्वीकुरुतादिदं व्रतम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठस्तंभे षट्सप्ततितमं व्याख्यानम् ॥ ७६ ॥

## ॥ अथ सप्तसप्ततितमं व्याख्यानम् ॥ ७७ ॥

अथैतद्व्रतस्य पञ्चातिचारानाह—

एतद्व्रतप्रपन्नस्य त्याज्यं मिथ्योपदेशनम्। अभ्याख्यानमनालोच्य व्याचक्ष्यं नैव कस्यचित् ॥ १ ॥

मिथ्योपदेशनमसदुपदेशः। गृहीतव्रतस्य परपीडाकरवचनमसत्यमेव। यथा—वाह्यन्तां खरोष्ट्रादयः, हन्यन्तां दस्यवः इति वा। सद्भ्यो हितं सत्यमिति व्युत्पत्त्याऽवितथमपि परहिंसात्मकं वाक्यमनृतमेव। यदाहुः—

इत्थं सत्यं वदन्त्यां तस्यां प्रथमे सत्येऽङ्कुरो द्वितीये पत्राणि तृतीये शाखाः चतुर्थे मञ्जर्यः पञ्चमे च पचेलिमानि चूतफलानि जातानि । सर्वेऽपि सन्यास्तां प्रशंसुः । तेषां पारणं जातं । इति ।

सत्यव्रतं लौकिकशास्त्रेऽपि वर्णितं । अतो हे श्रीकान्त त्वमपि सत्यं व्रतं गृहाण । तेन स्वीकृतं । जिनदासो व्याजहार—'आजीवितं जीवितमिव त्वया पाल्यं व्रतं' । स प्राह—

"राज्यं यातु श्रियो यान्तु यान्तु प्राणा विनश्वराः । या मया स्वमुखेनोक्ता वाचा मा यातु शाश्वती ॥१॥"

एकदा रात्रौ चौर्यार्थं निःसृतः । मार्गे श्रेणिकाभयौ मिलितौ पप्रच्छतुः—'कोऽसि त्वं' । तेनोक्तं—'आत्मीय एव' । मंत्रिणोक्तं—'क्व यासि ?' । तेनोक्तं—'स्तैन्यार्थं नृपकोशे यामि' । पुनः पृष्टं—'कुत्र वससि ?' । चौरेणोक्तं—'अमुकपाटके' । 'किं नाम ते' ? । 'श्रीकान्तः' । ताभ्यामचिन्ति—'आश्चर्यमिदं, यः चौरः स एवं कथं वक्ति ?' । इति विचार्याग्रे चलितौ । चौरस्तस्मात्पेटिकां गृहीत्वा व्रजन् पुनर्मिलितः पृष्टः—'किं किं गृहीतं त्वया ?' । 'इमामेकां रत्नमञ्जूषां लात्वा व्रजामि स्वगृहे' । इति वाक्यं निशम्य तौ स्वौकसि गतौ । प्रातर्भाण्डागारिकेण किंचिदितस्ततः कृत्वा पूत्कृतं । तलारक्षो ह्वकितः । नृपेण कोशेशस्य पृष्टं—'किं गतं' । तेनोक्तं—'पेटादशकं' । ततो मिथो नृपमंत्रिणौ आस्यं विलोक्य स आकारितः पृष्टश्च—'रात्रौ त्वया किं किं गृहीतं ?' । सोऽपि रात्रिमिलिताविमावेवेति निश्चित्याह—"स्वामिन् ! मदुक्तं किं विस्मृतं ? युष्माकं पश्यतामेव मयैका जीविकार्थं पेटा गृहीता" । राजा वक्ति—'त्वं सत्यं कथं वदसि ? मत्तः कथं न बिभेषि ?' । स आह—"राजन् !

तथाहि—हस्तिनापुरे युधिष्ठिरनृपोद्याने माघमासेऽष्टाशीतिसहस्राणि मुनीनां आजग्मुः । राज्ञा भोजनार्थमभ्यर्थिताः प्राहुः—'हे धर्मपुत्राद्याम्रफलैर्भोजनं कारयसि, तदा भुञ्जामो नान्यथा'। श्रुत्वेति चिन्तापरो दध्यौ—'कथं तानि लभ्यन्तेऽकाले?'। इतश्च नारदर्षिरभ्येत्य प्राह—"राजेन्द्र! यदि भवत्पट्टराज्ञी द्रौपदी सभासु पंच सत्यान्यभिधत्ते, तदाऽकालेप्याम्रफलानि प्रादुर्भवन्ति"। इति तदंगीकृते सभायां समेतां द्रौपदीं नारदोऽवादीत्—

"पञ्चतुष्टिः सतीत्वं च संबन्धेनातिशुरूता। पत्यौ प्रेम मनस्तुष्टिः सत्यपञ्चकमुच्यताम् ॥ १ ॥"

इत्युक्ते मृषोक्तिभीरुः कृष्णा सती स्त्रीगुह्यं प्राह—

सुरूपाः पञ्च योद्धारः पांडवाः पतयो मम। तथापि कुरुते वाञ्छा मनः षष्ठेऽपि नारद ॥ १ ॥
रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः। तेन नारद नारीणां सतीत्वमुपजायते ॥ २ ॥
सुरूपं पुरुषं दृष्ट्वा पितरं भ्रातरं सुतम्। योनिः क्लिद्यति नारीणामामपात्रमिवांभसा ॥ ३ ॥
वर्षा कष्टतरः कालो जीवनात्स तु वल्लभः। तेन नारद नारीणां भर्ता भर्तेति वल्लभः ॥ ४ ॥
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः। नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ५ ॥
अग्निकुंभसमा नारी घृतकुंभसमो नरः। तेन नारद नारीणां संसर्गं परिवर्जयेत् ॥ ६ ॥"

"निगोदेष्वथ तिर्यक्षु तथा नरकवासिषु । उत्पद्यन्ते मृषावादप्रसादेन शरीरिणः ॥ १ ॥
पारदारिकदस्यूनामस्ति काचित्प्रतिक्रिया । असत्यवादिनः पुंसः प्रतिकारो न विद्यते ॥ २ ॥"

अतस्तद्व्रतं ग्राह्यं, येन सुखसंपत्तिः स्यात् । अत्रार्थे श्रीकान्तश्रेष्ठिज्ञातम्—

राजगृहे श्रीकान्तेभ्यो दिने व्यापारं रात्रौ च चौर्यं करोति । एकदा द्वादशव्रतचतुर्दशनियमधारी जिनदासश्राद्ध आगतः । श्रीकान्तेन भोजनाय निमंत्रितः । स च वक्ति—'यस्य वृत्तिर्न जाने, तद्गृहे भुक्तिं न कुर्वे'। स प्राह—'शुद्धं व्यापारं करोमि'। जिनदासेनोक्तं—'न त्वद्गृहे व्ययानुसारी व्यापारः, ततः सत्यं वद'। ततः सोऽन्यत्र परगुह्यावावदूकं तं निर्धार्य निजचौर्यस्य वार्तामुवाच । तदनु तेनोक्तं—'त्वद्गृहे न भोक्ष्येऽहं, ममापि त्वदाहारानुयायिनी बुद्धिर्भवति'। तेनोक्तं—'स्तैन्यं विना यत्त्वं वदेस्तदहं धर्मं कुर्वे'। जिनदासोऽनृतव्रतफलमाह—

एकत्रासत्यजं पापं पापं निःशेषमन्यतः । द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥ १ ॥
शिखी मुंडी जटी नग्नश्चीवरी यत्तपस्यति । सोऽपि मिथ्या यदि ब्रूते निन्द्यः स्यादन्त्यजादपि ॥ २ ॥
असत्यमप्रत्ययमूलकारणं० ॥ ३ ॥ विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं० ॥ ४ ॥ सिंदूरप्रकरे·

अचिन्त्यमाहात्म्यकरं महान्तो वचः समीचीनमुदीरयन्ति ।
यल्लोकवाक् पांडुसुतप्रियायां सत्यं वदन्त्यां फलति स्म चूतम् ॥ ५ ॥

धश्चक्रे । एवमनार्या वेदाः प्रवृत्ताः । आर्यांस्तु वेदान् माणवकनिधेरुद्धृत्य प्रतिदिनभोज्यमानश्राद्धपठननिमित्तं श्रीतीर्थंकरस्तुतिरूपान् श्राद्धधर्मप्रतिपादकांश्च भरतश्चक्री चक्रे ।

वसुक्षितीशद्विजपिप्पलादयः, असत्यवाक्याद्धमां गतिं गताः ।
निधाय तेषां हृदये निदर्शनं, हितेप्सुभिस्त्याज्यमसत्यजल्पनम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ षष्ठे स्तम्भे पञ्चसप्ततितमं व्याख्यानम् ॥ ७५ ॥

---

## ॥ अथ षट्सप्ततितमं व्याख्यानम् ॥ ७६ ॥

अथासत्यभेदानाह—

असद्भूतोद्भावनं चाद्यं द्वितीयं भूतनिह्नवम् । अर्थान्तरं तृतीयं च गर्हानाम चतुर्थकम् ॥ १ ॥
एतच्चतुर्विधासत्यं श्वभ्रादिदुःखहेतुकम् । ज्ञात्वानृतव्रतं ग्राह्यं येन सौख्याद्यवाप्नुयात् ॥ २ ॥

असद्भूतोद्भावनं यथा—सर्वगत आत्मा, श्यामाकतंदुलमात्रो वा । भूतनिह्नवं यथा—नास्त्यात्मा, नास्ति पुण्यं, नास्ति पापं चेत्यादि । अर्थान्तरं यथा—गामश्वमभिदधतः । गर्हानाम तुर्यं, तत्त्रिविधं, एकं सावद्यव्यापारप्रवर्तनं यथा—क्षेत्रं खेटयेत्यादि । द्वितीयमप्रियकारणं यथा—काणं काणं वदतः । तृतीयमाक्रोशरूपं यथा—अरे निर्मुख । इत्याद्यसत्यं नरकादिदुःखनिमित्तं । यतो योगशास्त्रे—

कविः कपटपटुर्नव्यां राजलक्षणसंहितां कृत्वा सभान्तस्तथा व्याचख्यौ यथा लक्षणैः सगरः प्रकृष्टः स्यात्, मधुपिंग-
स्त्वपकृष्टः । ततः सर्वैर्नृपादिभिर्हस्यमानो ह्रिया निर्गतः । सगरस्तु कन्यया वृतः । ततो मधुपिंगः क्षुधा तपः कृत्वा
महाकालोऽसुरोऽजनि । तयोश्च तृतीयः पिप्पलादोऽपि मिलितः । तद्वृत्तान्तस्त्वेवम्—

सुलसासुभद्राख्ये परिव्राजिके द्वे जनविख्याते अभूताम् । तयोश्च सुलसा विशिष्यतमा विदुषी 'यो मां वादे जयति
तस्याहं शिष्य' इति पटहोद्घोषिणं याज्ञवल्क्यं परिव्राजकं वादे जित्वा स्वशिष्यीचक्रे । क्रमात्तस्यातिपरिचये सुलसाया
गर्भे जाते ज्ञाते च सुभद्रया सा निष्ठुरमुपालब्धा, प्रच्छन्नं च धृता । जातं पुत्रं पिप्पलस्याधस्त्यक्त्वा तौ निर्गतौ । प्रातः
सुभद्रया पुत्रस्तत्र दृष्टः । स च क्षुधितः पिप्पलफलं स्वयं मुखे पतितमास्वादितवान् इति पिप्पलाद इति कृतनामा सुभ-
द्रया पाठितः । तेन तस्याः पार्श्वे स्वजन्मवृत्ते श्रुते पित्रोः प्रद्वेषं वहन् वधार्थमनार्योऽनार्यान् वेदान् चकार । तेषु चैवं
प्ररूपणां चकार यदुत राजभिरश्वादिशान्तिनिमित्तं स्वर्गावाप्तये च पशुतुरगगजमनुष्यादिभिर्यागः कार्य इति । ततो
महाकालेनाचिन्ति—'यद्येतयोरुक्त्या राजादयो यागे हिंसां कुर्वन्ति तदा मृत्वा नरकं यान्तीति सगरादिनृपाणां मम
वैरनिर्यातना भवतीति" । ततस्तेनोक्तं—'युवां यज्ञे हिंसां प्रवर्तयतं, अहं सर्वत्र सान्निध्यं करिष्यामि' । ततोऽसुरेण
सर्वत्र रोगिणः कृताः । यत्र यत्र तौ हिंसात्मकं यागं कारयतः, तत्र तत्र सोऽसुरो रोगानुपशमयति । यज्ञहतांश्च पश्वा-
दीन् विमानस्थानमरीभूतान् साक्षाद्दर्शयति । तदनु सर्वेऽपि भृशं सादरास्तथा चक्रुः । एवं मनुष्यहिंसापि तैर्निःशूकैः
शनैः शनैः प्रवर्तिता । ततो मायया मोहयित्वा महाकालेन सभार्यः सगरोऽध्वरे जुहुवे । पिप्पलादेन च स्वपितृमातृमे-

॥ १६२ ॥

क्रमेण पर्वतो जनैस्तत्पदे स्थापितः। अभिचन्द्रनृपपदे तु वसुराजो जातः। एकदैकेन व्याधेन वने मृगोपरि बाणो मुक्तः स्खलितः। आगत्य हस्तस्पर्शेन निश्चिता स्फटिकशिला। ततो राज्ञोऽग्रे प्रोक्तं। राज्ञा आनाय्य रह आप्तजनैः स्वासनाधो निवेशिता। तत्रासि स्थितं वीक्ष्य लोकाः प्राहुः—'सत्यस्य महिमाऽयं' इति प्रसिद्धिर्जज्ञे।

एकदा नारदः पर्वतस्य मिलनार्थमागतः। तदासौ 'अजैर्यष्टव्यं अजैर्यष्टव्यं' एतत्पदस्यार्थश्छागैर्यागः कार्यः इति छात्राग्रे वक्ति। तदाकर्ण्य नारदेन निषिद्धः—

"त्रिवार्षिकाणि सस्यानि न हि जायन्त इत्यजाः। व्याख्याता गुरुणास्माकं किं न स्मरसि बान्धव ॥१॥"

तदा गर्वेण पर्वतो वक्ति—'यः कूटं वदति तस्य जिह्वा छिद्यते' इति प्रतिज्ञां कृत्वाह—'अत्र वसुः साक्षिकः'। ततः पर्वतमाता वसुराजस्याग्रे गत्वा वादवृत्तमाख्यत्। पुत्रदानं देहीति ययाचे। राजोवाच—'गच्छ मातस्त्वत्सुतपक्षं करिष्ये'। द्वितीयेऽह्नि तौ सपरिकरौ वसुपार्श्वं आगतौ। राज्ञा पर्वतस्य कूटसाक्ष्यं दत्तं। ततो देवतया शिलासिंहासनं चूर्णीकृतं। वसुर्नृपीठे पातितो मृत्वा नरकं गतः।

नारदस्तु स्तुतो देवैः सत्यात्स्वर्गं गतः क्रमात्। इति श्रुत्वा बुधैर्नित्यं कार्यः सत्यव्रतादरः ॥ १ ॥

वसुनृपसुता अपि देवतया निहताः। पर्वतकः पौरैर्धिक्कृत्य निर्वासितो महाकालासुरेण संगृहीतः। तत्संबन्धस्त्वयम्—अयोधननृपेण निजपुत्र्याः स्वयंवरे प्रारब्धे मात्रा कन्यायाः प्रच्छन्नं प्रोक्तं—'मद्भ्रातृव्यो मधुपिंग एव त्वया वरणीयः'। तच्च सर्वनृपमुख्यः सगरो रहः स्थितः स्वदूतीमुखतो ज्ञात्वा स्वपुरोहितं कन्यावरणोपायं पप्रच्छ। सोऽपि सद्यः

हणं कस्मान्न कृतं ?। सत्यं, उच्यते—कन्याद्यलीकानां लोकेऽप्यतिगर्हा जोगान्तरायद्वेषवृद्ध्यादयो दोषाः स्फुटा एवेति।
तथा न्यस्यते रक्षणायान्यस्मै समर्प्यत इति न्यासः सुवर्णादि, तस्यापहरणं महापापम्। तस्य चादत्तादानत्वे सत्यपि वचनस्यैव
प्राधान्यत्वान्मृषावादत्वं। तथा लन्यदेयविषये साक्षीकृतस्य लंचामत्सरादिना कूटसाक्ष्यप्रदानात् कूटसाक्षित्वं जवद्वये-
ऽप्यनर्थहेतुः, वसुराजस्येवाजशब्दार्थसाक्ष्ये। अत्रार्थे ज्ञातमिदम्—

शुक्तिमत्यां क्षीरकदंबकोपाध्यायपार्श्वे तत्पुत्रः पर्वतो नृपपुत्रो वसुर्द्विजपुत्रो नारदश्चैते त्रयोऽपि पठन्ति। अन्येद्युः
सौधमूर्ध्नि ते पठन्तः श्रान्ताः सुप्ताः। तदानीं व्योम्नि गच्छन्तौ द्वौ चारणर्षी मिथः प्रोचतुः—'एतच्छात्रत्रयमध्य एकः
स्वर्गगामी, द्वौ तु श्वभ्रगामिनौ'। तच्छ्रुत्वा पाठकस्तत्परीक्षार्थमेकैकं पिष्टताम्रचूडं दत्वा प्राह—'हे वत्साः! यत्र कोऽपि
न वीक्षते तत्रामी वध्याः'। ततो वसुपर्वतौ शून्यस्थाने हत्वागतौ। नारदस्तु विजने गत्वा दध्यौ—"इदं गुरुवाक्यं—
यत्र कोऽपि न पश्यति तत्रायं हन्तव्य इति। तत्स्थानं तु त्रिजगत्सु नास्ति सर्वज्ञानां सिद्धानां किमगम्यं, ज्ञानिनामगो-
चरं तद्वस्तु नास्त्येव। परं चायं मां पश्यति, अहं चामुं पश्यामीति। गुरुभिस्तु मम प्रज्ञां परीक्षितुमित्यादिष्टमस्ति"।
इति ध्यात्वाऽहतं तं लात्वा गतः। अध्यापकेनोक्तं—'मदुक्तं त्वया कथं न कृतं ?'। सोऽवक्—'जगवन्! हृदि विचा-
र्यताम्। युष्मदादिष्टं तत्सत्यापितं,' इत्युक्त्वा स्वाभिप्रायो ज्ञापितः। ततो गुरुभिः सदयत्वात् स्वर्गामी स ज्ञातः।
अपरौ नरकगामिनौ विज्ञाय चिन्तितं—

"किं तेन पाठितेनापि येनात्मा नरकं व्रजेत्। वैराग्यादित्युपाध्यायः प्राव्राजीद्गुरुसंनिधौ ॥ १ ॥"

## ॥ षष्ठस्तंभः ॥

### ॥ अथ पञ्चसप्ततितमं व्याख्यानम् ॥

अथ द्वितीयव्रतमाह—

**सूक्ष्मबादरभेदाभ्यां मृषावादो द्विधा स्मृतः । तीव्रसंकल्पजः स्थूलः सूक्ष्मो हास्यादिसंभवः ॥ १ ॥**

तत्र श्रावकस्य सूक्ष्मे मृषावादे यतना । स्थूलं तु त्याज्यमेव । लोकेऽप्यकीर्त्यादिहेतुत्वात् । तच्च बादरं कन्यालीकाद्यं । तदेवाह—

**अणुव्रतं द्वितीयं तद्वाच्यं यत्कापि नानृतम् । भूकन्यागोधनन्याससाक्षिष्वेव विशेषतः ॥ १ ॥**

**कन्यागोभूम्यलीकानि न्यासापहरणं तथा । कूटसाक्ष्यं च पंचेति स्थूलासत्यान्यकीर्तयत् ॥ २ ॥**

तत्र द्वेषादिभिरविषकन्यां विषकन्यां, सुशीलां दुःशीलां, व्यत्ययेन वा वदतः कन्यालीकं । उपलक्षणमेतत् सर्वस्यापि द्विपदस्यालीकस्य । एवमल्पक्षीरां गां बहुक्षीरां वदतः । इदमपि सर्वचतुष्पदस्योपलक्षणं । परसत्कां भूमिमात्मसत्कां, ऊषरक्षेत्रमनूषरं वा वदतो भूम्यलीकं । इदं च सर्वस्याप्यपदविषयस्योपलक्षणं । अत्राह—द्विपदचतुष्पदापदग्र-

वारणौ बभूवतुः । चन्द्रभूभुजोऽग्रेऽपि तौ युयुधाते । राज्ञान्यदा सुदर्शनः केवली पृष्टो देशनान्ते तयोर्वैरकारणमाचख्यौ । तच्छ्रुत्वा नृपोऽचिन्तयत्—'अहो विचित्रं कर्मनटैः कारितं भवनाटकं । रंको राजत्वं, राजा रंकत्वं, सुरोऽष्टादशसागरायुष्कः क्षणेन लंबकर्णत्वं श्वत्वमप्यश्नुते, श्वा च सुरत्वं । यतः—

यत्संश्रयन्ति नितरां गुरुमोहनिद्रां संसारकूपकुहरे निपतन्ति यच्च ।
पश्यन्ति सद्गतिपथं न हि यच्च सत्त्वा मिथ्यात्वमन्धतमसं खलु तत्र हेतुः ॥ १ ॥'

इत्यादिवैराग्येण स्वांगजं राज्ये न्यस्य प्रव्रज्यां लात्वा एकावतारी देवो जातः । गजौ तावाद्यनरके गतौ ।

देशाद्व्रतं येन गृहस्थभावे उत्कृष्टतस्तेन तदात्तमाद्यम् ।
सर्वेषु जीवेषु दयापरोऽसौ देवत्वमापद् हिमरश्मिसंज्ञः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पंचमस्तंभे चतुःसप्ततितमं व्याख्यानम् ॥ ७४ ॥

## ॥ समाप्तोऽयं पञ्चमस्तंभः ॥ ५ ॥

तदाकर्ण्य गुरुं प्रति गत्वोक्तं । गुरुस्तच्छ्रुत्वा नृत्यन् जहर्ष—'अहो परिमितजवैर्मे सिद्धिः । धन्यं सत्यं ज्ञानिवाक्यं' इत्युक्त्वाऽग्रे विजहार ।

हिंसां परित्यज्य स मात्सिकोऽपि क्षणेन ज्ञानं चरमं बभार ।
अतो व्रतानां धुरि तस्य लेख्यं नन्वेति तथ्यं न वचोग्रकीर्त्या ॥ १ ॥

इत्यादि गुरूक्तदेशनामाकर्ण्य सापराधानामपि जीवानां वधं निषेधयति स्म । राजादेशेन जङ्घो नेति व्रतं ज्ञात्वा तत्पुरनृपसेवां चकार । एकदा कानने नृपजनैश्चौरो रुद्धः । तदा नृपेणोचे—'हे शूर ! त्वमेनं दुर्धरचौरं व्यापादय' । चण्डेण गुरुं विना जन्तुहननियम उक्ते राजा हृष्टस्तं स्वांगरक्षकं चक्रे । क्रमाद्देशेशः कृतः ।

अथान्यदा चन्द्राग्रजः सूरो यौवराज्येनातृप्तो निशि शस्त्रेण पराङ्मुखसुप्तं पितरं जघान । राज्या राज्ञो घातं कृत्वा पलायमानो दृष्टः । एष राजघातको यातीति कोलाहलो जातः । राजा स्वपुत्रं ज्ञात्वेति दध्यौ—

"सौरभाय भवन्त्येके चन्दना इव नन्दनाः । मूलोच्छित्त्यै भवन्त्यन्ये वालका इव बालकाः ॥ १ ॥"

इति विमृश्य राजा सूरं देशतो निर्वास्यानायितं चन्द्रं राज्ये न्यवेशयत् । ततो घातार्त्तो नृपः सूरपुत्रे रौद्रध्यानयुक्तो मृत्वा चित्रको जातः । तद्वने सूरो भ्रमन्नागतः । पूर्ववैरतश्चित्रकेण स हतः भिल्लो बभूव । तस्मिन्नेव वने आखेटकं कुर्वन् पुनर्द्वीपिना हतः । सोऽपि चित्रकस्तत्किरातबन्धुभिर्जघ्ने । द्वावपि शूकरौ जातौ । मिथो वैरायमाणौ लुब्धकहतौ द्वौ

मीनानां तु वधारंभे छेदो जातो निजाङ्गुलेः। त्यक्त्वा शस्त्रेण हिंसां च जातो धीवर ऋद्धिनाक् ॥ २ ॥

पृथ्वीपुर एको धीवरः । तं प्रति स्वजनैर्जालादिकं समर्प्य मीनबन्धनाय सोऽनिच्छन्नपि कथमपि प्रेषितः । स मत्स्यान् लात्वागतः । स्वजनैर्निशितं शस्त्रं दत्तं । तच्छस्त्रेण मत्स्यवधं कुर्वन् स्वांगुल्याश्छेदो जातः । तद्वेदनाभिभूतो दध्यौ— 'धिगस्तु हिंसाप्रियजीवान् । यतः—'म्रियस्वेत्युच्यमानोऽपि' इत्यादि" ।

इतश्च नगरात्स्थंडिलभूम्यां व्रजन्तौ गुरुशिष्यौ मात्सिकं सशस्त्रकरं ददृशतुः । तदा शिष्यो गुरुं पप्रच्छ—'भगवन्नी दृशा जीवाः कथमपि न निस्तरिष्यन्ति' । गुरुराह—"वत्स न कोऽपि मौनीन्द्रधर्मे एकान्तकदाग्रहः । यतः— अनेकभवसंचितानि कर्माणि भावाध्यात्मज्ञानेन शुभपरिणामतः क्षणेन निघ्नन्ति । यत उक्तं—

जं जं समयं जीवो आविसइ जेण जेण भावेण। सो तम्मि तम्मि समए सुहासुहं बंधए कम्मं ॥ १ ॥"

इति शिष्यं निरुत्तरीकृत्य गुरुणैकं पदं बाढस्वरेण प्रोक्तं—'जीववहो महापावो' इत्युक्त्वा गुरुरग्रे गतः । धीवरेण तत्पदानुसारेण चिन्तितं—'अद्यप्रभृति कश्चिदपि जीववधो मया न कार्यः' । इत्यादिध्यानपरो जातिस्मृतिं प्राप । हीन- कुलोद्भवं पूर्वविराधितचारित्रफलं मत्वा दीक्षाग्रहणोत्सुकः शुक्लध्यानेन केवलज्ञानमाप । आसन्नदेवैर्महोत्सवः कृतः । देवदुन्दुभिशब्दः तच्छिष्येण श्रुतः । गुरुराह—'वत्स पश्य धीवरस्य तस्य महाज्ञानमुत्पन्नं । त्वं तत्र गत्वा भगवान् पृच्छ'। सोऽपि सशंकः सविस्मयस्तत्र गत्वा स्थितः । तदा ज्ञानी प्राह—" किं विचार्यते ? अहं स एव । द्रव्यभावहिंसात्यागेन मयेदं लब्धं । तव गुरूणां भवास्तु यद्वृक्षाधः स्थितस्तत्पत्रतुल्यगणनया ज्ञेयाः । त्वं त्वस्मिन्नेव भवे सिद्धिं प्राप्स्यसि" ।

स्तोकरात्रिं मत्वा धान्यपेषणसमये गालकान्तरे स्थितः सर्पो मर्दितः । तत्पिष्टरोट्टककाशिनः स्वजनाः पञ्चत्वमगुः । श्रेष्ठी तु तच्छुद्धिं ज्ञानिनो विज्ञाय तत्पापमालोच्य देवभूयं जगामेति ।

हिंसाप्रकारा बहवो भवन्ति जिनेन्द्रशास्त्रान्निजबुद्धितो वा ।
विज्ञाय ये विज्ञवरास्त्यजन्ति ते यान्ति लक्ष्मीमनघां शिवाख्याम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पञ्चमस्तंभे त्रिसप्ततितमं व्याख्यानम् ॥ ७३ ॥

---

## ॥ अथ चतुःसप्ततितमं व्याख्यानम् ॥ ७४ ॥

अथ हिंसाहिंसाफलं प्रदर्श्यते—

हिंसा निरन्तरं दुःखमहिंसा तु परं सुखम् । जन्तोर्ददात्यहो सूरचन्द्रयोरिव तद्यथा ॥ १ ॥

अत्र श्लोकोक्तनिदर्शनमिदम्—

जयपुरे शत्रुञ्जयराज्ञः सूरचन्द्राभिधौ सुतावभूतां । पित्रा ज्येष्ठस्य युवराजपदे दत्तेऽपमानतश्चन्द्रः पुरान्निर्गत्य विदेशे पर्यटन् एकदा गुरुमुखादिदं वाक्यं शुश्राव—

सापराधा अपि प्रायो गेहिभिः पुण्यदेहिभिः । न हन्तव्यास्त्रसास्तावत्किं पुनस्ते निरागसः ॥ १ ॥

तथा रात्रौ महास्वरेण पाठस्त्याज्यः । यदि किंचित्कार्यं स्यात्तदा मन्दस्वरादिनैव । खुंकारहुंकाराद्यपि न कुर्यात् । रात्रौ तत्करणे विनिद्रैर्गृहगोधादिर्हिंस्रजीवैर्मक्षिकाद्यारंभः प्रातिवेश्मिकैः स्वस्वारंभः प्रवर्त्येत । सूपकारतिलपीलकजारतस्करकर्षकशौकिकोलूकारघट्टयंत्रवाहकरजकमात्सिकादीनामपि परंपरया कुव्यापारप्रवृत्तिः । यत उक्तं श्रीवीरेण जयन्तीप्रश्नोत्तरे—'अधर्मिणो नराः सुप्ता एव श्रेष्ठाः, धर्मिणस्तु विनिद्रा वर्याः' । अत्रार्थे प्रबन्धोऽयं वृद्धेभ्यः श्रुतः—

कोऽपि साधुः स्वशिष्येभ्यो रात्रौ वाचनां पूर्वगतां ददाति । एकदा चूर्णौपधिना संमूर्छिममत्स्यादीनामुत्पत्तिं गुरुराख्याति । तदैकेन मात्सिकतस्करेण श्रुतं । चूर्णप्रयोगं मनसि धृत्वा गृहे गत्वा तत् कृतं । बहुमीनोत्पत्तिर्जाता । हृष्टः सन्नित्यं तत्कृत्वा कुटुंबं पुपोष । इत्थं बहुकालो गतः । एकदा स विद्याचौरो गुरुं नत्वा प्राह—"स्वामिन् ! त्वत्प्रसादादहं सकुटुंबः सुखेन जीवामि, अक्लेशेन दुर्भिक्षादिष्वनेकेषामुपकारो भविष्यति" । मुनिराह—'कथं ?' । स प्राह—'तद्रात्रौ युष्माभिः शिष्येभ्यश्चूर्णाज्जीवोत्पत्तिः प्रोक्ता, तेन जीवामि' । इति श्रुत्वा गुरुः स्वप्रमाददोषं निन्दित्वा परंपराभिर्वृद्धिमत्पापं निश्चित्य तमुवाच—"त्वामन्योपायं श्रेष्ठं कथयामि, शृणु । अमुकामुकद्रव्याणि मेलयित्वा एकान्तेऽपवरके बाह्यतः कपाटौ दृढीकाराप्य मध्ये स्थित्वा चूर्णं जलादिषु क्षिप्तं स्वर्णवर्णा मीना भविष्यन्ति । तदश्नतस्तवापि शरीरं पुष्टिमद्भावि" । तच्छ्रुत्वा गृहे गत्वा गुरुणादिष्टात् तच्चूर्णतो व्याघ्र उत्पन्नः । तेन सद्यो भक्षितः स पापात्मा नरकं ययौ । मुनिस्तु तत्पापमालोच्य स्वर्गं गतः । अतो रात्रौ पठनं पाठनं च न हि बाढस्वरेण ।

अत्रान्यदपि निदर्शनं—यथा कोऽपि श्राद्धो रात्रिचरमयामे आवश्यकं पठन् प्रातिवेश्मिकया स्त्रिया श्रुतः । तया

उच्चैः स्वरैर्निशीथिन्यां पाठो वर्ज्यः सुबुद्धिभिः । हिंसास्थानान्यनेकानि इत्थं ज्ञात्वा त्यजेद्बुधः ॥४॥

मुखावकाशं वस्त्राञ्चलादिनाऽनावृत्य पठनादिकं करोति, तस्य हिंसा वायुजीवानां । यतः सांख्यानां महाभारते बीटेतिख्याता दारवी मुखवस्त्रिका मुखनिश्वासनिरोधिका भूतानां दयानिमित्तं भवति । यदाहुस्ते—

घ्राणादितोऽनुयातेन श्वासेनैकेन जन्तवः । हन्यन्ते शतशो ब्रह्मन्नणुमात्राक्षरोदितौ ॥ १ ॥

इति परशासने । तथोक्तं पूज्यैः—"चतुःस्पर्शिकाः श्वासोच्छ्वासपुद्गलाः । एभिः स्पर्शैर्वायुकायजीवानष्टस्पर्शिकान् घ्नन्तीति" । तथा भविष्यत्कालज्ञानं न प्रकाश्यं । यतः—

जोईसनिमित्त अक्खर कोऊअआएसभूईकम्मेहिं । करणाणुमोअणेहिअ साहुस्स तवक्खउ होई ॥ १ ॥

अत्रार्थे निदर्शनमिदम्—

क्षितिप्रतिष्ठ एका प्रोषितभर्तृका क्षत्रियास्ति । तद्गृहे मुनिरेको विहर्तुमायाति । एकदा तयोक्तं—'मद्भर्ता कदागमिष्यति ?' । ततस्तेन कथमपि कथितं—पंचभिर्दिनैरिति । तदनु स आगतः । सत्यं जातं । तदवसरे मुनिर्भिक्षार्थमायातः । स्त्रिया मुनिनापि च स्मितं कृतं । तद्विलोक्य क्षत्रियेण जातशंकेन खड्गं करे कृत्वा हास्यकारणं पृष्टं । मुनिना कथमपि यथास्थितमुक्तं । ततस्तेनोक्तं—'भो वद, अश्वेयं किं प्रसोष्यति ?' । तेनोचे—'किशोरीं' । ततोऽसिनाऽश्वोदरे विदारिते विशंकोऽभूत् । तद्वीक्ष्य मुनिनाऽनशनं कृतं । क्षत्रियेण क्षामितं । साधुः स्वर्गभागभूत् ।

इत्यादिना तं निर्वचनीचक्रे । अथ कुमारर्षिर्हस्तितापसाश्रममागमत् । तत्र तापसा नित्यश इभं हत्वा मांसमश्नन्ति । तेषां मतमिदम्—अग्निवनस्पतिकणादिबहुजीवहनने महापापमत एकस्मिन्महाजीववधे बहूनां न घातः । इति मत्वा तापसैरेको वारणो निगडितः । मुनिस्तु तत्संमुखमाययौ । साधुं दृष्ट्वा स हस्ती लघुकर्मतयालानस्तंभमुन्मूल्य पादौ स्पर्शं स्पर्शं प्रणमति स्म । तदतिशयं वीक्ष्य तापसाः प्रबुद्धा जैनीं वाचं स्वीचक्रुः। ततः श्रीवीरं नत्वा साधुव्रतमाददिरे समवसरणे साभयः श्रेणिक आर्द्रकुमारर्षिं प्रति हस्तिमोचनवृत्तं पप्रच्छ ।

मुनिनोचे महाराज न चित्रं करिमोचनम् । दुष्करं तु तन्तुपाशमोचनं प्रतिभाति मे ॥ १ ॥

तत्पृष्टो मुनिस्तर्कुतंतुवृत्तमुक्त्वाभयं प्रशस्य धर्माशिषं ददौ । ततो मुनिरालोचितप्रतिक्रान्तः केवलज्ञानं शिवं च प्राप।

हस्त्यादिहिंसां परिमुच्य सर्वामंगीकृतं यैर्मुनिराजवाक्यम् ।
तेषां चरित्रं विबुधा निशम्य कुर्वन्तु पक्षं सततं दयासु ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पंचमस्तंभे द्वासप्ततितमं व्याख्यानम् ॥ ७२ ॥

## ॥ अथ त्रिसप्ततितमं व्याख्यानम् ॥ ७३ ॥

अथ मुनीनां गृहिणां च हिंसास्थानानि वर्जनीयानीत्याह—

मुखरन्ध्रमनाछाद्य भणनीयं न कर्हिचित् । निमित्तं चाविकालानां न वाच्यं कस्यचित्पुरः ॥ १ ॥

सकृज्जल्पन्ति भूपालाः सकृज्जल्पन्ति सज्जनाः । सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत् ॥ १ ॥

परं तत्पादचिह्नेन तमुपलक्षयामि" । तदाप्रभृति स श्रेष्ठी मुनीनां दानं ददौ । एकदा द्वादशवर्षान्ते स मुनिरागतः । तं लक्ष्मदर्शनादुपलक्ष्य श्रीमतिः प्राह–"स्वामिन् ! तदा निष्ठ्यूतवन्मां त्यक्त्वा गत आसीः, अधुना क्व यास्यसि ?" । मुनिर्दिव्यां गिरमनुस्मरन् श्रीमतीमुपयेमे । क्रमेण सुते जाते आर्द्रकुमारोऽवदत्—'प्रिये ! तव पुत्रोऽभूत्, अहं तु व्रजामि' । तच्छ्रुत्वा श्रीमती तर्कुमादायोपाविशत् । तद्वीक्ष्य सुतः प्राह—'मातः किमिदं त्वया प्रारब्धं ?' । सोवाच— 'वत्स ! तव पिता तपस्यायै गन्तुमिच्छति,अथ मम तर्कुरेव शरणं' । पुत्रः प्राह—'मातः ! मत्पितरं बद्ध्वाहं स्थापयामि' । इत्युक्त्वा तर्कुसूत्रेण तत्पादौ वेष्टयन्नित्थमाह—'हे तात ! मया त्वं बद्धोऽसि, क्व गमिष्यसि ?' । इति तच्चेष्टितेनार्द्रज आर्द्रचित्तः पादयोर्वेष्टिततन्तुसंख्यया द्वादशाब्दीं यावद्गृहे तस्थौ । अवधौ पूर्णे पुनर्दीक्षां गृहीत्वा समीरवत् पृथ्व्यां विजहार ।

इतश्च निजजनकेन रक्षार्थं मुक्ता भटाः कुमारमन्वेषयन्तः स्तैन्येन जीवन्तो मुनिना दृष्टाः, धर्मं श्राविताः प्रव्रज्यां जगृहुः । तैर्युक्तस्य वीरवन्दनार्थं गच्छतस्तस्यान्तराले गोशालो मिलितोऽवदत्—"वृथेदं तपस्तप्यते, शुभाशुभस्य हेतुर्नियतिरेवात्र प्रमाणं । यतः—

उपक्रमशतैः प्राणी यन्न साधयितुं क्षमः । दृश्यते जायमानं तल्लीलया नियतेर्बलात् ॥ १ ॥"

मुनिरुवाच—"नेदं युक्तं । द्वाभ्यां कार्यसिद्धिः । यतः—

यथा स्थालीस्थितं भोज्यं कर्मणा प्राप्तमस्ति तत् । तावन्न प्रविशेद्वक्त्रे यावन्नोद्यमवान् करः ॥ १ ॥"

इतस्तृतीये भवेऽहं सामायिकः कौटुंबिको बन्धुमतीपतिरभूवम् । प्रियायुतेन मया वैराग्याद्दीक्षा गृहीता । अन्येद्युः संयतिनीमध्यस्थां स्ववधूं वीक्ष्य प्राक्तनानुरागेण तस्याः पुरो निजाभिप्रायमाख्यम् । सापि 'एष मम स्वस्य च व्रतं मा भांक्षीत्' इति भियाऽनशनेन स्वर्गता । अहमपि तद्दुःखेनानशनाद्देवसुखं भुक्त्वाऽत्रोत्पन्नः । धन्योऽस्तु मद्गुरुरभयः, येनाहं प्रबोधितः ।

अथाभयदर्शनोत्सुकः पितरं प्राह—'तात राजगृहं द्रष्टुं यामि' । पिता तु तं निषिध्य तस्य रक्षार्थं पंचशतभटान्मुमोच । सोऽपि तान् वंचयित्वा पोतमारुह्यार्यदेश आगतः । प्रत्येकबुद्धः स तद्बिंबमभयाय विसृज्य स्वयं 'तव भोग्यफलं कर्म समस्ति' इति वाण्या देवताभिर्निषिद्धोऽपि सहसा व्रतमग्रहीत् । क्रमाद्वसन्तपुरोद्याने देवकुले कायोत्सर्गेण तस्थौ ।

इतश्च स बन्धुमतीजीवस्तत्पुरवासीभ्यगृहे श्रीमतिर्नाम सुताऽभवत् । सा सखीभिर्युता तत्र रन्तुमाययौ । तत्र बालिका मिथः प्रोचुः—'सख्यो वरं वृणुत' । ततस्ताः काश्चित् कांश्चिद्वरान् वव्रिरे । श्रीमतिर्जगौ—'मयैष मुनिर्वव्रे' । तदा व्योमवाणीयं जाता—'मुग्धे ! त्वया चारु वृतं' । इत्युक्त्वा सुरो दुन्दुभिगर्जारवपूर्वं रत्नानि ववर्ष । सा च गर्जिभीता मुनेः पादयोरलगत् । मुनिस्त्वनुकूलोपसर्गं मत्वाऽन्यत्र जगाम । तत्र द्रव्यग्रहणाय नृपपूरुषा आजग्मुः । तान्निषिध्य सुरः प्राह—'वित्तं त्वस्या वरणके दत्तं' । ततस्तस्याः पित्रा तद्गृहीतं । ततः पिता पुत्रीमाह—"वत्से ! भृंगवद्भ्रमन् स मुनिस्त्वया कथं लप्स्यते ? लब्धोऽपि हि कथं ज्ञास्यते बहुषु भिक्षुषु मध्येऽयं स एवेति । अतस्त्वमन्यं वरं वृणु" सा प्राह—"तात नेदं श्रुतं ?—

सुगमः। नवरं हिंसकजीवाः सर्पमार्जारादयस्तेषां हनने न दोषः। तदयुक्तं। इत्थं विचार्यमाणे त्वहिंसकजीवा आर्यक्षेत्रेष्वपि स्तोका एव लभ्यन्ते। अतो निःशूकता त्याज्येति। तथा केचिज्जल्पन्ति—

**केप्याहुर्बहुभिर्धान्यैर्मत्स्याद्यैर्वा हतैश्च किम्। वरमेको हतो हस्ती कालोऽत्येति यतो बहुः ॥ १ ॥**

इत्थं ब्रुवन्ति, तान् प्रति शिक्षामार्द्रकुमारदृष्टान्तद्वारेणाह—

मगधेशः श्रेणिको नृपोऽन्यदार्द्रकभूपतेर्निजमंत्रिणा सह प्राभृतं पूर्वजप्रीतिवृद्ध्यर्थं प्रैषीत्। तत्समीपे प्राभृतं विमुच्य मंत्री कुशलं पृष्टः प्रश्नोत्तरं कृत्वा स्थितः। अथार्द्रकनृपतनुः सूनुरार्द्रकुमारः श्रेणिकसचिवं पप्रच्छ—'त्वद्भूपपुत्रस्य किं नाम ?'। मंत्रिणाभाणि—'धर्मज्ञः पंचशतमंत्रीशोऽभयनामा पुत्रः किमु त्वया नाकर्णितः ?' तच्छ्रुत्वा कुमारोऽपि अभयाय मौक्तिकादिकं प्राहिणोत्। मंत्री तु राजगृहमभ्येत्य क्रमात्तत्प्राभृतं दत्त्वाहाभयं—'आर्द्रकुमारस्त्वया सह मैत्रीं चिकीर्षति'। ततोऽभयो दध्यौ—"नूनं विराधितव्रतोऽसौ अनार्यदेशे जातोऽस्ति। अभव्यो दूरभव्यो वा न मया सह सख्यमिच्छति। यतः समानधर्माणां जायते प्रीतिरंगिनां। अतोऽर्हद्बिंबं तत्र प्रेषयामि। तद्दृष्ट्वा स प्रबोत्स्यते"। इति ध्यात्वा रत्नप्रतिमां पेटामध्ये प्राभृतमिषेण प्राहिणोत्। सोऽपि तत्र गत्वा रहसि तां पेटां दत्त्वा प्रणम्य गतः। कुमारोऽपि तामुन्मुद्र्य तदन्तःस्थां जिनमुद्रां दृष्ट्वा दध्यौ—'इदमाभरणं किं कंठे शीर्षे हृदि वा धार्यते ?'। दृष्टपूर्वमिदमिति ध्यायन् जातिस्मृतिं प्राप्तः। तथाहि—

णोक्तं—'त्वद्भोज्यं दापय'। चक्रिणोक्तं—'मद्भोजनं ममैव जरति'। विप्रेणोक्तं—'कृपणोऽसि, दातुं न शक्तोऽसि'। ततो राज्ञा सकुटुंबः स भोजितः। मदनोन्मत्तो जातः। रात्रौ मात्रादिषु मिथः पशुवत्प्रवृत्तः। मदे समुत्तीर्णे लज्जितः। ततः सर्वमनेन कृतमिति रुषैकदा तेनाजापालकं पिप्पलकपत्राणि धनुर्गोलिकाप्रयोगेण सच्छिद्राणि कुर्वन्तं वीक्ष्य तस्मै किंचित्समर्प्य चक्रवर्तिनयनापनयनं कारितं। स निगृहीतो हन्तुमारब्धः। रे कथमित्थं समाचरितं त्वयेत्युक्ते तेन विप्रो दर्शितः। तदा सकुटुंबः स मारितः। तदनु विप्रजातौ रुष्टेन चक्रिणादिष्टं—'प्रतिदिनं द्विजाक्षीणि निष्कास्यानय'। मंत्री तान्यानीय दर्शयति। चक्री करेण मर्दयित्वा मुञ्चति। ततो मंत्रिणा बहुजीववधं मत्वा वटगुंदकैर्निर्बीजैः सशीर्षं स्थालं भृत्वा नृपाग्रे मुक्तं। राजा तु मदरातीनां चक्षूंषीमानीति क्रोधबुद्ध्या हन्ति। एवं षोडशवर्षान्ते रौद्रध्यानेन मृत्वा सप्तमावनौ गतः।

वटगुंदकमर्दनरौद्रमतिर्द्विजचक्षुर्विघातं दधत् हृदये ( द्विजनेत्रहतिं हृदयेन दधत् )।
अनुबन्धनहिंसनबुद्धिजराचरमो नरदेव इतो नरके ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पंचमस्तंभे एकसप्ततितमं व्याख्यानम् ॥ ७१ ॥

## ॥ अथ द्वासप्ततितमं व्याख्यानम् ॥ ७२ ॥

अथ केचिद्धिंस्रप्राणिघातेन धर्ममिच्छन्ति, तान्प्रतीदं शिक्षावाक्यं—

केचिद्वदन्ति हन्तव्याः प्राणिनः प्राणघातिनः। हिंस्रस्यैकस्य घाते स्याद्रक्षणं भूयसां किल ॥ १ ॥

इत्युक्त्वा मृतः । तेऽपि दीर्घं मुक्त्वा स्वराज्ये गताः । ततो दीर्घश्चुलण्यासक्तो जातः । तद्भावं धनुर्मंत्री ज्ञात्वा स्वपुत्रस्य वरधनुर्नाम्नो ज्ञापितवान्—यथैतत्स्वरूपमेकान्ते चूलनेयस्य ब्रह्मदत्तस्य ज्ञाप्यं । तेन ज्ञापितोऽसौ कोकिलाकाकयोः संबन्धं कारयन्नन्तःपुरे गत्वा काकं हत्वोवाच—'योऽन्योऽप्येवं करिष्यति, तमहं निग्रहीष्यामि'। तद्वार्ता दीर्घश्चुलनीं प्रत्याह—'अहं काकस्त्वं कोकिला' इति । साह—'बालोऽयं किं वेत्ति आवयोः स्वरूपं' । पुनरेकदा महिषहस्तिनीयुगमानीय पूर्वोक्तवाक्यमुक्त्वा महिषो हतः । ततो दीर्घः—'मत्पापमनेन ज्ञातं, अन्योक्त्या मां शिक्षयति' इति विचार्य राज्ञीं प्रति ज्ञापितोऽयं विचारः । ततः सा प्राह—"अयं पुत्रो हन्यते, आवयोः कुशलत्वे बहवोऽपि पुत्रा भविष्यन्ति" । तेनापि स्वीकृतं । ततः सामन्तसुतां परिणाय्य तच्छयनार्थं जतुगृहं कारयित्वा दत्तं । वरधनुर्मन्त्रिणा गुप्तवृत्त्या तद्गृहमध्यतः पुरोद्यानं यावत्सुरंगा दापिता । शुभदिने जतुगृहे प्रविष्टस्य सवधूवरधनुःकुमारस्य रात्रियामद्वये गते गृहं प्रज्वालितं । तौ तु सुरंगया निर्गत्य पूर्वद्वारे मुक्ताश्वयुगलमारुह्य निर्गतौ । पृथ्वीं भ्रमतो ब्रह्मदत्तस्य सार्वभौमसंपदमिलत् । वरधनुः सैन्यपतिपदेऽभिषिच्य दीर्घसमीपे प्रेषितः । तदनु ब्रह्मदत्त आगत्य निजचक्रेण दीर्घवपुः कबन्धीकृत्य स्वगेह आगतः । अनुक्रमेण षट्खंडभरतं साधितं ।

पुरा तस्यैकाकिनोऽटव्यां भ्रमतो द्विजेनैकेन नीरं पायितमभूत् । स द्विजस्तं चक्रवर्तिपदप्राप्तं ज्ञात्वा 'बहुसैन्ये मां कथं ज्ञास्यति' इति ध्यात्वा जीर्णसूर्पटकपादरक्षणकादिना विसदृशं रूपं कृत्वा भ्रमति । तद्दृष्ट्वा राज्ञा स्वसेवकादानायितः । तमुपलक्ष्य तुष्टो राजा वरं ददौ । स्त्रीवचसा विप्रो भोजनं दीनारयुगं च ययाचे गृहे गृहे । तेन तथा कृतं । एकदा विप्रे-

तीव्रबन्धदा न स्यात् । तथा कोऽपि तिलपीलकजीवः कोटिपूर्वायुष्कः प्रतिदिनं विंशतितिलपीलनयंत्रैस्तिलान् पीलयति। स पूर्णजीवितेनापि तावतस्तिलान् पीलयितुं न समर्थः, यावतो नद्युत्तरणेन साधुरेकबिन्दुगतजीवान् हन्ति । सेवालान्वितजले तु अनन्तजीववधोऽपि स्यात् । यदि प्रमादयुक्तो मुनिर्भवति तदा । नान्यथा । तथा भगवत्यंगे प्रोक्तं—केवलज्ञान्यपि गमनागमनेन चक्षुश्चालनेन च बहुजीवघातं करोति । योगव्यापारेण बद्धं यत्कर्म तत्प्रथमसमये बध्नाति, द्वितीयसमयेऽनुभवति, तृतीये तु तन्निर्जरां लभते । अप्रमत्तत्वात्तत्कर्मबन्धो बहुकालं यावन्न तिष्ठति इति । तथा प्रथमांगे प्रोक्तं—केनचिन्मुनिनाऽपक्वं लवणं सहसाकारादिना विहृतं । तल्लवणं गृहस्थः पश्चान्न गृह्णाति, तदा मुनिर्जलं आलोड्य पिबेत्, जिनाज्ञापालनपरत्वात् न हिंसा पृथ्वीकायस्येति । गृहस्थानामपि जिनपूजादौ अन्तर्दयाभावेन न हिंसा स्यात् । पूर्वपूज्यैस्त्रिधा हिंसा गदिता—अन्तर्दयापरिणामेन बाह्यतः क्रियां कुर्वतो हिंसनं, सा स्वरूपतो हिंसा । कृष्यादिहेतुतया, सा हेतुहिंसा । अन्तःकलुषितपरिणामेन निर्घृणता, साऽनुबन्धतो हिंसा ।

**मातुर्वचनतः पिष्टकृतकुर्कुटहिंसनात् । राजा यशोधरः प्राप दुरन्तां दुःखसंततिम् ॥ १ ॥**

बाह्यस्वरूपहिंसाभावेऽपि अनुबन्धहिंसाध्यानेन ब्रह्मदत्तचक्रयादीनामिव नरकप्राप्तिः । स चायं संबन्धः—

कांपील्यपुरेशस्य ब्रह्मराजश्चत्वारि मित्राणि सन्ति—काशीदेशपः कटकः, गजपुरेशः करेणुः ( णेरुः ), कोशलेशो दीर्घः, चंपाधीशः पुष्पचूलश्च । एते नृपाः स्नेहेनैकैकं वर्षं मिथो राज्येषु समुदितास्तिष्ठन्ति । अन्यदा ते सर्वे ब्रह्मपार्श्वे समागताः । तावता शिरोरोगे समुत्पन्ने ब्रह्मराजा तच्चतुर्णामुत्संगे सुतं मुक्त्वा 'युष्माभिरेतद्राज्यसंप्रदायः कारयितव्यः'

नमस्काराद्यपदश्रवणसंजातजातिस्मृतिः पितरावापृच्छ्य भृगुकच्छ एत्य चैत्योद्धारादिकं निर्ममे । तदादि पुनरेतत्तीर्थं शकुनिकाविहार इति ख्यातमभूत् । क्रमेण चात्रैव तीर्थे परमार्हतः श्रीकुमारपालमंत्रीश्वरोदयनतनयः श्रीशत्रुंजयतीर्थोद्धारकः श्री रैवतगिरिसुगमपद्यानिर्मापणाद्यनेकपुण्यप्रकटः श्रीवाग्भट्टस्यानुजवरोऽम्बडमंत्रीश्वरः पितुः पुण्यनिमित्तमुद्दधार । तत्र येन मंगलदीपलुंछनसमये याचकानां द्वात्रिंशल्लक्षसौवर्णिका दत्ता इति वृद्धा ब्रुवन्ति इति ।

सप्तसप्तिपारापतरक्षणेन जातौ पृथिव्यां वरकीर्त्तिभाजौ ।
शांतिर्मुनिसुव्रतनाथनाथो स्यातां ममालं सुखदायकौ तौ ।

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पंचमस्तंभे सप्ततितमं व्याख्यानम् ॥ ७० ॥

---

॥ अथैकसप्ततितमं व्याख्यानम् ॥ ७१ ॥

अथ हिंसाकारणं प्रमाद एवेत्युच्यते—

**शरीरी म्रियतां मा वा ध्रुवं हिंसा प्रमादिनः । सा प्राणव्यपरोपेऽपि प्रमादरहितस्य न ॥ १ ॥**

स्पष्टः । प्रमादवतोऽनुपयोगेन गच्छतः साधोरपि हिंसा प्रोक्ता—जीववधाभावे । अपि च, अप्रमादिनो गच्छतः साधोः प्राणघातेऽपि भावतो हिंसा न स्यादिति भावः । यतः—नदीप्रमुखोत्तारे सोपयोगेन गच्छतः साधोरिवाप्कायविराधना

णाय प्रतिष्ठानपुरादेकस्यामेव यामिन्यां षष्टियोजनीमतिक्रम्यागतः । तत्र जनसमूहे जिनेन धर्मदेशना प्रारब्धा । उत्कर्णोऽश्वः प्रभुं पुनः पुनरुत्पश्यन् जातजातिस्मृतिर्जिनान्तिके गत्वा न्यूनस्तशिराः स्ववाचोवाच—'दुःखार्तं मां विश्वरक्षक रक्ष' । इत्याकर्ण्य नृपः प्रभुं पप्रच्छ—'अयमश्वः किं विज्ञपयति' । प्रभुरवक्—"राजन्नस्य पूर्वभवं शृणु—

पद्मिनीपुरे जिनधर्मा श्रेष्ठी सागरदत्तस्तन्मित्रं शैवः । पूर्वं तेन रुद्रालयः कारितः । अन्यदा मित्रेण सह साधुपार्श्वे गतः । जिनमन्दिरकरणफलं श्रुत्वा जिनबिंबप्रासादमकारयत् , तत्र सद्दर्शनं प्राप्तं । एकदा शैवैः सर्पिषा लिंगपूरणे कृते स द्रष्टुमाहूतः । तदा च तत्र घृतगन्धात्सर्पन्तीर्घृतेलिकाः पिपीलिकाश्च निर्दयशैवानां पदन्यासात्सहस्रशो मृताः प्रेक्ष्याह—'भवत्पादपातैः कोटिशः कीटिका मृताः, तन्न युक्तं' । ततस्तैः क्रुद्धैरुक्तं—"क्रमागतं धर्मं त्यक्त्वा नवं धर्मं दधत् किं न लज्जसे ? उत्तिष्ठ, स्वगृहं व्रज" । इति श्रुत्वा लज्जाम्लानमुखः स्वगृह एत्येति दध्यौ—'हा मया निजकुलधर्मत्यजनेन किं कृतं ?' इत्यार्तध्यानतो मृत्वा बहुभवान् भ्रान्त्वा राजन् सागरदत्तजीवोऽयं हयो जातः । अस्मत्प्राग्भवमित्रं मां दृष्ट्वा कथयति—'अयं नृपोऽद्य यज्ञे मां होमिष्यति, ततो रक्ष रक्ष' । अतो हे राजन् ! यज्ञफलं नरक एवेति प्रभुवाक्यतः प्रबुद्धो राजा तमश्वमभयं कृत्वा स्वयं नगराद्यज्ञं न्यवारयत् । सोऽश्वः स्वामिपार्श्वेऽनशनं लात्वा सहस्रारे सुरोऽभूत् । तदैव तत्रैत्य सुरेण जिनसमवसरणस्थाने विहारं निर्माय तन्मध्ये श्रीजिनमूर्तिस्तत्पुरस्तुरंगमूर्तिश्च स्थापयांचक्रे । तत्प्रभृति अश्वावबोधतीर्थं जातं । कालान्तरे तत्रैव वने एका वटसमलिका केनचिन्म्लेच्छेन मुक्तमार्गणेन विद्धा जिनौकोऽन्तिकेऽपतत् । प्रान्ते साधुदत्तनमस्कारश्रवणेन सिंहलराज्ञः पुत्री जाता । तत्र भृगुपुरागतेभ्यक्षुतसमये समुच्चारित-

गत्यादिरहितः, परं व्यवहारापेक्षया नानापिंडात्मको गोत्वगजत्वनरत्वस्त्रीत्वमत्कुणपिपीलिकादिजातिमानध्यक्षतो दृश्यत एवेति पिंडे विनष्टे जीवो विनष्ट एव, दीपतत्प्रभयोरिव । यतः—

म्रियस्वेत्युच्यमानोऽपि देही भवति दुःखितः । मार्यमाणस्य जायेत फलं नरकवेदना ॥ १ ॥

अतः सर्वधर्मेषु दयाया एव श्रेष्ठता श्रूयते—

जीवदयारतस्वान्तौ श्रीशान्तिमुनिसुव्रतौ । प्रागभूतां तयोः कीर्तिरद्यापि भुवि वर्तते ॥ १ ॥

स्पष्टः । अत्रार्थे आचिंरेयप्रबन्धोऽयम्—

जंबूद्वीपे पूर्वविदेहे मंगलावतीविजये रत्नसंचयपुरे शान्तिनाथजीवो वज्रायुधनामा राजाऽभूत् । अन्यदैकः पारापतो भयभ्रान्तो नृपस्य शरणं प्राप्तः । नृपेण कथितं—'मा भैषीः' । तदनु श्येनः समागात् । तेनोक्तं—'मम क्षुधितस्यैनं पक्षिणं देहि' । राज्ञोक्तं—'वरान्नं गृहाण' । सोऽवक्—' मांसे मे रुचिः' । नृपः प्राह—'अहं स्वदेहामिषं ददामि' । इति प्रोक्ते श्येनः प्राह—'पारापततुल्यं देहि' । नृपेणैकत्र तुलायां स्वजंघापलखंडे मुक्तेऽत्यतिभारे स्वयं तुलायामुपविष्टः । तत्साहसेन तुष्टौ सुरावाहतुः—'तव प्रशंसा इन्द्रेण कृता । तत्परीक्षार्थमावाभ्यामिमे रूपे कृते' । इत्युक्त्वा पुष्पवृष्टिं कृत्वा तौ स्वर्गतौ । नृपस्तु चारित्रं गृहीत्वा ग्रैवेयके एकत्रिंशत्सागरायुर्देवोऽभूत् इति ।

अथ विंशतितमजिनावदातः, स चायम्—

भृगुकच्छे जितशत्रुनृपेणाश्वमेधयज्ञार्थं एकोऽश्वो होमाय सज्जीकृतः । ज्ञानेन मुनिसुव्रतस्वामिना विज्ञातं । तद्रक्ष-

ब्रुवते । जघन्यतस्तु अंगुलासंख्येयमानदेहोऽपि मत्स्यः सप्तमीं याति इति भगवत्यंग उक्तं । अतो मनोवाक्कायभेदेन त्रिधापि हिंसा भवदैव' । इति श्रुत्वा नृपादिभिस्तत्समयजातं तयोर्दुःखस्वरूपं पृष्टं । सर्वो वृत्तान्तो ज्ञानिनादिष्टः । देविएयरुणदेवौ जातजातिस्मृती अनशनं जगृहतुः । सर्वापि पर्षन्महासंवेगमापन्ना दयाधर्मं स्वीचकार । तौ तु देवभूयं गतौ।

हास्येन मोहेन च दुष्टबुद्ध्या हिंसावचो ही न च भाषणीयम् ।
मातुस्तथा सर्गसुतावदातं कुर्वन्तु श्रुत्वा सदयं मनः स्वम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पञ्चमस्तंभ एकोनसप्ततितमं व्याख्यानम् ॥ ६९ ॥

॥ अथ सप्ततितमं व्याख्यानम् ॥ ७० ॥

अथात्रान्यदपि किञ्चिन्निरूप्यते—अत्र केचन जल्पन्ति—

**अछेद्योऽयमभेद्योऽयं जीवो नित्यः सनातनः । पिंडनाशे जीवनाशः कथं भवति पांडव ॥ १ ॥**

पार्थिवनिष्पन्ने घटे विनष्टे किमाकाशो विनष्टः ? । ननु घटाकाशो विनष्टः इति चेन्न, स तु कल्पित एवेति गीतायामुक्तं । अतो युद्धे यज्ञादौ च न कश्चिज्जीववधः इति परेषां न युक्तं वाक्यं, यतो निश्चयनयापेक्षया जीवो नित्यो गत्या-

र्थ्वे मुक्त्वा नष्टः। गतनिद्रोऽरुणस्तद्वीक्ष्य देव्या दत्तमिति हृष्टः। तावत्तैरुक्तः—'रेऽधुना कुत्र यास्यसि' इत्युक्त्वा तान्‌- यत्सु तेषु कटके पतिते। ततो ज्ञापितो राज्ञे। तदादेशाच्छूलायां निहितः। अत्रान्तरे भोज्यपाणिः सुहृत्तत्रागात्। दारुणा- वस्थमरुणं वीक्ष्य—'हा सुखदुःखैकवत्सल मित्र' इति रुदन् प्रेक्षकनरैः पृष्टः—'कोऽयं श्रेष्ठिपुत्रः ?' । स जगौ—'किं कथ्यते ? अधुना निवर्तितं कथानकं'। ततः सर्वमुक्त्वा स सुहृच्छीलतया निजहिंसां कर्तुमुद्यतस्तैर्धृतश्च । जसादित्यः स्वसुतां जामातरं च वीक्ष्य व्यतिकरं श्रुत्वा भृशं दूनः शूलातस्तं निष्कास्य राजसेवकानुपालभत। राजा प्राह—'श्रेष्ठिन् अत्र मेऽपराधः सहसाकारिणः'। अत्रान्तरे चतुर्ज्ञानी अमरेश्वरमुनिस्तत्रागतो देशनां ददौ—"मुञ्चताहो मोहनिद्रां। यतः—

**आस्तां वचनकायाभ्यां हिंसा वै दुःखदायिनी। चिन्तिता मनसाप्येषा नृणां श्वभ्रेषु पातिनी ॥१॥**

वैभारगिरिसमीपोद्याने उद्यानिकार्थमागतान् लोकान् वीक्ष्य कोऽपि रंको भिक्षामलभमानो हृदि दध्यौ-" अहो भक्ष्यभोज्येष्वपि सत्सु मह्यं कोऽपि न ददाति, तदिमान् सर्वान् हनिष्यामि "। इति कोपाद्गिरिमारुह्यैकां महाशिलां तेषां हिंसार्थममुचत्, स्वयं तया सार्धमपतत्। लोकस्तु सर्वोऽपि नष्टः, स तु चूर्णीभूतो नरकं गतः इति । तथा सूत्रे आउरपच्चक्खाणेऽप्युक्तं—

**आहारकारणेणं मच्छा गच्छंति सत्तमिं पुढवीं। सच्चित्तो आहारो न खमो मणसा वि पत्थेउं ॥ १ ॥**

मत्स्यास्तंडुलमत्स्यादयः। ते च गर्भजा एव। संमूर्छजानामसंज्ञित्वेन रत्नप्रभामेव यावद्गमनात्। किल महामत्स्यस्य मुखसमीपे मत्स्यी तंडुलीयमत्स्यं प्रसूते। स च तंडुलप्रमाणः प्रथमसंहननी दुष्टं मनो व्यापार्य सप्तमीं याति इति वृद्धा

## ॥ अथैकोनसप्ततितमं व्याख्यानम् ॥ ६९ ॥

अथ केचिज्जीवाः क्रोधादिना हिंसावचनं ब्रुवन्ति, तान्प्रतीयं शिक्षा—

"वचोऽपि हिंसाविषयं महानर्थविधायकम् । अत्र मातृसुतचन्द्रासर्गयोश्च निदर्शनम् ॥ १ ॥"

अत्र श्लोकोक्तं वृत्तमिदम्—

वर्धमानपुरे सद्भरः कुलपुत्रः । तत्पत्नी चन्द्रा । तयोः सुतः सर्गः । सर्वेऽपि दुःस्थाः । चन्द्रा परवेश्मसु कर्म कुरुते । सर्गो वनादिन्धनान्यानयति । एकदा जलमानेतुं चन्द्रा सुतायाहारं शिक्यक आरोप्य गता । सुतो वनादागतः स्वाम्बामप्रेक्ष्य क्षुत्तृट्पीरुया क्रुद्धः । इतो मातरमप्यागतां वीक्ष्योवाच—'पापे ! किमियतीं वेलां शूलाभिन्नाऽभूः ?' । तदाकर्ण्य साप्यूचे—'शिक्यकादुत्तार्य किं न भुक्तं ? करौ ते छिन्नावभूतां ?' । इत्युक्तिप्रत्ययं कर्म बद्धं ताभ्यां । ततो भवं भ्रान्त्वा सारुसर्गजीवस्ताम्रलिप्त्यामिभ्यसुतोऽरुणदेवनामाऽभूत् । चन्द्राजीवस्तु पाटलीपुरे जसादित्यस्य देविणीपुत्री अभूत् । सा पुण्याणदेवस्य दत्ता । निष्पन्ने विवाहेऽरुणदेवोऽन्यसुहृद्भिः सह वाणिज्याय प्रवहणे चटितः । दुष्टवायुना यानं भग्नं । पुण्यात्फलकं प्राप्य मित्रेण सह तटं गतः । क्रमात्पाटलीपुरमागत्येश्वरोऽवक्—'मित्र ! अत्र ते श्वशुरस्थानमस्ति, तत्र गम्यतें' । अरुणस्तु सोऽप्याह—'एवंविधस्य मे तत्र गन्तुं न युक्तं' । मित्रेणोक्तं—'त्वमत्र तिष्ठ, पुरान्तर्भोजनमानेतुं याम्यहं' । देवकुले श्रान्तो निद्राणोऽभूत् । तत्र वने क्रीडार्थमागताया देविण्याः कटकद्वयं करौ छित्त्वा लात्वा कश्चिद्दस्युर्नष्टः । तत्कूजितं रुदनं च श्रुत्वा राजसेवका धाविताः । चौरो जीर्णसुरालये यत्रारुणः सुप्तस्तत्र भयभ्रान्तः कटके खड्गं च तत्पा-

पूर्वं वीरजिनेश्वरेऽपि भगवत्याख्याति धर्मं स्वयं, प्रज्ञावत्यभयेऽपि मंत्रिणि न यां कर्तुं क्षमः श्रेणिकः।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधात्, यस्यास्वाद्य वचःसुधां स परमः श्रीहेमचन्द्रो गुरुः॥२॥"

इति धर्ममाहात्म्येन संतुष्टः परमार्हतो द्विगुणं वृत्तिदानं ददौ । अथैकदा घृतपूरं भुञ्जता राज्ञा पूर्वकृतमांसास्वादः स्मृतः । तद्भक्षणं निषिध्य सूरिं पप्रच्छ यदस्माकं घृतपूराहारो युज्यते न वेति । गुरुभिरभिदधे—"वणिग्द्विजयोर्युज्यते, कृताभक्ष्यनियमस्य क्षत्रियस्य न युज्यते, तेन पिशिताहारस्यानुसरणं भवति" । इत्थमेवेति कृत्वा पूर्वभक्षितस्याभक्ष्यस्य प्रायश्चित्ते द्वात्रिंशद्दशनसंख्यया एकस्मिन् भिडबन्धे द्वात्रिंशद्विहारान् कारयामास घृतपूरवर्णसदृशान् । इत्याद्यनेक-लोकोत्तरचरित्रेणापहृतहृदया विस्मृताजन्ममनुष्यस्तुतिनियमा अपि श्रीहेमचन्द्राचार्या ऊचुः—

'किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः । कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥१॥"

इत्याद्यनेकोदन्ता विस्तारग्रन्थतः परमार्हतस्य ज्ञेयाः

पद्मनाभजिनराजशासने यो भविष्यति गणेश आदिमः ।
निर्घृणां कुलसमागतां जहौ स कुमारजिनधर्मवर्धकः ॥ १ ॥"

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पञ्चमस्तंभेऽष्टषष्टितमं व्याख्यानम् ॥ ६८ ॥



सामन्ताश्च लज्जिताः । श्रीगुर्जराधिपो गम्भीरत्वान्नोपालम्भत तान् । पुनरानाकस्य राज्यं दत्वा स्वाज्ञां धारयित्वा पत्तने समागात् । ततः सर्वत्र मारिरित्यक्षरं न कोऽपि जल्पति स्म ।

अथैकदा कश्चित् द्विजो हेमसूरियशोऽसहिष्णुरुवाच—

"यूकालक्षशतावलीविलविलल्लोलल्लसत्कंबलो, दन्तानां मलमंडलीपरिचयाद्दुर्गन्धरुद्धाननः ।
नासावंशनिरोधनात् गिणिगिणित्पाठप्रतिष्ठास्थितिः,सोऽयं हेमडसेवडः पलिपलित्खल्लिः समागच्छति१"

इति निन्दां श्रुत्वा प्रभुभिः प्रोक्तं—"हे पंडित ! विशेषणं पूर्वमिति भवता किं नाधीतं ? अतोऽतःपरं 'सेवडहेमड' इत्यभिधेयम् । कुमारपालेन तद्वृत्तं ज्ञात्वाऽशस्त्रवध इति कृत्वा तस्य वृत्तिश्छेदिता । ततः स परं दुःखेन जीवति ।

अथैकदा कविः कृत्रिमदेवरूपः केनाप्यनुपलक्ष्यमाणः करगृहीतलेखपत्रः सभायामायातः । राज्ञा पृष्टः—"भोः कुतः कस्त्वं समागतः ?' । तेनोक्तं—'राजन् ! देवेन्द्रेण प्रेषितोऽस्मि लेखसमर्पणाय' । लेखः प्रस्फोट्य राज्ञा वाचितो यथा—

"स्वस्तिश्रीमति पत्तने नृपगुरुं श्रीहेमचन्द्रं मुदा
स्वःशक्रः प्रणिपत्य विज्ञपयति स्वामिंस्त्वया सत्कृतम् ।
चन्द्रस्यांकमृगे यमस्य महिषे यादस्सु यादःपते-
र्विष्णोर्मत्स्यवराहकच्छपकुले जीवाभयं तन्वता ॥ १ ॥

न युध्यते सैन्यं ?'। सोऽवक्–'तव सैन्यं धनदानाद्वशीकृतमानाकेन'। राजाऽवक्—'त्वं कीदृशोऽसि ?'। स प्राह—अहं कलह-पञ्चाननोऽयं गजो यूयं चेति त्रयोऽपि न परावर्तिताः'।एवं श्रुत्वा सचिन्तो राजा युद्धं कर्तुमुपस्थितः। तदा चारणः प्राह—

"कुमारपाल मम चिंत करी, चिंत्यो किमपि न होइ। जिण तुह रज्ज समप्पियो, चिंत करेसि सोइ॥१॥
अम्हे थोवा रिउ घणा, इय कायर चिंतंति। मुद्ध निहालि गयणलु, के उज्जोय करंति ॥ २ ॥'

तदीयसुशब्दं श्रुत्वा राजा चलितः। द्वयोर्युद्धं जातं। अत्रान्तरेऽतुलबलश्चौलुक्यो विद्युदुत्क्षिप्तकरणं दत्वाऽरिराज-गजस्कन्धमारूढः करिध्वजं छित्वा भूमौ पातयित्वा हृदि पदं दत्वोवाच—"रे वाचाट ! स्मरसि वचो मम भगिन्याः, पूरयामि तस्याः प्रतिज्ञां, छुरिकया छिनद्मि ते जिह्वां। रे पापिष्ट ! पिशाच ! अतः परं हिंसकवाक्यं वदिष्यसि ?" इत्येवं वदति कृतान्तवद्दुष्प्रेक्ष्ये चौलुक्ये सपादलक्षी नृपः किंचिन्नाख्यत्। ततो भगिन्याभ्येत्य पतिजीवभिक्षा मार्गिता। तदा राजा तमाह—"रे जाल्म ! मुक्तोसि न भगिनीपतित्वेन, किं तु दयाधर्ममधिकं मत्वा।

कृपया त्वं विमुक्तोऽसि जीवन् परमिदं त्वया। अवटौ रसनाकृष्टिचिह्नं धार्यं स्वनीवृति ॥ १ ॥
इदं चिरं भवद्देशे शीर्षाच्छादनमंबरम्। वामदक्षिणतो जिह्वायुगास्तेऽतः परं पुनः ॥ २ ॥
पश्चादपि स्फुरज्जिह्वं तत्कार्यं मन्निदेशतः। यथास्वस्प्रतिज्ञायाः पूर्तिः प्रख्यायते क्षितौ ॥ ३ ॥

तेनेदं प्रतिपेदे। बलवद्भिः सह को विरोध इति न्यायात्। ततः काष्ठपञ्जरे क्षिप्त्वा दिनत्रयं स्वसैन्ये स स्थापितः।

"नो भोगो न गृहादिकार्यकरणं नो राजदेयं किमप्यन्यस्यापि न सत्कृतिर्न सुकृतं सत्तीर्थयात्रादिकम्।
यद्गृह्णन्ति तथापि लोलुपधियः शून्याननाद्या धनं, तन्मन्ये भुवनैकमोहनमहो नास्मात्परं किञ्चन॥१॥"

ततः समुच्चाय शेषा विंशतिं मुद्रा गृहीत्वा स्थितः। मूषकोऽपि बिलान्निर्गत्य ता अपश्यन् हृदयस्फोटेन मृतः। तद्दृष्ट्वा कुमारपालः खिन्नो दध्यौ—

"धनेषु जीवितव्येषु स्त्रीषु चान्नेषु सर्वदा। अतृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च ॥ १ ॥"

तत्पापप्रायश्चित्तपदे प्रथमव्रतग्रहणसमये तत्रैव स्थले गत्वा उंदरिकाविहारप्रासादोऽकारि। अद्यापि स तत्रास्ति। अथैकदा शाकंभरीशः स्वभगिनीपतिरानाकः पत्न्या सह सारिपाशकाभ्यां रममाणो हास्येन प्राह—'हेमसूर्यादिमुंडका-न्मारय'। तदा पत्न्योक्तं—'एवं न प्रोच्यते, ते तु मम भ्रातुर्गुरवः सन्ति मारिनिवारकाः'। यदा पुनः पुनरेवं वक्ति तदा राज्ञी कुपिता वदति—"रे जंगरूक ! जिह्वां संभालय, यदि भार्यात्वेन मत्तो न बिभेषि, तथापि मद्भ्रातुरपि न भयं ?" इति श्रुत्वा रुष्टः पत्नीं पार्ष्णिना हतवान्। पत्न्योक्तं—"यदि ते जिह्वां मम भ्रातृपार्श्वेऽवटमार्गेण कर्षयामि, तदा मां राजपुत्रीं मन्येथाः"। इत्युक्त्वा पत्तने गत्वा स्वभ्रातरं प्रति प्रतिज्ञोक्ता। ततः स्वचमूपरिवृतश्चौलुक्येशः शाकंभरीं गतः। सोऽपि वाजिलक्षत्रयेण, गजानां पंचशत्या, पदातीनां च दशलक्षैर्वृतः संमुखमायातः। युद्धमारब्धं। महतीं सेनां दृष्ट्वा-नाको धनं दत्वा कुमारपालसैन्यं बिभेद। संग्रामे जायमाने सामन्तानुदासीनान् दृष्ट्वा हस्तिपकं प्रति राजावदत्—'किं

अहल्याया जारः सुरपतिरभूदात्मतनयां, प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम् ।
इति प्रायः को वा न पदमपदेऽकार्यत मया, श्रमो मद्बाणानां क इव भुवनोन्मादविधिषु ॥ १ ॥"

इत्युक्ते क्रोधः प्राह—

"अन्धीकरोमि भुवनं बधिरीकरोमि, धीरं सचेतनमचेतनतां नयामि ।
कृत्यं न पश्यति न येन हितं शृणोति, धीमानधीतमपि न प्रतिसंदधाति ॥ १ ॥"

इत्येवं लोभदम्भादयोऽपि गर्जन्तो निजभुजास्फोटं कुर्वन्तः स्वशात्रवे ससैन्याय धर्मनृपाय निजजनपददत्तावकाशं-चौलुक्यसिंहं प्रति युयुधिरे । सोऽपि धर्मनृपस्य सदागममंत्रिदत्तबुद्ध्या क्षणेनाजयत् । इति नृपसाहसप्राबल्यं वीक्ष्य मुदितो धर्मभूपो निजसुतां कृपासुन्दरीं तस्मै ददौ । श्रीमदर्हद्देवसमक्षं धर्मध्यानभेदचवरिकायां नवतत्त्ववेदीप्रदीप्ताग्नौ भावनासर्पिःप्रक्षेपेण श्रीहेमाचार्यभूदेवः सवधूकं नृपं प्रदक्षिणयामास चत्तारि मंगलमिति वेदोच्चारपूर्वं । ततः—

ददौ धर्मः स्वजामात्रे पाणिमोचनपर्वणि । सौभाग्यारोग्यदीर्घायुर्बलसौख्यान्यनेकशः ॥ १ ॥

तदनु नृपः कृपायै पट्टदेवीपदं ददौ । अथैकदा नृपेण पूर्वं पृथ्वीं पर्यटता पापं कृतं तत्स्मृतं । तथाहि—दधिस्थलीं व्रजन् पथि तरुच्छायायां विश्रान्तस्तत्र मूषकं रूप्यमुद्रा बिलादाकर्षन्तं दृष्टवान् । कियतीरेष कर्षतीति यावत्पश्यति, तावत्तैकविंशतिर्मुद्राः कर्षिताः । तदुपरि नृत्यं कृत्वा शयित्वा च मुद्रामेकामादाय बिलेऽविशत् । कुमारपालोऽचिन्तयत्—

तथा च राजोवाच—शृणु

"भवे भवे भवेद्देहो भविनां भवकारणम् । न पुनः सर्ववित्प्रोक्तं मुक्तिकारि कृपाव्रतम् ॥ १ ॥
श्वासश्चपलवृत्तिः स्याज्जीवितं च तदात्मकम् । तत्कृतेऽहं कथं मुंचे स्थिरां मोक्षकरीं कृपाम् ॥ २ ॥"

इति धर्मदार्ढ्येन राजा निर्गतगदोऽभूत् । एकदा गुरुं प्रणम्य स्थितं नृपं गुरवः प्राहुः—

"कष्टे त्वमीदृशेऽप्यत्र भ्रष्टोऽर्हद्वासनान्न चेत् । तवास्तां तर्हि परमार्हतेति बिरुदं नृप ॥ १ ॥"

एवं नृपस्य वदने मनसि गृहे जनपदे पुरेषु च स्थानमनाप्नुवन्ती हिंसा स्वजनकमोहपार्श्वे ययौ । मोहोऽपि चिरकालेन दृष्ट्वाऽलक्षयन्नेवं प्राह—'का त्वं सुन्दरि ?' । 'मारिरस्मि तनुता ते तात मोहाप्रिया' । 'किं दीनेव ?' । 'पराभवेन' । 'स कुतः किं कथ्यते चाधुना' । 'कुमारपालेन देशान्निष्कासिता' । इति श्रुत्वा रुष्टः प्राह मोहः—'वत्से ! मा रोदीस्त्वं, रोदयिष्यामि ते वैरिणः' । इत्याश्वास्य स्वबलगर्वमकरोत्—'त्रिभुवने स कोऽपि नास्ति देवो मानवो वा यो मदाज्ञां लुंपति' । ततो मोहनृपः स्वसैन्यं ससज्ज । कदागमो मंत्री, अज्ञानराशिः सेनानीः, मिथ्यात्वविषयाब्रह्मकुध्यानभटाः, हिंसाकन्यापाणिग्रहणकारापका यज्ञादिप्ररूपका द्विजाः, सर्वेऽपि चौलुक्येन सह युद्धं कृत्वा पश्चादाजग्मुः । ततो मोहो दुःखेन निःश्वसन् विललाप । तदा रागादयः पुत्रा वदन्ति स्म—'युष्मादृशां तादृशाणां पुंष्टिष्टिभकुमारपालधर्मबुद्ध्युच्छेदने कोऽयं खेदः' । तेषु प्राग्रागः प्राह—"तात ! एकोऽप्यहं त्रिभुवनजयनशीलः । यतः—

एवं सम्यग्विज्ञातधर्मोऽपि नृपो लोकलज्जादिना मिथ्यात्वं मोक्तुं न समीहते । यतः—

कामरागस्नेहरागावीषत्करनिवारणौ । दृष्टिरागस्तु पापीयान् दुरुच्छेदः सतामपि ॥ १ ॥

तथा—निन्दन्तु नीतिनिपुणा इत्यादिना नाहं कुलाचारत्य- सूरिं प्रत्यूचे—"भगवन् ! नोल्लंघनीयाः कुलदेशधर्माः । दुःखदरिद्रता कुलाधिगतापि को न तस्या निवारणेऽभिलाषुकः? जनं" । गुरुराह—"राजन् ! इदं शुभकर्माश्रितं हितवाक्यं

यावत्परप्रत्ययमात्रबुद्धिर्विवर्तते तावदपायमध्ये ।
मनः स्वमर्थेषु विघट्टनीयं न ह्याप्तवादा नभसः पतन्ति ॥ १ ॥

कुलक्रमेण कुर्वन्ति मूढा धर्मं कुबुद्धयः । विपश्चितो विनिश्चित्य स्वचित्ते च परीक्षया ॥ २ ॥

केचिन्मूढा लोहभारवाहितुल्याः स्वकदाग्रहं न मुञ्चन्ति ते तु संसारे दुरन्ते पतन्ति । अतो हे क्ष्माप !

धर्मः सर्वदयामूल एव प्रामाण्यमश्नुते । तस्माद्भ्रान्तिं परित्यज्य दयाधर्मे स्थिरीभव ॥ १ ॥

इत्यादियुक्त्या प्रबुद्धः प्राणातिपातविरमणं व्रतं जग्राह । ततो वर्णचतुष्के स्वस्यान्यस्य वा हेतवे यः कोऽपि जीवान् हन्ता स राजद्रोहीति पटहमवादीत् । व्याधशौनिककैवर्तकल्पपालादिपट्टकाः पाटिताः । तद्भाजनान्याणि मुक्तानि । तेषामपि निष्पापवृत्त्या निर्वाहमकारयत् । अन्यदा कुलदेवीकृतकष्टदेहं नृपं वीक्ष्य मंत्री वाग्भट्टः प्राह—'स्वामिन्नात्म-रक्षायै पशवो देव्यै दीयन्ते' । श्रुत्वेति राजा 'अहो निःसत्त्वो वणिग्भक्तिगृथिलो वचांसि भाषते' इत्यादि वदति स्म ।

कृता । यदुक्तं श्रीवीरचरित्रेऽस्य दिग्विजयमानं—

आगंगमैन्द्रीमाविन्ध्यं याम्यामासिन्धु पश्चिमाम् । आतुरुष्कं च कौबेरीं चौलुक्यः साधयिष्यति ॥१॥

अन्यदा सर्वावसरसभास्थितं नृपं प्रति प्रतिबोधाय श्रीहेमचन्द्रसूरयः समागताः । तान् वीक्ष्य नृप आसनं ददौ । गुरुकृतोपकारान् संस्मृत्य वन्दित्वा पप्रच्छ—'सर्वेषु धर्मेषु कः श्रेष्ठः ?' । गुरव आहुः—"राजन् !

अहिंसा परमो धर्मः सर्वशास्त्रेषु विश्रुतः । यत्र जीवदया नास्ति तत्सर्वं परिवर्जयेत् ॥ १ ॥

ध्रुवं प्राणिवधो यज्ञे नास्ति यज्ञस्त्वहिंसकः । सर्वसत्त्वेष्वहिंसैव धर्मयज्ञो युधिष्ठिर ॥ २ ॥

मीमांसायां—

अन्धे तमसि मज्जामः पशुभिर्ये यजामहे । हिंसा नाम भवेद्धर्मो न भूतो न भविष्यति ॥ १ ॥

जैनागमेऽपि—

धम्मो धम्मु त्ति जगंमि घोसए बहुविहेहिं रूवेहिं ।
सो भे परिक्खियव्वो कणगं व तिहिं परिक्खाहिं ॥ १ ॥
तिन्नि सया तेसठ्ठा दंसणभेया परुप्परविरुद्धा ।
न य दूसंति अहिंसं तं गिण्हह जइ सा सयला ॥ २ ॥

हिंसाविकल्पोऽप्यतिदुःखदाता, दासेरवृत्ताद्विनिशाम्य सम्यक् ।
रागेण रोषेण विहाय हिंसां, चिद्रूपलक्ष्मीं स बभार साधुः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पञ्चमस्तंभे सप्तषष्टितमं व्याख्यानम् ॥ ६७ ॥

## ॥ अथाष्टषष्टितमं व्याख्यानम् ॥ ६८ ॥

अथ कश्चिदज्ञो नर इत्थं वदेत्—मात्सिकवागुरिकादीनामिवास्माकं कुलाचारत्वाच्छागसूकरादिहिंसा न केवलं पापहेतुः । किं त्वीश्वरेणायमेवावतारो दत्तः । अस्मदीयपूर्वजैराचरितं, तदाचरणे न कोऽपि दोष इति । तं प्रतीयं शिक्षा—

कुलक्रमागतां हिंसां परित्यजति यो बुधः । कुमारपालवज्ज्ञेयः स श्रेष्ठः श्रावकोत्तमः ॥ १ ॥

अत्र श्लोकोक्तज्ञातमिदम्—

श्रीपत्तने सिद्धराजे कथाशेषत्वं प्राप्ते विक्रमतो नवनवत्युत्तरैकादशशततमे वर्षे कुमारपालो राजा जज्ञे । यतः—

न श्रीः कुलक्रमायाता शासने लिखिता न च । खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुंधरा ॥ १ ॥

स राजा पञ्चाशद्वर्षवया देशान्तरभ्रमणेन निपुणां राजनीतिमस्थापयत् । दिग्विजयं कुर्वता नृपेणैकादश लक्षा अश्वाः, एकादश लक्षा गजेन्द्राः, पञ्चाशत्सहस्रा रथाः, द्विसप्ततिः सामन्ताः, अष्टादश लक्षाः पदातयः, इत्यादिऋद्धिः कोटी-

ततः स्वर्गाद्धन्यजीवश्चंपायां दत्तेभ्यपुत्रो वरदत्ताह्वोऽभूत्। स च बाल्यादपि विवेकी दानी दयातत्परः सम्यक्त्वं लेभे। सुन्दरीजीवः श्वभ्रान्निर्गत्य भवेषु भ्रान्त्वा वरदत्तगृहे कामुकादासीपुत्रोऽभूत् । दासीपुत्र इति नाम्ना प्रसिद्धः । स च वरदत्तं शत्रुवत्पश्यति, तथापि तद्रंजनार्थं कथंचिद्दयां पालयति । तं धर्मिष्ठं ज्ञात्वा तुष्टः श्रेष्ठीति दध्यौ—'मम धर्मबान्धवोऽयं, परं कर्मतो नीचकुल उत्पन्नः । श्रीजैनमार्गे निश्चयतो न कुलप्राधान्यं । यतः—'न कुलं इत्थ पहाणं' इत्यादि । इति विचिन्त्य जनसमक्षं तं भ्रातरं स्थापितवान् । लोकेऽपि श्रेष्ठिभ्रातेति प्रसिद्धिरभूत् । सोऽपि मायया स्वं भक्तं ज्ञापयति, मनसि तु गृहस्वामी भवितुं श्रेष्ठिनं हन्तुं नानोपायान् करोति । यतः—'मुखं पद्मदलाकारं' इत्यादिलक्षणः । अन्यदा विषलिप्तानि नागवल्लीबिटकानि शयनसमये श्रेष्ठिनो ददौ । श्रेष्ठी तु चतुर्विधाहारप्रत्याख्यानं कृतं स्मृत्वोच्छीर्षे मुक्त्वा सुप्तः । वरदत्तः प्रातर्नमस्कारस्मरणपरो देवान्नन्तुं ययौ । इतो वरदत्तपत्न्या लब्धतत्पत्राणि गृहीत्वा गृहांगणे दासीपुत्रं दृष्ट्वा ऊचे—'देवर ! तांबूलं गृहाण' । सोऽपि स्त्रीरूपगतिकंकणादिमनस्कः स्त्रिया मञ्जुलवाचालापितः प्रीतस्तदभक्षयत् । सहसा भुवि पतितो मृतश्चार्तध्यानात् । मृत्वा समलिकैषा जज्ञे । तत्स्वरूपं वीक्ष्य जातभववैराग्यो निजवित्तं सुक्षेत्रे उप्त्वा स श्रेष्ठी प्रव्रज्यामग्रहीत् । सोऽहम् । एतच्चरित्रं मयोक्तं" । तदा सा समलिका प्राग्भवान् श्रुत्वा जातजातिस्मरणा वृक्षादुत्तीर्य गुरुपादयोः पतित्वा निजं दुश्चरितं क्षमयामास । ततो मुनिवचनादनशनं प्रपद्य स्वर्गं जगाम । राजादयोऽहिंसादिधर्मं स्वीचक्रुः । मुनिस्तु मुक्तिमगमत् ।

स्पष्टः । अत्रार्थे दासीपुत्रप्रबन्धोऽयम्—
कौशांब्यां महीपालो नृपः । तस्योद्याने तृतीयज्ञानी वरदत्तर्षिर्नरसंघमध्ये धर्मदेशनां प्रारब्धवान् । यतः

**जैनाः कुर्वन्ति हि दयां सागसि च निरागसि । समं ह्यर्चिस्तनोतीन्दुर्नृपचंडालवेश्मनोः ॥ १ ॥**

इत्यादिधर्मं कथयता गुरुणाऽकस्माद्धसितं । तदा जातविस्मयाः सभ्याः प्रोचुः—"भगवन् ! हास्येन सप्ताष्टविध आ-
गमे कर्मबन्धः प्रोक्तः । मोहजेतॄणां भवादृशां कथमकांडे हास्यमुत्पन्नं ?" । साधुरूचे—"भद्राः ! शृणुत । एतां निंबस्य
शिखरे समलिकां पश्यत । एषा क्रोधान्मयि पादाभ्यां मारणमिच्छति प्राग्भववैरात्" । तच्छ्रुत्वा सकौतुकाः सभ्यास्तस्याः
प्राग्भवं पृच्छन्ति । साधुः समलिकायाः प्रतिबोधार्थं कथयति—
भरतखंडे श्रीपुरे धन्यः श्रेष्ठी, तस्य भार्या सुन्दरी । सा दुःशीला । अन्यदोपपतिना सैवमूचे—'अद्यप्रभृति त्वया
मम पार्श्वे नागन्तव्यं, अहं त्वद्भर्तुर्बिभेमि' । सुन्दरी प्राह—'प्रियतम मैवं ब्रूयाः । स्तोकदिनमध्ये तथा करिष्ये यथा-
वयोर्भीर्न भविता भर्तृहननात्' । अन्यदा तया दुग्धमध्ये विषं भर्तृहननार्थं क्षिप्तं । भर्तुः परिवेषणार्थं तदानयनाय या-
वत्सा गृहमध्ये याति, तावद्भुजंगेन दष्टा पतिता मृत्युमाप । धन्यः ससंभ्रमो भोजनादुत्थितः । हा किमेतदिति जल्पन्
तां गतासुं वीक्ष्याज्ञाततच्चरित्रः स्नेहाद्विलपत् । सा मृत्वा सिंहोऽभवत् । तद्वैराग्येण धन्यः श्राद्धो दीक्षां जग्राह । अ-
न्यदा वने कायोत्सर्गे स्थितो वैराद्विधिवशात्तत्रागतो व्याघ्रस्तं जघान । ऋषिश्च्युते स्वर्गं जगाम । व्याघ्रस्तु तुर्ये श्वभ्रे ।

क्रोधलोभेनानेकपापवृन्दं कृत्वा तेनाप्यखिलकालः पापकर्मणैव निन्ये । एवं सार्धद्विशतवर्षायुर्भुक्त्वात्रोत्पन्नः । परं मुखं विनाऽस्य माता रत्नां कृत्वाऽस्य देहे निक्षिपति । स आहारो रोमादिच्छिद्रेण मध्ये प्रविश्य पूयरक्तादिभावं प्राप्य निस्सरति । एवं महादुःखेन षड्विंशतिवर्षायुः प्रपूर्याद्ये नरके गन्ता । ततः सिंहत्वं, पुनराद्ये श्वभ्रे, ततः सरीसृपत्वं, ततो द्वितीयनरके, ततः पक्षी भूत्वा तृतीयनरके । एवमन्तरालैर्भवैस्तमस्तमां यावज्ज्ञेयं । ततो मत्स्यत्वं, ततः स्थलचरेषु खचरेषु च । ततश्चतुरक्षेषु । ततः पृथिव्यादिषु च । एवं चतुरशीतिलक्षयोनिषु भूरिशो भ्रान्त्वाऽकामनिर्जरया कर्मलाघवात्प्रतिष्ठानपुरे इभ्यपुत्रो भविष्यति । तत्र साधुसंगमाद्धर्मं प्राप्य सौधर्मे सुरो भविता । ततश्च्युत्वा क्रमात्सिद्धिमवाप्स्यति" । इति श्रीवीरेण लोढकसंबन्धः प्रोक्तः ।

इति निशम्य कथानकमास्तिका, बहुचराचरजन्तुषु हिंसनम् ।
कुरुत चित्तमहिंसकमात्मनः ॥ १ ॥
त्यजत तत्कृतिनो भवहिंसकं, कुरुत चित्तमहिंसकमात्मनः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पञ्चमस्तंभे षट्षष्टितमं व्याख्यानम् ॥ ६६ ॥

---

## ॥ अथ सप्तषष्टितमं व्याख्यानम् ॥ ६७ ॥

अथ कश्चिन्नरो हिंसामनोरथं करोति, तेन स्वयमेव दुःखी स्यादित्याह—

यदि संकल्पतो हिंसामन्यस्योपरि चिन्तयेत् । तत्पापेन निजात्मा हि दुःखावनौ च पात्यते ॥ १ ॥

एतदाकर्ण्य तं दिदृक्षुः स्वामिनिर्देशाद्गौतमो नृपधाम्नि जगाम । अथ नृपस्त्री तं गणपतिं वीक्ष्य प्राह—'भगवन् ! अतर्कितं दुर्लभं युष्मदागमनं कथं जातं ?' गणेशः प्राह—'हे मृगावति ! विभोर्वाक्यात्तव सुतं द्रष्टुमागमनं'। तदा तयाऽन्ये सुभगाकृतिनः पुत्रा दर्शिताः । मुनीशेनोक्तं—'एतान् विना हे भद्रे ! यो भूमिगृहे भद्रोऽस्ति तं दर्शय' । तयोक्तं—"भगवन् ! मुखपट्टीं बन्धय क्षणमेकं प्रतीक्षस्व, भूमिगृह उद्घाटिते दुर्गन्धो दूरे याति" । ततस्तया तस्मिन्नुद्घाटिते मुनीशस्तत्र गत्वा तं ददर्श—

पादांगुष्ठोष्ठनासाक्षिकर्णहस्तादिवर्जितम् । षंढमाजन्मबाधिर्यवन्तं दुःसहवेदनम् ॥ १ ॥

अभ्यन्तराष्टनाडीभिस्तथा बाह्याभिरष्टभिः । पूतरक्तं स्रवन्तीभिर्जन्मतोऽपि पृथक् पृथक् ॥ २ ॥

मूर्तिमत्पातकमिव तं लोढकाकारं वीक्ष्य प्रभुपादान्त एत्यैवं व्यजिज्ञपत्—'स्वामिन् ! केन कर्मणा नारकमिव दुःखमयं वेदयते ?' । प्रभुराह—"शतद्वारपुरे धनपतिनृपस्य राष्ट्रकूटाभिधः सेवकः पञ्चशतीग्रामेशः । स सप्तव्यसनपरो महाकरेण लोकान् दुनोति । कर्णनेत्रादिभेदेन विडंबयति । अन्यदा स्वदेहे तस्य षोडश रोगा उत्पन्नाः ।

यतः—सासे खासे जरे दाहे कुच्छिसूले भगंदरे । हरिसे अजीरए दिठ्ठीमुद्धसूले अरोअए ॥ १ ॥

अच्छिवेअण कंडूय कन्नवेअण जलोअरे । कोढे इमाइणो रोगा पीलयंति सरीरिणं ॥ २ ॥

दुष्टानां दुर्जनानां च पापिनां क्रूरकर्मणाम् । अनाचारप्रवृत्तानां पापं फलति तद्भवे ॥ ३ ॥

॥ अथ षट्षष्टितमं व्याख्यानम् ॥ ६६ ॥

अथ निरन्तरं षड्जीवनिकायहिंसापरस्य फलमुच्यते—

**निरपराधजन्तूनां कुर्वन्ति वधमन्वहम् । असंयता गतघृणा भ्रमन्ति भवकन्दरे ॥ १ ॥**

भावार्थस्तु ज्ञातेन ज्ञेयः । तथा चोक्तं पुष्पमालावृत्तौ—

**वहबंधमारणरया जियाण दुक्खं बहु उईरंता । हुंति मियावइतणय व्व भायणं सयलदुहाणं ॥ १ ॥**

वधोऽत्र जन्तुताडनादिपीडारूपो गृह्यते । बन्धो रज्ज्वादिभिर्जन्तूनां संयमनं । मारणं तेषामेव प्राणवियोजनरूपं । तेषु रताः । तथा जीवानामभ्याख्यानादिभिः दुःखं बहूदीरयन्तः । मृगावतीसूनुरिव समस्तदुःखानां भाजनं भवन्तीत्यर्थः ।

अथात्रार्थे मृगापुत्रकथानकं विपाकसूत्रानुसारेण तन्वते—

श्रीवीरः पृथ्वीं पावयन् मृगग्रामोद्याने समवासरत् । ततश्च ज्येष्ठो गणभृन्मृगग्रामे विहरणायागात् । एषणीयान्नादि गृहीत्वान्वागच्छन् एकं वृद्धमन्धकं कुष्ठिनं नरं रणन्मक्षिकाजालं पदे पदे प्रस्खलन्तं दुःखमन्दिरं वीक्ष्य प्रभोरन्तिके एत्य प्रभुं पप्रच्छ—"स्वामिन् ! मयाद्यैको महादुःखी नरो दृष्टः, तादृशः कोऽपि विश्वे भविष्यति ?" । भगवान् प्राह—"गौतम ! नैतन्महत्तमं दुःखं । यतोऽस्मिन्नेव ग्रामे विजयनृपपत्नी मृगावती । तस्या आद्यपुत्रो लोढकाकृतिर्भृद्यो वर्तते, तस्याग्रे तु कियदिदं दुःखं । यो मुखनेत्रनासादिरहितो दुर्गन्धपूयरक्तस्राविदेहो जन्मतोऽनन्तरं भूमिगृह एव तिष्ठति"।

हे नृप ! स मया सुयुक्त्या निमंत्रितः । तदा ममेमं स्वनेत्रिणं दत्वा प्रोक्तं—"मद्भ्यवलोकनार्थं त्वन्नृपमंत्रिणमनेन सार्धं प्रेषय । अतो द्रुतं तत्र पादा अवधार्यन्तां" । प्रतिहारिणापि तथैवोक्तं । ततो राजानं ज्वलदग्निप्रवेशोत्सुकं विज्ञाय स्वामिद्रोहधिया प्राह—'स्वामिन् ! प्रथमं युष्मदागमनं ज्ञापयितुं सचिवः प्रेष्यताम्' । सचिवोऽपि वर्धापनदानग्रहणोत्सुकोऽग्नौ निपतन्नेव भस्मावशेषतां प्राप । ततो हरिर्नृपं प्राह—"स्वामिन् ! परललनांगसंगबुद्धिं विहाय त्वं चिरं जीव । स्वामिद्रोहं महापापं मत्वा मया मृत्युतो रक्षितः । भूयः पापबुद्धिदस्य मंत्रिणो दर्शनं न भावि" । इति श्रुत्वा खेदमुद्वहन्नृपः स्वगृहे ययौ । ततो नृपस्तस्य चातुर्यं वीक्ष्य स्वकन्यां व्यवाहयत् ।

अथ काञ्चनपुरेशः पथिकोक्त्या स्वसुताहरिबलवृत्तान्तमश्रौषीत् । ततस्तमाहूय तस्मै जामात्रे स्वराज्यं ददौ । हरिर्नृपः स्वराज्येऽमार्युद्घोषणामकारयत् । अथैकदा विहारक्रमेणागतं गुरुं वन्दित्वा धर्मवाक्यं शुश्राव । स्वजनपदे सप्त व्यसनानि न्यवारयत् । स्वपद आत्मजुवं संस्थाप्य स्वयं तिसृभिर्देवीभिः सह प्रव्रज्य मुक्तिं ययौ ।

हरिबलचरित्रमिति भो विभाव्य भव्या इहापि पूर्णफलम् ।
सुकृतप्रासजयायां जीवदयायां कुरुत यत्नम् ॥ १ ॥

विस्तरतोऽस्य चरितं प्रतिक्रमणसूत्रबृहद्वृत्तितो ज्ञेयम् ।

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पञ्चमस्तंभे पञ्चषष्टितमं व्याख्यानम् ॥ ६५ ॥

अथ नृपश्चितामकारयत् । ततो हरिरपि स्वदेवं संस्मृत्य ज्वलदग्नौ प्रविश्य स्वर्णवद्दीप्तिमन्तं देहं कृत्वा तत्क्षणं स्वगृहमगात्, परं केनापि न दृष्टः । इतश्च निर्भयं नृपो हरिबलगृह आगत्य स्त्रियौ कामभोगं ययाचे । तद स्त्रियावूचतुः—

"स्वामिन् ! तव सेवकस्य रमणीनां परिरंभणवाक्यं वक्तुं न युज्यते । यतः—

यामिकतस्तास्कर्यं धाटीपातश्च रक्षकनरेभ्यः । पानीयतः प्रदीपनमिदं तमःप्रसरणं तरणेः ॥ १ ॥"

इत्यादियुक्त्यापि स्वासद्ग्रहममुञ्चन् नृपः ताभ्यां दृढपाशबन्धैर्बद्धः । जर्जरावयवं चक्रतुः । पुनः कृपया मुत्कलीकृतः । प्रगे ह्रिया स्वान्तःपुरे ययौ । अथ हरिर्दध्यौ—"कदाचिदयं घातयति मां दंभेन, अतोऽहं दंभं कृत्वा नृपचक्षुःसचिवं यमातिथिं करोमि । यतः—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।

प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृतांगान्निशिता इवेषवः ॥ १ ॥

इति विचिन्त्य यमराड्वेत्रिरूपं बिभ्रता केनचिन्नरेण सह हरिर्नृपपर्षद्यागात् । नृपतिस्तं दृष्ट्वा विस्मयवान् यमस्वरूपं पप्रच्छ । सोऽपि स्वबुद्ध्या तमवर्णयत् । पुनः प्राह—"किं किं स्वामिन् ! तस्य वचसा वर्णनं क्रियते ? । यत—

योगीन्द्रा अपि योगाभ्यासं नीत्वा व्रजन्ति तस्यैव ।

किं बहुना त्रिभुवनमपि वनमिव सेवां कुर्वते तस्य ॥ १ ॥

संजातज्ञातः पृष्टः स आह—"इतोऽहं चलितः क्रमेणोदधिं दुस्तरं प्राप्य भृशमुद्विविजे, तावत्समुद्रादागतमेकं राक्षसं दृष्ट्वा मया निर्भयं लंकाप्राप्त्युपायः पृष्टः। सोऽप्याख्यत्—यो नरः काष्ठभक्षणमत्र कुर्यात्तस्यैव तत्र प्रवेशः, इति निशम्य प्रभोः कृत्यं सेवकानामवश्यं कार्यमित्युरसिकृत्य चितायां प्रविष्टः। तद्देहभस्मादाय नक्तंचरेण वृत्तमुक्त्वा बिभीषणाग्रे मुक्तं। स नृपः सात्त्विकवृत्त्या तुष्टो मामुदजीजिवत्। ततः स्वसुतां प्रादात्। मया तस्य त्वद्भुक्तनिमंत्रणवृत्तं प्रोक्तं। तदा तेनोक्तं—महतां न्यूनगृहे गमनं मानहानिकरं, अतः प्राक् त्वदाज्ञोऽत्रागमनं योग्यं। पश्चात्त्वद्भुक्तं करिष्ये, एतद्विषय इदमभिज्ञानं गृहाण, इत्युक्त्वा चन्द्रहासखड्गं दत्वा तेन प्रियायुतः स्वशक्त्याऽत्र नीतः"। इत्युक्तितस्तद्वाक्यं सत्यं मत्वा मंत्रिणा सह दध्यौ—"अहो! अयं जीवन् समागात्, पुनश्छलेन दुःखे पातयामि। यतः—

नृपसर्पपिशुनचौरक्षुद्रसुरश्वापदारिशाकिन्यः। दुष्टा अपि किं कुर्युश्छलं विना निष्फलारंभाः॥ १ ॥

अथैकदा हरिबलो भाव्यनर्थमविभाव्य मंत्र्यादिभिः समं पार्थिवं भुक्त्यर्थं निमंत्रयामास। तत्र स्त्रीलावण्यमवेक्ष्य बहुतरकामपीडितो नृपः सचिवं स्वाभिप्रायं प्राह। मंत्र्युवाच—'स्वामिन्! यमनृपाह्वानमिषेणाग्नावसौ क्षिप्यते तदेप्सितं स्यात्'। अन्यदा नृपो हरिमाहूयावदत्—"भोः सात्त्विकेश! त्वां विना वह्निमार्गेण गत्वा कोऽन्यो मद्गृहे यमं निमंत्रयति?"। श्रुत्वेति मंत्रितः प्राप्तबुद्धिं नृपं ज्ञात्वा राजादेशं प्रमाणं कृत्वा स्वगृहे गत्वा दध्यौ। यतः—

"उपकृतिरेव खलानां दोषस्य महीयसो भवति हेतुः।
अनुकूलाचरणेन हि कुप्यन्ति व्याधयोऽत्यर्थम्॥ १ ॥"

प्रोज्जीवयति । अस्य दोषेण कदाचिन्मे मृतिर्न्नविष्यति । अतोऽस्यामेव लग्नवेलायां मत्पाणिग्रहणं कुरु, येन चिरं जी-
वामि" । तेन तथाकृते सा प्राह—"स्वामिन् ! इतो वटुकत्रयत आवयोर्गमनमेव योग्यं, अशक्यबिभीषणनिमंत्रणे-
नालं । परमत्रागमनप्रत्यायनाय त्वन्नृपत्यग्रेऽभिज्ञानं बिभीषणस्य चन्द्रहासमसिं मोचनाय केनचिदुपायेनानयिष्ये" ।
ततस्तया सुगुप्तं तदानीयार्पितं । स्त्रीबुद्ध्या चमत्कृतः स तां तुर्वीं स्त्रियं कृपाणं चादाय नगर्या निरगात् ।
अथ गृहे हरिबलचलनानन्तरमवनिपतिः प्रच्छन्नं तद्गृह एत्य तां स्त्रियं प्रति देहसंगं प्रार्थयत् । साप्यन्तर्द्वेषविषादौ
संवृत्य प्राह—'हे नृप ! मत्पतिशुद्धिनिर्णयावधिं प्रतीक्षस्व' ।

उर्वीशोऽपि व्यमृशन्मद्वश्यैवेयमपि तु पतिमृत्योः । निर्णयमपेक्षते तत्तं कुर्वे कपटवृत्त्यापि ॥ १ ॥

इति ध्यात्वा तस्या वाक्यमनुमत्य गृहमगमत् । अथ हरिबलः स्वपुरोद्याने कुसुमश्रियं विमुच्य स्वाश्रये प्रच्छन्नं समा-
गात् । सापि स्वामिनं दृष्ट्वा विरहव्यथां अकदर्थयत् । ततः परस्परं संजातवृत्तमूचतुः । अथ नृपेप्सितमर्दनाय कञ्चिन्नरं
राज्ञः स्वागमनज्ञप्तये प्रैषीत् ।

गत्वा सोऽपि बत्राषे बिभीषणनृपं निमंत्र्य तत्पुत्रीम् ।
परिणीयोपवनमिह प्रापदहो हरिबलः कुशली ॥ १ ॥

इति कर्णकटुकं वाक्यं श्रुत्वा विस्मयवान्नृपो जनापवादभिया प्रियया युतं तं महोत्सवैः स्वपुरं प्रावेशयत् । राज्ञा

एकदा मंत्रिणा नृपस्य पुरतो वसन्तश्रियो लावण्यरूपादिकं वर्णितम् । नृपस्तु तत्पत्न्यां लुब्धस्तं हन्तुमनाः सभायां प्राह—"मत्सभायां हरिबलं विना कोऽप्यन्यः साहसिको नास्ति, यो लंकेशं बिभीषणं मद्गृहे निमंत्रयति"। सोऽपि स्वोत्कर्षं श्रुत्वा नृपं प्राह—'स्वामिन् ! इदं कार्यं कृत्वा स्तोकेनैव दिनेनागमिष्यामि' । ततो हरिबलेन स्वगृहे स्त्रियं प्रति लंकेशनिमंत्रणगमनार्थं वृत्तमुक्तं "त्वया तु निर्मलं शीलं धार्यं, अहं तु कृतप्रतिज्ञानिर्वाहार्थं गच्छामि । यतः—

**छिज्जउ सीसं अह होउ बंधणं चयउ सव्वहा लच्छी । पडिवन्नपालणेसुं पुरिसाण जं होइ तं होउ ॥१॥"**

इत्युक्त्वा क्रमात् प्रयाणं कुर्वन् जलधितीर आगत्याचिन्तयत्—'कथमहं स्वीकृतं निर्वाहयिष्यामि ?'। इति विचार्य प्राग्दत्तवरं देवं संस्मृत्य झंपां ददौ । तदा देवेन लंकोपवने नीतः । तत्रैकं समृद्धिरम्यं हर्म्यं वीक्ष्य किमेतदिति विमृशन् तस्मिन्नविशत् । तत्रापवरकान्ते बालां यौवनशालिनीं निश्चेतनां वीक्ष्य दध्यौ—'अहो ! किमिदमाश्चर्यं ?' इति विस्मयवान् तस्थौ । तत्रैकं सुधापूर्णं तूर्णं तुंबं दृष्ट्वा पानीयधिया तत्सर्वांगमसिंचत् । तेन सुप्तोत्थितेव सा तत्क्षणमुत्तस्थौ । पुरतस्तं वीक्ष्य लज्जां कृत्वाह—'स्वामिन् ! किमर्थमत्रागाः ?' । तेनाप्यागमनवृत्तं सर्वमुक्तं । पुनस्तेन तत्स्वरूपं पृष्टा सा प्राह—"मम पिता लंकापतेर्देवार्चकः । तेनान्येद्युर्नैमित्तिकः पृष्टः मत्पुत्र्याः कीदृशो वरो भावी ? तेनोक्तं—अस्याः पतिः भूपतिर्भविता । श्रुत्वेति राज्यलोभादियेष मामेष मेष इव मूर्ख उद्वोढुं । धिग्लोभान्धमुन्मार्गैकगमनपरं । यतः—

**रत्तिंधा दीहंधा जच्चंधा मायमाणकोहंधा । कामंधा लोहंधा अठेव य अंधया भणिया ॥ १ ॥**

मदीयस्वच्छन्दतात्यागायात्र मंत्रेण मृतामिव मां कृत्वा स बहिर्याति । स्वजनैर्दूरीकृतोऽयं पुनरागत्यामृतं सिक्त्वा

परस्परं तदेव देवस्थानं ताभ्यां निर्णीतं । वसन्तश्रीस्तु रात्रावश्वारूढा स्वसर्वस्वं संगृह्य तत्र द्वारे समागता । इभ्यपुत्र-
स्त्वित्थं दध्यौ—'नेदं गुणिनामर्हं कुलमालिन्यहेतुः नृपपुत्रीत्वात्' । इति विचार्य स्वगृह एव तस्थौ । यतः—

**स्त्रीजातौ दांभिकता भीरुकता भूयसी वणिग्जातौ । रोषः क्षत्रियजातौ द्विजातिजातौ पुनर्लोभः ॥१॥**

अथ स्त्री देवद्वारे स्थित्वा मध्यगतं हरिबलमाह—'स्वामिन् ! देशान्तरे गम्यते, येनावयोर्मनोरथः फलति' । तेनापि हुंकारः संकेतं ज्ञात्वा कृतः । ततः स्त्रीवचसा बहिर्निःसृतः । तुरंगारूढौ द्वावेव चलितौ । नृपसुता पुनः पुनस्तमालापयति । स पुनः सर्वत्रापि हुंकृतिमुत्तरे ददौ । ततः सा खिन्ना दध्यौ—'अयं कोऽप्यन्य एव' इति चिन्तयन्त्यां तस्यामुद्योते जाते तदा तद्रूपादिकं वीक्ष्य चिन्तार्ता 'धिग्मां' इति दध्यौ—"द्वयमपीष्टं द्विपवन्मम नष्टं ।

**यतः—निदाघे दाहार्तः प्रचुरतरतृष्णातरलितः, सरः पूर्णं दृष्ट्वा त्वरितमुपयातः करिवरः ।**
**तथा पंके मग्नस्तटनिकटवर्तिन्यपि यथा, न नीरं नो तीरं द्वयमपि विनष्टं विधिवशात् ॥ १ ॥**
**दुर्विधिदुर्भगदुष्कुलदुष्टानिष्टादिदयितसंयोगात् । नित्यं जीवन्मरणात् श्रेयस्करणं सकृन्मरणम् ॥२॥"**

इत्यादि भृशं पीड्यमानां तां वीक्ष्य स दध्यौ—'अहो ! धिग्मां, यत इयं कैवर्तेन मया वंचिता' इति चिन्तानिवृत्यर्थं पूर्वतुष्टसुरेण कंदर्पसमं तद्रूपं कृतं । ततो व्योमवाणी प्राह—'ईदृशं पुण्याढ्यं पतिं प्राप्य किमन्यदिच्छसि ?' । ततः परस्परप्रीतिपरौ गान्धर्वविवाहेनोदूहतुः । विशालपुर आगत्य प्रौढगृहं गृहीत्वा तस्थतुः । हरिबल उपहारादिदानेन नृपबहुमानपात्रं बभूव ।



॥ १४१

कलहेनोद्विग्नो मत्स्यजालमादाय नद्यास्तीरमागतः। तत्र मुनिमेकं वीक्ष्य गुरूक्तदेशनां शुश्राव—

किं सुरगिरिणो गुरुअं जलणिहिणो किं च हुज्ज गंभीरं।
किं गयणाउ विसालं कोअ अहिंसासमो धम्मो ॥ १ ॥

किं ताए पढियाए पयकोडीए पलालभूआए। जं इत्तिअं न नायं परस्स पीडा न कायव्वा ॥ १ ॥

महाभारतेऽपि—

यो दद्यात्काञ्चनं मेरुं कृत्स्नां चैव वसुंधराम्। एकस्य जीवितं दद्यान्न च तुल्यं युधिष्ठिर ॥ १ ॥

इत्यादि श्रुत्वा ज्ञातधर्मः स प्राह—"भगवन्! कैवर्तकुलस्य मम रंकगृहे चक्रिभोज्यमिव हिंसानिवृत्तिः दुरत्याज्या"। ऋषिराख्यत्—"अधिकं कर्तुमक्षमश्चेत्तर्हि प्रथमजाले पतितो मत्स्यो मोच्यः, एतदल्पं नियमं गृहाण"। तं नियमं स्वीकृत्य स सरिज्जले गत्वा जालं चिक्षेप। तस्मिन् पीनो मीन एक आयातः, स मुक्तः। पुनरपि जाले स एवागतः। ततोऽभिज्ञानकृते कंठे कपर्दिकां बद्ध्वा मुक्तः। भूयोऽपि स एव पतितः। एवं स्थानान्तरेऽपि सन्ध्यावधिं यावत्स एवायातः। ततो दृढव्रतत्वेन तुष्टः सुर इष्टं वरं वृणीष्वेत्युवाच। स मुदाऽवदत्—'आपदि सपदि मां रक्षेः'। देवो वरं दत्वा तिरोऽभूत्। ततो मत्स्यलाभाभावाद्भार्याभयतो बाह्यदेवकुलेऽस्थात्।

इतश्च नृपसुता गवाक्षस्था कंचिद्धरिबलाह्वमिभ्यपुत्रं वीक्ष्य कथंचिदुपायेन सरागमकरोत्। तयोः संकेतस्थानं देवात्

स स्वनिन्दा श्रुत्वा षंढः शिरःसंज्ञया तान् 'मया तु न हतः' इत्यज्ञापयत् । ततो लोकैस्तौ नृपाग्रे नीतौ । तदा सचिवेनोक्तं—'द्वयोर्मध्ये यस्तप्तायोगोलकं जिह्वया लेढि स सत्यप्रतिज्ञः' । तदा वृषभः संज्ञया ॐमित्युक्त्वा सद्यो नृपकारिततप्तायोगोलकं लेढि स्म । रामा तु श्याममुखी बभूव । नृपेण नगराद्दूरीकृता ।

श्रेष्ठी तु ( बलीवर्दस्तु ) दुःखसंकुलेऽपि त्रिधा स्वमहिंसाधर्मं न मनाग् मुमोच ।

**विवेकवन्तं वृषभं चकार यो जैनदासः श्रुतिवाचकेन ।**
**सहापराधां वनितामवेक्ष्य दध्यौ न हिंसां मनसा मनाक् सः ॥ १ ॥**

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ चतुःषष्टितमं व्याख्यानम् ॥ ६४ ॥

## ॥ अथ पञ्चषष्टितमं व्याख्यानम् ॥ ६५ ॥

अथ कुलक्रमायातां हिंसां मुञ्चति, तं स्तौति—

**वंशक्रमागतां हिंसामपि त्यजति यो बुधः । स स्याद्धरिबल इव राज्यादिसंपदां पदम् ॥ १ ॥**

अत्रार्थे श्लोकोक्तं ज्ञातमिदम्—

काञ्चनपुरे जितारिर्नृपः । तस्य वसन्तश्रीः सुता लावण्यादिरूपाञ्चिताऽभवत् । इतश्चैको हरिबलनामा कैवर्तको भार्या-

गृहीत्वा शून्यागारे तमजानन्त्यागत्य खट्वा तत्र गृहे क्षिप्ता । दैवाच्छ्रेष्ठिपदोपरि पल्यंकपादः समायातः । तत्स्थिरीकरणार्थं पादेषु कीलिकाः भूमिं यावन्मुद्गरघातेन निहिताः । एकेन कीलकेन श्रेष्ठिपादो विद्धः । महाव्यथायां तन्मिथुनमेलापकभाराक्रान्तः स चिन्तयति—

सह कलेवर खेदमचिन्तयन् स्ववशता हि पुनस्तव दुर्लभा ।
घनतरं च सहिष्यसि जीव हे परवशो न च तत्र गुणोऽस्ति ते ॥ १ ॥

मृत्योर्बिभेषि किं बाल स च भीतं न मुञ्चति । अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ २ ॥

दोषजालमपहाय मानसे धारयन्ति गुणमेव सज्जनाः ।
क्षारभावमपहाय वारिधेर्गृह्णते सलिलमेव वारिदाः ॥ ३ ॥

इति स्वदोषान् जग्राह, परं तस्यै न चुकोप । ततः शुक्लध्यानेन मृत्वा सौधर्मस्वर्गं प्राप । ततः प्रत्यूषे स्वस्वामिमरणं ज्ञात्वा 'अहो ! इदमकार्यं जातं, अदः किं करिष्ये ?' । इतश्च बलीवर्द आवश्यकाय श्रेष्ठिदर्शनाय चाययौ । ततश्च स्त्रिया श्रेष्ठिरुधिरेण तस्य शृंगे लिप्ते । पश्चाद्धुंबारवं हृदयताडनादिकमकरोत्—'अनेन मत्पतिर्हतः' । तच्छ्रुत्वा बहुजनास्तं निनिन्दुः । यतः—

जलमज्झे मच्छपयं आगासे पंखिआण पयपंति। नारीण हियमग्गे तिन्नि वि मग्गे अमग्गु त्ति॥ १ ॥

तथाविधं धर्मं जानन् स्थावरेष्वपि निरर्थकां हिंसां न विदधीत । इति तात्पर्यार्थः । अथैतद्व्रतं स्तौमि—

सर्वव्रतेष्विदं मुख्यं सर्वज्ञैः परिभाषितम् । पालनीयं प्रयत्नेन सर्वपापापहं नरैः ॥ १ ॥

कंठ्यः । अत्रार्थे जिनदासश्राद्धस्यायं प्रबन्धः प्राकृतमुनिपतिचरित्रानुसारेण लिख्यते—

चंपायां जिनदासः श्राद्धो गुरुमुखाद्धर्मदेशनां श्रुत्वा दर्शनमूलानि व्रतानि जग्राह । तेनैकदा बलीवर्दमेकं निर्लाञ्छनादिदुःखतः कृपया मोचितः । यतः—

दयां विना देवगुरुक्रमार्चास्तपांसि सर्वेन्द्रिययंत्रणानि ।

दानानि शास्त्राध्ययनानि सर्वं सैन्यं गतस्वामि यथा वृथैव ॥ १ ॥

शशकात् कुञ्जरो मेघो मेतार्यः क्रौञ्चतः शिवम् । कपोताच्छान्तिनाथोऽभूत् सुव्रतः षष्टियोजनीम् ॥ १ ॥

चाणाक्येऽपि—

त्यजेद्धर्मं दयाहीनं क्रियाहीनं गुरुं त्यजेत् । त्यजेत्क्रोधमुखीं भार्यां निःस्नेहान् बान्धवांस्त्यजेत् ॥ १ ॥

सोऽपि ककुद्मान् श्रेष्ठिमुखान्नित्यं प्रतिक्रमणशास्त्रादिश्रवणेन देशविरतिं प्राप । अष्टम्यादिषु प्रासुकं तृणादिकं विना न भुंक्ते श्रेष्ठिस्वगुरुदर्शनं विना च । अन्यदा पर्वदिने श्रेष्ठी शून्यगृहेऽष्टम्यां निशि पौषधं, गृहीत्वा कायोत्सर्गे स्थितः । इतश्च श्रेष्ठिभार्या कुलटैककर्मा एकेन नरेण सार्धं तच्छून्यगृहे संकेतं चकार । रात्रावेकपर्यंके चतुर्लोहकीलकं जारं च

यगुणं वृद्धमेकं बादरवायुशरीरं ज्ञेयं । ततोऽसंख्यातगुणं बादराग्निदेहपरिमाणं । ततोऽसंख्यातगुणमेकं बादरजलवपुः । ततोऽसंख्यातगुणमेकं बादरपृथ्वीकायशरीरं । ततोसंख्यातगुणमेकं बादरनिगोदशरीरं स्यात् । अत्र बादरपृथ्वीकायवपुषः सूक्ष्मता इयं—यथा कश्चिद्युवान् प्रयत्नेनाहिरणे निहितवज्रकमुपरि घनेन ताडयति, परं भंगो न भवति, प्रत्युतायस्काराहिरणे प्रविशति । तद्वज्ररत्नं चक्रिणः स्त्री स्वहस्तेन चूर्णं कृत्वा स्वस्तिकं पूरयति । सा स्त्री निसातरके एकविंशतिवारान् यावन्मर्दयति, तदा केषांचिज्जीवानां पीडा स्यात्, केषांचिन्न मूलतोऽपि, केषांचिन्मरणं, कैश्चिज्जीवैरल्पमपि दुःखं न प्राप्तमस्ति । यथा कस्मिंश्चिन्महापुरे कस्यचिद्गृहे चौरेण द्रव्यं लुंटितं, तद्वार्तां कश्चिज्जानाति, कश्चिन्मूलतोऽपि न जानाति । तद्दृष्टवणाद्यपक्वपृथ्वीकायेषु ज्ञेयं । समयानुसारेण स्थावरेषु जीवत्वमुच्यते—

पत्तंति पुप्फंति फलं ददंति कालं वियाणंति तहिंदियत्थे ।
जाई य बुद्धी य जरा य तेसिं कहं न जीवा उ हवंति ते उ ॥ १ ॥

ये पत्रयन्ति पत्राणि मुञ्चन्ति । पुष्प्यन्ति । फलं ददन्ति । कालं च स्वपत्रपुष्पफलनिमित्तं जानन्ति । तथा इन्द्रियार्थान् गीतादीन् ये विजानन्ति । बकुलादीनां तथादर्शनात् । तथा तेषां जातिर्वृद्धिर्जरा च । ते कथं जीवा न भवन्ति । भवन्त्येवेति भावः । प्रयोगश्च—वनस्पतयो जीवाः, जातिजरावृद्ध्याद्युपेतत्वात्, मनुष्यवत् । सात्मकं जलं, भूमेः स्वाभाविकसंभवात्, दर्दुरवत् । सात्मको वह्निः, आहारेण वृद्धिदर्शनात्, बालवत् । सात्मकः पवनः, अपरप्रेरिततिर्यग्नियतदिग्गमनात्, गोवत् । सचेतनास्तरवः, सर्वत्वगपहरणे मरणात्, गर्भ ( गर्दभ ) वत् । एवमागमोपपत्तिभ्यां तेषां जीवत्वं सिद्धं ज्ञात्वा । ततश्च

तत्त्यागतो द्वितीयकषायं विना पञ्चमगुणस्थानसत्का देशविरतिर्हितेभूनां भवेत्। शेषं स्पष्टम्।

ननु गृहस्थानां त्रसजीवहिंसा निषिद्धा, तर्हि स्थावरेषु यथेष्टं तां कुर्वन्ति ?। उच्यते—

**स्थावरेष्वपि जीवेषु विधेयं न निरर्थकम्। हिंसनं करुणाधारैर्मोदकादैरुपासकैः ॥ १ ॥**

न हि प्रतिषिद्धत्रसहिंसयैव धर्मः, किं तु शरीरकुटुंबादिप्रयोजनं विना कुर्वन्तः स्थावरहिंसामपि व्रतं मलिनयन्ति। अतोऽप्रतिषिद्धेष्वपि यतनां कुर्वन्ति। श्रावकेण त्रसादिरहितं संखारकसत्यापनादिविधिना परिमितानि चेन्धनानि सम्यक् शोधितान्येद व्यापार्याणि, अन्यथाऽनुकंपाव्यभिचारापत्तेः। तदुच्यते—

**परिसुद्धं जलगहणं दारुयधन्नाइआण य तहेव। गहियाण य परिभोगो विहीइ तस्स रक्खणट्ठाए ॥१॥**

पृथिव्यादीनां चागमे जीवमयत्वमेवमुक्तं—

**अद्दामलगपमाणे पुढवीकाए हवंति जे जीवा। ते जइ सरिसवमित्ता जंबूदीवे न माइंति ॥ १ ॥**

**एगम्मि उदगबिंदुम्मि जे जीवा जिणवरेहिं पन्नत्ता। ते जइ सरिसवमित्ता जंबूदीवे न माइंति ॥१॥**

यद्वा पृथिव्यादिपञ्चसूक्ष्मजीवानां द्विधाप्यवगाहनाऽङ्गुलासंख्येयभागेन ज्ञेया। अनन्तजीवाश्रितमेकं वपुस्तन्निगोदैकसूक्ष्मशरीरं स्यात्। तदसंख्येयानि शरीराण्येकत्रीकृते एकं सूक्ष्मवायुशरीरं जायते। ततोऽसंख्येयगुणं एकं सूक्ष्मतेजःशरीरं। ततोऽसंख्यातसूक्ष्मतेजोदेहानां मिलने एकं सूक्ष्मजलवपुः। ततोऽसंख्यातगुणमेकं सूक्ष्मपृथ्वीवपुः। ततोऽसंख्ये-

इत्युक्त्वा स्वदेशादिभ्य आनाय्यैकलक्षाशीतिसहस्रमितजालानि सहस्रशश्चान्यहिंसोपकरणानि चौलुक्यमंत्रिप्रत्यक्षं ज्वालितानि स्वदेशेषु चामारिपटहो दापितः । ततो द्विगुणं प्राभृतं दत्वा विसृष्टाः प्रधानाः पत्तने भूपं प्रति सर्ववृत्तान्तं निवेदितवन्तः । स्वयमपि अष्टादशलक्षवाजिषु पर्याणकादीनि प्रोंछनिकान्वितान्यकारयत् । इत्यादयोऽवदातास्तच्चरित्रतो ज्ञेयाः ।

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ त्रिषष्टितमं व्याख्यानम् ॥ ६३ ॥

## ॥ अथ चतुःषष्टितमं व्याख्यानम् ॥ ६४ ॥

अथ हिंसाभावाद्विरतिः स्यादित्युच्यते—

**चतुर्धा द्रव्यभावाभ्यां हिंसा त्याज्या हितेच्छुभिः । ततस्तेषां भवेद्देशविरतिः प्राणिसौख्यदा ॥ १ ॥**

द्रव्यभावाभ्यां हिंसा चतुर्विधा । तत्र द्रव्यतो न तु भावत ईर्यासमितस्य साधोः सत्त्ववधे । भावतो न तु द्रव्यतोऽङ्गारमर्दकस्य कीटबुद्ध्याङ्गारमर्दने, मन्दप्रकाशे रज्जुमहिबुद्ध्या घ्नतो वा । न च द्रव्यतो न च भावतो मनोवाक्कायैः शुद्धस्य साधोः । द्रव्यतो भावतश्च हिंसा हन्मीतिपरिणतस्य व्याधस्य मृगवधे ।

हिंसनं हिंसा । यदाहुर्वाचकवरास्तत्त्वार्थभाष्ये—'प्रमादात्प्राणव्यपरोपणं हिंसा । यद्वा उक्तं च—

"पञ्चेन्द्रियाणि त्रिविधं बलं च उच्छ्वासनिःश्वासमथान्यदायुः ।
प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोगीकरणं तु हिंसा ॥ १ ॥

एवं तत्त्ववृत्त्या सर्वजीवरक्षका जैना एव न तु द्विजास्तद्विपरीताः । परमार्थतस्तु नित्यश्चिद्रूपो ज्ञानात्मना व्याप्नो-
तीति विष्णुः इति निरुक्तेर्जिन एव विष्णुः, तद्भक्तानां मुक्तिरेवेति निश्चयः" । इत्याद्यनेकविधोपदेशैर्ज्ञातधर्मो राजाहिं-
सादिव्रतं जग्राह । ततो वर्णचतुष्टये 'स्वस्यान्यस्य वा हेतवे यः कोऽपि जीवान् हन्ता स राजद्रोही' इति पत्तने पटहम-
वादयत् । मात्सिकशौनिकादीनामपि निष्पापवृत्त्या निर्वाहं कारयन् दयामयत्वं व्यधात् ।

तदनु काशीदेशे बहुमीनहिंसां श्रुत्वा तन्निवारणायैकं पटं हिंसाहिंसाफलं स्वर्गनरकादिचित्रैश्चित्रितं, तन्मध्ये श्रीगु-
रुमूर्तिः, तत्पुरः स्वमूर्तिः, एवंविधं चित्रपटं द्विकोटिस्वर्णद्विसहस्रजात्यतुरंगादिकं प्राभृतं स्वमंत्रिहस्तैर्वाणारसीशं जयच-
न्द्रनृपं सप्तशतयोजनभूमिभुजं चत्वारिंशच्छतगजषष्टिलक्षवाजित्रिंशल्लक्षपदातिचमूवृतं गंगायमुनातीरं विनाऽन्यत्र गन्तुं
न शक्नोति तेन पंगुराजेतिविरुदं वहन्तं प्रति प्रहितं । कतिचिद्दिनैर्नृपास्यं दृष्ट्वा मंत्रिभिश्चित्रपटो दर्शितः । कथितं यथा-
वत्स्वरूपं—"इयमस्मदीयराजगुरुमूर्तिः, गुरुणा पुण्यपापफलमेवमादिकं प्रदर्श्यायमस्मन्नृपो ग्राहितो जीवदयाधर्मं । नृपे-
णापि वादितोऽमारिपटहः सर्वत्र । प्रत्यब्दं चतुर्विंशतिशतमहिषबलिग्राहिण्या स्वकुलदेव्या श्रीगुरुसाहाय्येन ग्राहितम-
ष्टादशदेशानां तत्पारक्षत्वं । सांप्रतमस्मन्नृपवैरिणी सा हिंसा कुत्रापि स्थानमलभमाना श्रीकाशीदेशं व्याप्नुवन्त्यस्ति, तन्नि-
वारणाय प्राभृतहस्ता अत्र प्रहिताः स्मः" । ततस्तुष्टः काशीराजः प्राह—

"युक्तं श्रीगुर्जराधीशो विवेकेन बृहस्पतिः । सर्वतो दीप्यते यस्मादीदृग् नृपः कृपामयः ॥ १ ॥
स स्वयं कारयन्नस्ति कृपां तत्प्रेरितोऽप्यहम् । न कारयेयं यद्येनां मतिर्मे तर्हि कीदृशी ॥ २ ॥"

पयोदपटलैश्छन्ने नाश्नन्ति रविमंडले । अस्तंगते च भुञ्जाना अहो भानोः सुसेवकाः ॥ १ ॥"

भूयो नृपः पप्रच्छ—'विष्णुं विना न मुक्तिर्जैनानामित्यन्ये ब्रुवन्ति, तत्कथं ?' । सूरय ऊचुः—"हे राजन् ! सत्यं, परं वैष्णवा जैनर्षय एव । यतो गीतायामर्जुनाग्रे विष्णुवाक्यं—

पृथिव्यामप्यहं पार्थ वायावग्नौ जलेऽप्यहम् । वनस्पतिगतश्चाहं सर्वभूतगतोऽप्यहम् ॥ १ ॥
यो मां सर्वगतं ज्ञात्वा न च हिंसेत् कदाचन । तस्याहं न प्रणश्यामि स च मां न प्रणश्यति ॥ २ ॥

तथा च विष्णुपुराणे पराशरः प्राह—

परस्त्रीपरद्रव्येषु जीवहिंसासु यो मतिम् । न करोति पुमान् भूप तोष्यते तेन केशवः ॥ १ ॥
यस्य रागादिदोषेण न दुष्टं नृप मानसम् । विशुद्धचेतसो विष्णुः स्तोष्यते तेन सर्वदा ॥ २ ॥

तत्रैव यमकिंकरसंवादे

न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः स्थिरमनसं तमवेहि विष्णुभक्तम् ॥ १ ॥
विमलमतिरमत्सरः प्रशान्तः शुचिचरितोऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ २ ॥

धर्मः सर्वदयामूल एव प्रामाण्यमश्नुते । तस्माद्भ्रान्तिं परिहृत्य दयाधर्मे स्थिरीभव ॥ १ ॥"

इत्यादिवचसा जैनधर्मं सत्यतया मन्यमानः पुनः प्राह—"भगवन् ! अन्ये 'जैनास्तु वेदबाह्या न नम्याः' इति कथयन्ति, तत्कथं ?" । सूरिराह—"राजन् ! वेदाः कर्ममार्गप्रवर्तकाः, वयं तु नैष्कर्म्यमार्गिणः, अतः कथं वेदप्रामाण्यं ? । उत्तरमीमांसायां वेदा अवेदाः, लोका अलोकाः, यज्ञा अयज्ञा इत्यादि ।

अविद्या पठ्यते वेदे कर्ममार्गः पितामह । तत्कथं कर्मणो मार्गं त्वं तु मामुपदिशसि ॥ १ ॥

रुचिप्रजापतिस्तोत्रे पुत्रवाक्यमिदम् । यदि वेदेषु जीवदयास्ति तर्हि सर्वशास्त्रशुद्धां दयां कुर्वाणाः कथं वेदबाह्याः ?

सर्वे वेदा न तत्कुर्युः सर्वे यज्ञाश्च भारत । सर्वे तीर्थाभिषेकाश्च यत्कुर्यात् प्राणिनां दया ॥ १ ॥

अथ वेदेषु दया नास्ति तर्हि न प्रमाणं नास्तिकशास्त्रवत्" । इत्यादिगुरुवाक्याद्वेदोक्तमप्रमाणममन्यत । पुनरन्यदा सूरिं प्राह—"भट्टारक ! अन्ये वदन्ति यज्जैनाः प्रत्यक्षं देवं सूर्यं न मन्यन्ते" । तदा सूरिभिरुक्तं—राजन् ! शृणु, स्कन्दपुराणान्तर्गतरुद्रप्रणीतकपालमोचनस्तोत्रे—

"त्वया सर्वमिदं व्याप्तं ध्येयोऽसि जगतां रवे । त्वयि चास्तमिते देव आपो रुधिरमुच्यते ॥ १ ॥

त्वत्करैरेव संस्पृष्टा आपो यान्ति पवित्रताम् ।"

इतिप्रामाण्याद्रात्रौ भोजनोदकं त्यजन्तस्तत्त्वतो वयमेव मन्यामहे । अपि चोक्तं केनापि—

यदि यज्ञार्थं पशवो ब्रह्मणा स्रष्टास्तर्हि व्याघ्रादिभिर्देवाः किं न तर्प्यन्ते ?

अहिंसासंभवो धर्मः स हिंसातः कथं भवेत् । न तोयजानि पद्मानि जायन्ते जातवेदसः ॥ १ ॥

पद्मपुराणेऽपि—

न वेदैर्नैव दानैश्च न तपोभिर्न चाध्वरैः । कथंचित्सद्गतिं यान्ति पुरुषाः प्राणिहिंसकाः ॥ १ ॥

सांख्यैः—

षट्त्रिंशदंगुलायामं विंशत्यंगुलविस्तृतम् । दृढं गलनकं कार्यं भूयो जीवान् विशोधयेत् ॥ १ ॥

त्रिंशदंगुलमानं तु विंशत्यंगुलमायतम् । तद्वस्त्रं द्विगुणीकृत्य गालयित्वोदकं पिबेत् ॥ २ ॥

तस्मिन् वस्त्रे स्थितान् जन्तून् स्थापयेज्जलमध्यतः । एवं कृत्वा पिबेत्तोयं स याति परमां गतिम् ॥३॥

इति लिंगपुराणे ।

लूतास्यतंतुगलिते ये बिन्दौ सन्ति जन्तवः । सूक्ष्मा भ्रमरमानास्ते नैव मान्ति त्रिविष्टपे ॥ १ ॥

कुसुंभकुंकुमांभोवन्निचितं सूक्ष्मजन्तुभिः । तद्दृढेनापि वस्त्रेण शक्यं नो शोधयेज्जलम् ॥ २ ॥

इत्युत्तरमीमांसायाम् ।

गृहप्रियापुत्रपदातिबान्धवाः पुराकरग्रामनरेन्द्रसंपदः ।
भवन्ति जीवस्य पदे पदे परं बुधार्चिता तत्त्वरुचिर्न निर्मला ॥ २ ॥"

राजाह—"स्वामिन् ! प्रत्यहं मत्प्रतिबोधनाय सदसि समागन्तव्यं, येनानेकविप्रादिप्रणीतपक्षनिरासेन मम सम्यग्धर्मबुद्धिः स्यात्" । ततः प्रत्यहं विप्रादिभिः सह वादं स्याद्वादस्थापनं च सूरयश्चक्रुः ।

एकदा सभायां नृपेण पृष्टं—'सर्वधर्मेषु मध्ये कः श्रेष्ठः ?' । सूरिराह—"भोजराजाग्रे सरस्वतीदत्तश्लोकः सर्वदर्शनसंवादेन प्रोक्तश्च—

श्रोतव्यः सौगतो धर्मः कर्तव्यः पुनरार्हतः । वैदिको व्यवहर्तव्यो ध्यातव्यः परमः शिवः ॥ १ ॥'

राजा पुनः प्राह—

"ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितिं पुनः ॥ १ ॥

इत्यादिवेदोक्तहिंसां धर्मत्वे केचिन्मन्यन्ते तत्कथं ?" । सूरिराह—"राजन् ! न तत्सत्यं, यतः स्कन्दपुराणेऽष्टपञ्चाशत्तमेऽध्याये—

वृक्षांश्छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् । दग्ध्वा वह्नौ तिलाज्यादि चित्रं स्वर्गोऽभिलष्यते ॥१॥
यज्ञार्थं पशवः स्रष्टा यदीति वदति स्मृतिः । तन्मांसमश्नतः स्मार्ता वारयन्ति न किं नृपान् ॥ २ ॥

नुत्पत्तिः । अत्रोच्यते—मुख्यतया प्राणातिपात एव प्रत्याख्यातो न वधादयः, परमार्थतस्तेऽपि प्रत्याख्याता एव द्रष्टव्याः, प्राणातिपातहेतुत्वात् तेषां । यद्येवं तर्हि तत्करणे व्रतभंग एव नातिचारः, नियमस्यापालनात् । नैवं, द्विविधं हि व्रतं, अन्तर्वृत्त्या बहिर्वृत्त्या च । तत्र यदा कोपाद्यावेशाद्वधादौ प्रवर्तते तदा दया शून्यात्वान्नमन्तर्वृत्त्या व्रतं, स्वायुर्बलीयस्त्वादिना त्वमृते जन्तौ बहिर्वृत्त्या पालितं, ततो भंगाभंगरूपोऽतिचारः । यत उक्तं—'न मारयामीति कृतव्रतस्य विनैव मृत्युं क इहातिचारः ?' । इत्याशंक्योत्तरमाह—"निगद्यते यः कुपितो वधादीन् करोत्यसौ स्यान्नियमानपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य कोपाद्दयाहीनतया तु भग्नः । देशस्य भंगादनुपालनाच्च पूज्या अतीचारमुदाहरन्ति ॥२॥" अमी अतिचारा यथा न भवन्ति तथा प्रवर्तितव्यमित्यर्थः । एतद्व्रतपालनविषये कुमारनृपवर्णनम्—

श्रीहेमचन्द्रसूरयो महोत्सवेनोदयनमंत्रिणा पत्तने प्रवेशिताः । ततः कदाचित्सूरिभिरूचे—"मंत्रिन् ! त्वं भूपं रहो ब्रूयाः—अद्य त्वया नव्यराज्ञीगृहे नैव स्वप्तव्यं, रात्रौ सोपसर्गत्वात् । केनोक्तमिति पृच्छेच्चेत्तदाऽत्याग्रहे मन्नाम वाच्यं" । ततो मंत्रिवचसा राज्ञा तथा कृतं । निशि विद्युत्पाताद्गृहे दग्धे राज्ञ्यां च मृतायां चमत्कृतो राजा सूरीनाकारयामास सदसि । सूरीन् दृष्ट्वासनं मुक्त्वा नत्वोवाच—"भगवन्नहं निजास्यमपि दर्शयितुं नालं भवतां । तदा स्तंभतीर्थे रक्षितः । अत्रापि जीवितदानं दत्तं । अतो मद्राज्यं गृहीत्वा मामनृणीकुरुताम्" । सूरिरुवाच—"राजन् ! निःसंगानां किं राज्येन ?

**कृतज्ञत्वेन चेद्भूप त्वं प्रत्युपचिकीर्षसि । आत्मनीने तदा जैनधर्मे धेहि निजं मनः ॥ १ ॥**

भजश्च । तत्र संकल्पान्मारयाम्येनमिति मनःसंकल्परूपाद्यो जायते तस्माद्गृही निवृत्तो न त्वारंभजात्, कृष्याद्यारंभे त्रसघातत्वात्, अन्यथा देहस्वजननिर्वाहाद्यभावात् । एवं पुनरर्धं गतं । जाताः पञ्च विंशोपकाः । संकल्पजोऽपि द्विधा—सापराधो निरपराधश्च । तत्र निरपराधान्निवृत्तिः । सापराधे तु गुरुलाघवचिन्तनं यथा गुरुरपराधो लघुर्वेति । एवं पुनरर्धे गते सार्धौ द्वौ विंशोपकौ जातौ । निरपराधवधोऽपि द्विधा—सापेक्षो निरपेक्षश्च । तत्र निरपेक्षान्निवृत्तिः, न तु सापेक्षात् । निरपराधेऽपि वाह्यमानमहिषहयादौ पाठादिप्रमत्तपुत्रादौ च सापेक्षतया वधबन्धनादिकरणात् । ततः पुनरर्धे गते सपादो विंशोपकः स्थितः श्रावकस्य जीवदया । एवंविधं श्रावकस्य प्रायः प्रथमाणुव्रतं ।

एतद्व्रतस्य पञ्चातिचारा हेयास्त उच्यन्ते—

**क्रोधाद्बन्धश्छविच्छेदोऽधिकभाराधिरोपणम् । प्रहारोऽन्नादिरोधश्चाहिंसायाः परिकीर्तिताः ॥ १ ॥**

बन्धो रज्ज्वादिना गोमनुष्यादीनां नियंत्रणं, स्वपुत्रादीनामपि विनयग्रहणार्थं क्रियते । अतः क्रोधात्प्रबलकषायाद्यो वधः स प्रथमोऽतिचारः । छविः शरीरत्वचा, तस्याश्छेदः कर्णादिकर्तनं, क्रोधादित्यनुवर्तते, स द्वितीयोऽतिचारः । अधिकस्य वोढुमशक्यस्य गोकरभरासभमनुष्यादेः स्कन्धे पृष्ठे भारस्यारोपणं लोभाद्वा क्रोधात् स तृतीयोऽतिचारः । प्रहारो वधः लगुडादिना निर्दयताडनं क्रोधादिना चेति चतुर्थोऽतिचारः । अन्नादिरोधो भक्तपानव्यवच्छेदः क्रोधादेर्वेति पञ्चमोऽतिचारः ।

आह—केऽमी वधादयोऽतिचाराः, तेषामनंगीकृतत्वेन मालिन्याभावात्, अंगीकृतविरतेश्चाखंडितत्वात् अतिचारा-

श्रीकुमारधरणीभृतः कथं कथ्यतेऽत्र महिमा प्रमातिगः ।
यः कृपाव्रतमिहाश्रितः स्वयं तन्मयं च निखिलं जगद्व्यधात् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ पञ्चमस्तंभे द्विषष्टितमं व्याख्यानम् ॥ ६२ ॥

॥ अथ त्रिषष्टितमं व्याख्यानम् ॥ ६३ ॥

अथ गृहिणां मुनिभ्यः सपादविंशोपकभागेन जीवदया स्यात्तदुच्यते—

आद्यव्रते गृहस्थानां सहपादा विंशोपका । दया निदर्शिता पूज्यैर्नाधिका तु प्रकाशिता ॥ १ ॥

स्पष्टः । नवरं सपादविंशोपकदया तु इत्थं स्यात् । यत उक्तं प्राचीनसूरीन्द्रैः—

"थूला सुहुमा जीवा संकप्पारंभओ भवे दुविहा । सावराहनिरवराहा साविक्खा चेव निरविक्खा ॥१॥"

प्राणिवधो द्विविधः स्थूलसूक्ष्मजीवाभ्यां । तत्र स्थूलास्त्रसाः सूक्ष्माश्चात्रैकेन्द्रियादयः पृथिव्यादयः पंच, न तु सूक्ष्मनामकर्मोदयवर्तिनः सर्वलोकव्यापिनः, तेषां वधाभावात्, स्वयमायुःक्षयेणैव मरणात् । तेषामविरतिबन्धः, न तु हिंसाजन्यबन्धः । अत्र साधूनां द्विविधादपि वधान्निवृत्तत्वाद्विंशतिर्विंशोपका दया । गृहस्थानां स्थूलजीववधान्निवृत्तिः, न तु सूक्ष्मेभ्यः पृथ्वीजलादिषु सततमारंभिणां । इति दशविंशोपकरूपमर्धं गतं । स्थूलप्राणिवधोऽपि द्विधा—संकल्पज आरं-

म्रियन्ते मिष्टतोयेन पूतराः क्षारसंभवाः । क्षारतोयेन मिष्टाश्च न कुर्यात्संकरं ततः ॥ ५ ॥

इति पुराणोक्तश्लोकपत्रिहस्ताः स्वाप्तजनाः सर्वत्र स्थाने स्थाने देशे देशे पुरे पुरे ग्रामे ग्रामे प्रहिताः जीवदयानिमित्तं । ततो नृपः किं कोऽपि कुत्रापि जन्तून् हिनस्ति न वेति ज्ञातुं विष्वक् प्रछन्नचरान् प्रैषीत् । ते चाजस्रं सर्वत्र भ्रमन्तः कस्मिंश्चिद्ग्रामे महेश्वरं वणिजं वेणीतो भार्याकर्षितां हस्ते मुक्तां यूकामेकां व्यापाद्यमानं दृष्टवन्तः । ततस्तैश्चरैः स श्रेष्ठी यूकासहितः पत्तने नीतो राज्ञोऽग्रे । राजाह—'रे दुष्टचेष्टित ! किमिदं दुष्कर्म कृतं ?' । श्रेष्ठी प्राह—'एषा मन्मूर्ध्नि मार्गं कृत्वा रक्तं पिवतीत्यन्यायेन हता' । राजाह—"रे दुष्ट ! जीवानां स्थानभ्रष्टकरणात्त्वमेवान्यायी । यदि जन्तुहत्यातो न बिभेषि तर्हि मदाज्ञालोपादपि न" इति तर्जितः । ततः स्वजीवभिक्षां याचमानो नृपेणोक्तः—"त्वं गृहसर्वस्वं व्ययीकृत्य यूकापापप्रायश्चित्ते यूकाविहारं कारय । यथा तं दृष्ट्वा न कोऽपि जीववधमाचरति" । तेन तथा स्वीकृतं ।

अमारिकरणं तस्य वर्ण्यते किमतः परम् । द्यूतेऽपि कोऽपि यन्नोचे मारिरित्यक्षरद्वयम् ॥ १ ॥

ततो नृपेण सप्त व्यसनानि हिंसाकारणानि ज्ञात्वा पटहोद्घोषणपूर्वं मृन्मयानि नृरूपाणि मषीलिप्तमुखानि सप्तापि व्यसनानि नामांकितानि कृत्वा, रासभमारोप्य काहलादिवादनपूर्वं चतुरशीतिचतुष्पथभ्रमणयष्टिमुष्ट्यादिताडनपूर्वं पत्तनान्निजान्यदेशाच्च निरवासयत् । इत्यादिबहव उदन्ता जिनमंडनकृतादस्य चरित्रतो ज्ञेयाः ।

गोपो बब्बुलशूल्यग्रे प्रोतयूकोत्थपातकात्। अष्टोत्तरशतं वारान् शूलिकारोपणान्मृतः ॥ २ ॥

तथा लौकिकैः कल्पिता जीवदया—

कुलानि तारयेत्सप्त यत्र गौर्वितृषीभवेत्। सर्वथा सर्वयत्नेन भूमिष्ठमुदकं कुरु ॥ १ ॥

इह गोविषये या दया सा किल तन्मतेन दया। अस्यां च पृथिव्युदकपूतरादीनां हिंसाप्यस्ति, इत्येवंरूपा न सम्यगहिंसा"। इति श्रुत्वा कुमारपालेन स्वयं व्रतानि स्वीकृत्याष्टादशसु देशेष्वमारिपटहो दापितः। काशीगीजण्यादिचतुर्दशदेशेषु मैत्र्यादिना बलेन चामारिः पालिता। अश्वानामष्टादशलक्षान्, हस्तिनामेकादशसहस्राणि, गोधनानामशीतिसहस्राणि, उष्ट्राणां पञ्चाशत्सहस्राणि गलितजलपानमकारयत्। एकदा कायोत्सर्गस्थे नृपे मर्कोटकः पादे लग्नः। स पार्श्वस्थैरपसार्यमाणोऽपि न वियुक्तः। राज्ञा तस्यासमाधिं ज्ञात्वा संदंशकेन स्वत्वचा सह दूरीकृतः। तथा वर्षामासचतुष्टये स्वपुरप्रतोलीभ्यः परतो न गन्तव्यमिति नियमं जग्राह। तथा—

"त्रैलोक्यमखिलं दत्वा यत्पुण्यं वेदपारगे। ततः कोटिगुणं पुण्यं वस्त्रपूतेन वारिणा ॥ १ ॥

ग्रामाणां सप्तके दग्धे यत्पापं जायते किल। तत्पापं जायते राजन् नीरस्यागलिते घटे ॥ २ ॥

संवत्सरेण यत्पापं कैवर्तस्येह जायते। एकाहेन तदाप्नोति अपूतजलसंग्रही ॥ ३ ॥

यः कुर्यात्सर्वकार्याणि वस्त्रपूतेन वारिणा। स मुनिः स महासाधुः स योगी स महाव्रती ॥४॥

तोऽपि सर्वविरतिं नांगीकुरुते । षडपि कायान्मोचयति साधुः । श्राद्धस्तु षण्णां मोषनेऽशक्तो ज्येष्ठमेकं त्रसकायं मुञ्चति-पालयतीत्यर्थः । साधुरेकमोचनेनापि कृतार्थमात्मानं मन्यते । यथा च तस्य वणिजो न शेषपञ्चपुत्रवधानुज्ञा, एवं साधोरपि न शेषवधानुमतिः । किं तु यदेव व्रतं गृहीत्वा यानेव स्थूलसत्त्वान् संकल्पवधनिवृत्तो रक्षति श्राद्धः, तन्निमित्तः कुशलानुबन्ध एवेत्यर्थः । तथा त्रसा द्वीन्द्रियादय उच्यन्ते । त्रसायुर्यदा क्षीणं स्यात्त्रसकायस्थितिश्च क्षीणा स्यात्, सा च जघन्येनान्तर्मुहूर्तं, उत्कृष्टतः सातिरेकसहस्रद्वयसागरमाना, ततस्ते त्रसायुस्त्यजन्ति, अन्यान्यपि त्रससहचरकर्माणि त्यक्त्वा स्थावरत्वेन प्रत्यायान्ति । यदा स्थावरायुष्कमपि क्षीणं स्यात्तथा स्थावरकायस्थितिश्च सा जघन्येनान्तर्मुहूर्तमुत्कृष्टतोऽनन्तकालमसंख्येयाः पुद्गलपरावर्ताः । ततः कायस्थितेरभावात्सामर्थ्यात्त्रसत्वेन प्रत्यायान्ति । ते त्रसप्रत्येकादिकर्ममुक्ताः । तेषामुत्कृष्टतो भवस्थित्यपेक्षया त्रयस्त्रिंशत्सागरायुष्कभावात् । अतः स्थावरेभ्योऽन्ये एव त्रसाः । तेषां श्राद्धेन निवृत्तिरेव कृता, न तु स्थावराणां । नागरिकदृष्टान्तोऽप्ययुक्तः, यो हि नागरधर्मैरुपेतः स बहिःस्थोऽपि नागरिक एव । सर्वथा नगरधर्मत्यागे तु तत्त्वमेवेति नोपपद्यते स चान्य एवेति । तथा च त्रसत्वत्यागाद्यदा स्थावरत्वं प्राप्तस्तदान्य एवायमिति । तं कारणेन घ्नतो न व्रतभंगः । अतस्त्वत्पक्षोऽयुक्तः । इति प्रसंगात् प्रोक्तं, विशेषतः सुअगडांगदीपिकातो ज्ञेयम् ।

अथैतद्व्रतं मुख्यभंगेन स्वीकृतं कुमारपालेन । तदधिकारोऽयम्—

पत्तने सभायां श्रीहेमचन्द्राचार्यैः प्रोक्तं—

"धर्मो जीवदयातुल्यो न क्वापि जगतीतले । तस्मात्सर्वप्रयत्नेन कार्या जीवदया नृभिः ॥ १ ॥

अस्य प्रतिविधानमिदं—गुरुराह—कोऽयं व्यामोहो भवतां । दुष्प्रणीततरोऽयं पक्षः । यथा श्राद्धैः साधोः पुर इदमुक्तं—न खलु वयमनगारितां गृहीतुं शक्नुमः । वयं निरपराधत्रसकायवधप्रत्याख्यानं पालयामः । त एवं व्यवस्थां स्थापयन्ति, राजाद्यभियोगेन त्रसं घ्नतोऽपि न व्रतभंगः । कथमिति चेत् । भावार्थस्तु कथानकेन गम्यः । तच्चेदम्—

रत्नपुरे रत्नशेखरराज्ञा स्वान्तःपुरादिस्त्रीणां नागरिकाणां स्वैरं क्रीडारूपः कौमुदीमहोत्सवोऽनुज्ञातः 'पुरुषेण न केनापि नगरमध्ये स्थेयं' इत्युद्घोषणा कारिता । नृपादयो नराः सर्वेऽप्युद्याने सायं जग्मुः । इतश्चैकस्य वणिजः षट् पुत्राः क्रयविक्रयादिव्यग्राः पुरमध्य एव तस्थुः । स्थगितानि गोपुराणि । ततो निष्क्रान्ते महे राज्ञारक्षकाणामुक्तं—'पश्यत नगरे कोऽपि नरोऽस्ति न वेति' । तैर्विलोकयद्भिः षट् पुत्रास्ते दृष्टाः । रज्ज्वादिना बद्ध्वा राज्ञोऽग्रे निहिताः । राज्ञा कुपितेन षण्णामपि वधः समादिष्टः । यतः—

**आज्ञाभंगो नरेन्द्राणां गुरूणां मानमर्दनम् । मर्मवाक्यं च लोकानामशस्त्रवध उच्यते ॥ १ ॥**

ततस्त्वरिता शोकाकुलो राजानं विज्ञपयति स्म—"देव ! मा कृथाः कुलक्षयमस्माकं, सर्वधनं गृह्यतां, मुच्यन्तां पुत्राः" । एवमुक्तेऽपि राजा कथमपि न मुञ्चति । ततः पिता सर्वघातप्रवृत्तं नृपं ज्ञात्वा तेषां सर्वेषां मध्ये पञ्चानां मोचनं ययाचे । नृपः पञ्चापि न मुञ्चति । ततश्चत्वारो याचिताः । तथापि न मन्यते नृपः । ततस्त्रयः । तेऽपि न मुक्ताः । ततो द्वौ मार्गितौ । तावप्यमुञ्चन् नृप एकं पुत्रं याचितः । समस्तपौरजनविज्ञप्तो नृपः पुत्रमेकं ज्येष्ठं मुक्तवान् । अत्रेयं दृष्टान्तयोजना—सम्यक्त्ववान् श्राद्धः सर्वप्राणातिपातविरतिं कर्तुमशक्तो नृपस्थानीयः । षट्कायपितृतुल्येन साधुना प्रेरि

येन चेति । अस्यानुमतिरप्रतिषिद्धा, अपत्यादिपरिग्रहसद्भावात् । ननु भगवत्यागमे त्रिविधं त्रिविधेन प्रत्याख्यानमुक्तमगारिणः, तच्च श्रुतोक्तत्वादनवद्यमेव, तत्कस्मान्नोच्यते ?। उच्यते—तस्या विशेषविषयत्वात्। तथाहि—यः किल प्रव्रज्यां प्रपित्सुरेव यो वा विशेषमन्त्यसमुद्रगतमत्स्यादिमांसं स्थूलहिंसां वा क्वचिदवस्थाविशेषे प्रत्याख्याति स एव त्रिविधत्रिविधेनेत्यल्पविषयोऽयं भंगः । बाहुल्येन तु द्विविधत्रिविधेन । आदिग्रहणाद् द्विविधं द्विविधेनेति द्वितीयो भंगः। द्विविधमेकविधेनेति तृतीयः । एकविधं त्रिधेतिचतुर्थः । एकविधं द्विधेति पंचमः । एकविधमेकविधेनेति षष्ठः । एते च षड् भंगा आद्यव्रते प्रोक्ताः । व्रतान्तरेष्वपि षड् द्रष्टव्याः । य आद्यव्रते कृता भंगास्ते सप्तगुणीकृत्य मध्ये षड् स्थाप्याः । ततोऽग्रेतनव्रतानां भवन्ति । इत्थं द्वादशं यावज्ज्ञेयाः सर्वेषां मिलने भंगसंख्या इयम्—

"तेरसकोडिसयाइं चुलसिकोडिउ बारसयलक्खा । सगसीइ सहस दोसय सवग्गं छक्कभंगीए॥ १॥"

अत्र बहु वक्तव्यं, तच्छ्रावकव्रतभंगप्रकरणधर्मरत्नग्रन्थादिभ्यो ज्ञेयं । अत्र शिष्यः प्राह—ये मुनयो गृहपतिं राजाद्यभियोगेन विना स्थूलप्राणिघातनिवृत्तिं कारयन्ति तेषां स्थावरहिंसानुमतिः दोषः स्यात्, तदा मुनीनां सर्वविरतित्वहानिप्रसंगः । श्राद्धास्तु एवं प्रत्याख्यानं कुर्वन्तः स्वां प्रतिज्ञामतिचरन्ति । कस्माद्धेतोः ? स्थावरास्त्रसतयोत्पद्यन्ते त्रसाश्च स्थावरत्वेनेत्येवं सति प्रतिज्ञाभंगः स्यात् । यथा नागरिको न हन्तव्य इति प्रतिज्ञा यत्र काले येन कृता, स यद्युद्यानस्थं तदनन्तरं नागरिकं हन्यात्तदा तस्य किं न प्रतिज्ञालोपः ? एवमत्रापि वर्तमाने येन त्रसवधनिवृत्तिः कृता, स यदि तमेव त्रसं स्थावरकायप्राप्तं हन्ति, तदा तस्य तल्लोपः कथं न भवेत् ? एवं प्रत्याख्यानं कुर्वतां कारयतां च प्रतिज्ञालोपः ।

## ॥ पञ्चमः स्तंभः ॥ ५ ॥

### ॥ अथ द्विषष्टितमं व्याख्यानम् ॥ ६२ ॥

अथ प्रथमखंडे दर्शनं व्यावर्णितं । तच्च सम्यक्श्रद्धानं यस्य भवति प्रायेण तस्य व्रतान्यपि भवन्त्यनेन संबन्धेनागतो द्वितीयव्रतखंडो लिख्यते—

**अणुव्रतानि पञ्चैव गुणानां च व्रतत्रिकम् । शिक्षाव्रतानि चत्वारि द्वादशैता भिदा मताः ॥ १ ॥**

तत्र पञ्चाणुव्रतेष्वाद्यमणुव्रतमिदम्—

**स्थूलजीवादिहिंसाया वारणं प्रथमं व्रतम् । द्विधात्रिधादिभिर्भङ्गैर्ग्राह्यं तद्गृहिभिर्मुदा ॥ १ ॥**

स्थूलजीवास्त्रसा द्वीन्द्रियादयः । आदिशब्दान्निरर्थकं स्थावरेष्वपि । तेषां हिंसा घातस्तस्या वारणं । द्विविधत्रिविधभंगेभ्यो गृहिभिर्मुदा व्रतं ग्राह्यमित्यर्थः ।

अत्रेयं भावना—द्विविधः कृतकारितरूपः । त्रिविधो मनोवाक्कायरूपो योगः । आदिशब्दादेकैकविधादयश्च । तत्र एवं भंगाः—इह यो हिंसादिभ्यो विरतिं प्रतिपद्यते स स्थूलहिंसां न करोत्यात्मना, न कारयत्यन्येन । मनसा वाचा का-

अत्राह परः—येऽत्र देशान्तरगतदेवदत्तादयो दर्शितास्तेऽत्रास्माकमप्रत्यक्षा अपि देशान्तरगतलोकानां केषाञ्चित् प्रत्यक्षा एव सन्ति, तेन तेषां सत्त्वं प्रतीयते । जीवादयस्तु कैश्चिदपि कदापि नोपलभ्यन्ते, तत् कथं तेषां सत्ता निश्चीयते ? इत्यत्रोच्यते—यथा देवदत्तादयः केषांचित्प्रत्यक्षत्वात् सन्तो निश्चीयन्ते तथा जीवादयोऽपि केवलिनां प्रत्यक्षत्वात् किं न सन्तः इति प्रतीयतां । यथा वा परमाणवो नित्यमप्रत्यक्षा अपि स्वकार्यानुमेयाः स्युस्तथा सर्वत्र ज्ञेयं" । इत्यादिसिद्धान्तवाक्ययुक्त्या सुबुद्धिप्रधानोक्त्या नृपः प्रतिबुद्धो देशविरतित्वं जग्राह । क्रमेण द्वावपि प्राप्तप्रव्रज्यौ मुक्तिं प्रापतुः । यदुक्तम्—

जियसत्तू पडिबुद्धो सुबुद्धिवयणेण उदयनायंमि[1] । ते दो वि समणसिंहा सिद्धा इक्कारसंगधरा ॥ १ ॥

दर्शनं सकलबुद्धिनिधानं, सप्रबन्धमिह वर्णितमुच्चैः ।
सर्वमोक्षशुभहेतुषु मुख्यं, पाठकैस्तदनुयोज्यमुदग्रम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ चतुर्थस्तंभे एकषष्टितमं व्याख्यानम् ॥ ६१ ॥

---

१ उदकज्ञाते ।

## ॥ समाप्तश्चतुर्थः स्तंभः ॥ ४ ॥

तु सतामप्यर्थानामनुपलब्धिर्भवति । साऽष्टविधा । तथाहि—अतिदूरात् प्रथमा, सा त्रिविधा देशकालस्वभावविप्रकर्षात् अनुपलब्धिः । तत्र कश्चिन्नरो ग्रामान्तरं गतो न दृश्यते, तत्कथं नास्ति सः ? अस्त्येव, परं देशविप्रकर्षान्नोपलब्धिः । एवं समुद्रस्य परित्तं पर्यन्तः मेर्वादिकं च सदपि नोपलभ्यते । तथा कालेन विप्रकर्षात् अतीता निजपूर्वजादयो भविष्यत्पद्मनाभादयो जिना नोपलभ्यन्ते । तथा स्वभावविप्रकर्षात् नभोजीवपिशाचादयो न दृश्यन्ते, न च ते न सन्तीति १ । तथाऽतिसामीप्यात् यथा नेत्रकज्जलं नोपलभ्यते, तत्कथं नास्ति ? अस्त्येव २ । तथेन्द्रियघातात् । यथान्धबधिरादयो रूपशब्दादीन्नोपलभन्ते, तत्किं न सन्ति ? सन्त्येव ३ । तथा मनोऽनवस्थानात् यथाऽनवस्थितचेता गजमपि गतं न पश्यति, तत्किं नास्ति ? अस्त्येव ४। तथा सौक्ष्म्यात् यथा जालान्तरगतत्रसरेणवः परमाणुद्व्यणुकादयो वा सूक्ष्मनिगोदादयो नोपलभ्यन्ते, तत्किं न सन्ति ?सन्त्येव ५ । तथा आवरणात् यथा कुड्यान्तरे व्यवस्थितं वस्तु नोपलभ्यते, तत्किं नास्ति ? किं तु तदस्त्येव । चन्द्रमण्डलस्य च परभागो न दृश्यतेऽर्वाग्भावेन व्यवहितत्वात् । ज्ञानावरणादनुपलब्धिः यथा मतिमान्द्यात् सतामपि शास्त्रसूक्ष्मार्थविशेषाणामनुपलब्धिः ६ । तथाऽभिभवात् यथा सूर्यादितेजसाऽभिभूतानि ग्रहनक्षत्राणि नोपलभ्यन्ते, तत्कथं तेषामभावः ? । एवमन्धकारेऽपि घटादयो न दृश्यन्ते ७ । समानाभिहारात् यथा मुद्गराशौ मुद्गमुष्टिः, तिलराशौ तिलमुष्टिर्वा क्षिप्ता सती उपलक्षितापि नोपलभ्यते, जले क्षिप्तानि लवणादीनि च, तत्कथं तेषामभावः । एवमष्टधापि सत्स्वभावानामपि भावानां यथाऽनुपलम्भ उक्त एवं पुद्गलजीवादिषु विद्यमानतापि क्रमेण जायमानापि स्वभावविप्रकर्षादिभ्यो नोपलभ्यते इति सर्वत्र मन्तव्यं ।

न्तयुतो भुक्त्वा रसगृध्नुः 'अहो रसोऽहो गन्धः' इत्यादिवाक्यैः श्लाघां चकार। सुबुद्धिं विनाऽन्येऽपि सर्वे तथैव श्लाघां चक्रुः। ततो राज्ञा मंत्री पृष्टः—'त्वं किं न प्रशंससि ?'। सोऽवक्—"राजन्! शुभाशुभवस्तुषु मम विस्मयो न। यतः पुद्गलाः सुगन्धा दुर्गन्धाः सुरसा अपि विरसा भवन्ति वैपरीत्येन वा। ततो निन्दाप्रशंसे न युक्ते"। राजा तन्न श्रद्धत्ते। अन्यदा राजा राजपाटिकायां गच्छन् मार्गे परिखोदकं बहुजीवाकुलं दुर्गन्धं सूर्यातपक्वथितं दृष्ट्वा नासिकां वस्त्रेण पिधाय 'अहो दुर्गन्धनिन्द्यं जलं' इत्यवादीत्। मंत्री प्राह—'राजन्! मा जलं निन्द, कालप्रयोगेणाभव्यमपि भव्यतया परिणमति'। राज्ञा नांगीकृतं। ततो मंत्रिणा रहः परिखोदकं वस्त्रगलितं स्वाप्तनरैः कोरकघटे क्षेपितं कतकचूर्णादिना च निर्मलीकृतं। पुनर्गलितं नव्यघटेषु क्षिप्तं। एवमेकविंशत्या दिनैस्तन्नीरं स्वच्छसुस्वादुशीतलं लोकोत्तरप्रायमजायत। ततः सुरभिवास्यं कृत्वा नृपजलरक्षकेभ्यो दत्तं। समये राज्ञः समीपे तैरुपनीतं। नृपस्तस्य जलस्य लोकोत्तरगुणानुपलभ्य तान् पप्रच्छ—'क्वेदं प्राप्तं ?'। ते प्रोचुः—'मंत्रिणाऽर्पितं'। राज्ञा मंत्री पृष्टः प्राह—'राजन् यद्यभयं ददासि तदा जलोत्पत्तिं वदामि'। राज्ञाऽभये दत्ते मंत्री यथावृत्तं प्रोवाच। नृपो न श्रद्धत्ते। ततो मंत्रिणा तदध्यक्षं पूर्वोक्तविधिना कृतं। राजा वीक्ष्य विस्मितः प्राह—'कथं त्वयैतज्ज्ञातं ?'। सोऽवदत्—"राजन्! जिनागमश्रुतादिश्रद्धया च पुद्गलपरिणामोऽयमेवेति। हे नृप! पुद्गलानामचिन्तनीया शक्तिः अनेकधा परिणमनस्वभावस्तिरोभावत्वेन वर्तते। स च ज्ञानिनां ज्ञान आविर्भवति। परंतु छद्मस्थानां ज्ञानावरणादिकर्मावृतानां सम्यगुपलब्धिर्न जायते। तथापि श्रुतवचोभिरवश्यं श्रद्धेयैव। यत इहलोके द्विविधाऽनुपलब्धिर्भवति। तत्रैकाऽसतो वस्तुनो यथा शशशृंगादीनां द्वितीया

चित्तद्भावमश्नुते । जीवोऽपि गोत्वगजत्वस्त्रीत्वनरत्वव्यवहारेण, निश्चयेन तु नायं पूर्वोक्तप्रकारयुक्तः, अच्छेद्याभेद्यादिगुणयुक्तत्वात् । इत्थं सर्वत्र सम्यक्त्विनां ज्ञानं, इतरस्तु तथा न । यदुक्तं महाभाष्ये—

**सदसदविसेसणाओ भवहेतु जहिच्छिओवलंभाओ । नाणफलाभावाओ मिच्छद्दिठिस्स अन्नाणं ॥ १ ॥**

इति । अथ सम्यक्त्व एव धीगुणा भवन्तीत्याह—

**अष्टौ बुद्धिगुणाः सन्ति शुश्रूषाश्रवणादयः । सम्यक्त्ववान् तदाढ्यः स्यादित्याहितं चिदात्मभिः ॥ १ ॥**

स्पष्टः । नवरं श्रोतुमिच्छा शुश्रूषा । न ह्येनां विना श्रवणादयो गुणाः । श्रवणमाकर्णनं । इदं महते गुणाय । यतः (योगबिन्दौ)—

**क्षारांभस्त्यागतो यद्वन्मधुरोदकयोगतः । बीजं प्ररोहमादत्ते तद्वत्तत्त्वश्रुतेर्नरः ॥ १ ॥**

**क्षारांभस्तुल्य इह च भवयोगोऽखिलो मतः । मधुरोदकयोगेन समा तत्त्वश्रुतिः स्मृता ॥ २ ॥**

आदिशब्दाद्ग्रहणं शास्त्रोपादानं, धारणमविस्मरणं, ऊहः सामान्यज्ञानं, अपोहो विशेषज्ञानं, अर्थविज्ञानमूहापोहयोगान्मोहसंदेहविपर्यासव्युदासेन ज्ञानं, तत्त्वज्ञानमिदमित्थमेवेति निश्चयः । एतेऽष्टौ धीगुणास्तदन्वितं दर्शनं स्यात् सर्वपदार्थपरमार्थपर्यालोचनपरत्वात् ।

अत्रार्थे सुबुद्धिमंत्रिवृत्तं—

चंपायां जितशत्रुर्नृपः । तस्य सुबुद्धिर्मंत्री सम्यग्जिनमतज्ञः । एकदा नृपो दिव्यरसवतीं सरसां कारयित्वा बहुसाम-

जीवप्रदेशेषु स्वच्छतारूपो गुणः श्रद्धानात्मकः । वस्त्रमलिनत्वाभावेऽप्युज्ज्वलतागुण इव । यदेव वस्तु तदेव सम्यक्त्वं स्वात्मनि स्यात् । इति भावार्थः ।

अत्र शिष्यप्रश्नः—यथात्मा मिथ्यात्वपुद्गलानामेव त्रिपुञ्जीकरोति शुद्धार्धविशुद्धाशुद्धभेदेन मदनकोद्रवतुल्येन । यतः—

दंसणमोहं तिविहं सम्मं मिस्सं तहेव मिच्छत्तं । सुद्धं अद्धविसुद्धं अविसुद्धं तं हवइ कमसो ॥ १ ॥

तत एके एव मिथ्यात्वाणुकाः कथं साधकबाधकगुणेऽन्तर्भावं प्राप्नुवन्ति । यदि द्वयोर्भिन्नत्वं स्यात्तदार्हं । परं तेषु पुद्गलेषु मदनत्वं गतं । तेन सम्यक्त्वमोहनीयं शुद्धं स्यात् । तर्हि तन्मदनत्वं किं ? । अत्रोच्यते—चतुर्विधमहारसस्थानेन स्थिताः पुद्गलास्तन्मिथ्यात्वं बाधकं विभावं च तेषु मध्ये कोद्रवाणां मदनत्यागमिव महारसाभावेन अनिवृत्तिकरणादेकस्थानकरसावशेषितप्राये क्रमेण परमपरिणामानाच्छादकं तत्सम्यक्त्वमोहनीयं । किञ्चिच्छंकादिजायमानत्वात् मोहनीयं । तस्य क्षये चरमदर्शनस्य कदापि शंकाद्यतिचारो न स्यादिति स्थितं । अथ सम्यग्दृष्टीनां ज्ञानमेवोच्यते—

सदाद्यनन्तधर्माढ्यमेकैकं वस्तु वर्तते । तत्तथ्यं मन्यते सर्वं श्रद्धावान् ज्ञानचक्षुषा ॥ १ ॥
एकान्तेनैव भाषन्ते वस्तुधर्मान् यथा तथा । तस्मादज्ञानता ज्ञेया मिथ्यात्विनां निसर्गजा ॥ २ ॥

कंठ्यौ । नवरं एकैकं वस्तु सदाद्यनन्तधर्मात्मकं । यथैकं घटवस्तु स्वगुणेन रक्तत्वादिना सत्, परपटादिधर्मेणासत् । आदिशब्दात् पुद्गलैः सहैकत्वं च व्यवहारेण घटोऽयं निश्चयेन तु पटशकुटशकटस्वर्णादिधर्मयुक्तोऽयं चूर्णादिभ्यः कदा-

प्राक्कर्मणायमनाथोऽशरणश्च महादुःखं वेदयति । यत उक्तं श्रीमद्देवेन्द्राचार्यैः कर्मग्रन्थे—'तिरियाउ गूढहियउ सढो ससल्लो' इत्यादि चिन्तयन्तो जातिस्मृतिं प्रापुः । तया प्राग्भवीयं स्वात्मीयगुरुत्वं तस्मिन् विज्ञाय तद्भवदुःखेभ्यस्तैः स दूरीकृतः । राजपुत्रास्तु भवनाटकं वीक्ष्य चारित्रेण केवलज्ञानं स्वीचक्रुः ।

अंगारमर्दकमुनीशबहिर्विरागी शिष्याश्च पञ्चशती यस्य मुमुक्षवः स्युः ।
अतोऽथ दीपकमना न चकार किंचित्स्वस्यात्मनः शुभमतो रुचिरेव धार्या ॥ १ ॥
( अंगारमर्दी यमी बाह्यशान्तिः पदाश्रिता पञ्चशती मुमुक्षुः ।
नावाप किञ्चिच्छुभमेष दीपात्तद्गोचकं आद्रवैर्हृदोह्यं ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ चतुर्थस्तंभे षष्टितमं व्याख्यानम् ॥ ६० ॥



## ॥ अथैकषष्टितमं व्याख्यानम् ॥ ६१ ॥

अथ सम्यक्त्वमिति किं वस्तु ? तन्निश्चीयते—

मिथ्यात्व(दि)पुद्गलाभावात् प्रदेशाः सन्ति चात्मनः । ते सर्वे स्वच्छतां नीताः सम्यक्त्वं वस्तु तद्भवेत् ॥१॥

कंठ्यः । नवरं मिथ्यादि मिथ्यात्वं । उपलक्षणादनन्तानुबन्धिकषायपुद्गला ये सन्ति तेषां क्षयोपशमादिनाऽभावतः ।

तस्मान्मिथ्यादृष्टीनां सेवया स्वगुणच्यवनं स्यात्। यतः—

**जं तवसंयमहीणं नियमविहूणं च बंभपरिहीणं। तं सेलसमं अयतं बुड्डंतं बोलए अन्नं ॥ १ ॥**

अत्र चावश्यकनिर्युक्तिवृहद्वृत्त्यनुसारेण प्रबन्धेनोक्तमर्थं दृढयति—यथैकस्मिन् साधुसमुदाये एकः श्रमणगुणमुक्तयोगी प्रत्यहं गोचर्याद्यालोचनसमये पुनः पुनरात्मानं निन्दति प्रतिक्रामति च। तद्दृष्ट्वा बहवो मुनयस्तं प्रशंसन्ति। अन्यदैकः सम्यग्ज्ञानादियुक्तः संविग्नसाधुः समेतः। तेनापि तं तथाकुर्वन्तं प्रेक्ष्यान्येषामिदं ज्ञातं प्रोक्तं, यथा—एक ऋद्धिमान् गृहस्थः स्वगृहं रत्नादिभिरापूर्य पुण्यार्थं विश्वानरेण भस्मसादकरोत्। ततः सर्वे जनास्तं प्रशंसन्ति—'अहोऽस्य रत्नादिषु निर्लोभता!'। पुनरपि रत्नादिभृतगृहेण भगवन्तमग्निमतर्पयत्। तदा वायुप्रचंडात्प्रवृद्धाग्निज्वालया सर्वो ग्रामो भस्मीभवत्। ततो राज्ञा श्रेष्ठी दरिद्रीकृत्य नगरान्निर्वासितः। अन्यस्मिन्नपि ग्रामे एकं वणिजं तथाकुर्वन्तं विज्ञाय राज्ञाऽर्वागेव सोऽशुभामायतिं मत्वा नगराद्बहिष्कृतः। ततः सर्वेऽपि सुखिनो बभूवुः। तद्वदयमपि युष्माकं न श्लाघापरिचयार्हः। तच्छ्रुत्वा सर्वेऽपि तं बाह्याचारिणं मुक्त्वा स्वस्वधर्ममाराधयामासुः। अतो यूयमपि अभव्यगुरुं विमुच्य चरणं चरत। तच्छ्रुत्वा विस्मयं गतास्ते दध्युः—"अहोऽस्य महान् कोऽपि क्रियादंभः। वयमद्यापि यावन्न जानीमहे नित्यसेवितोऽपि"। इति विचार्याभव्यगुरुं मुक्त्वा ते संयमं प्रपाल्य देवत्वं प्राप्य ततश्च्युत्वा दिलीपराज्ञः पञ्चशतपुत्रा जाताः। ते यौवनावस्थायां गजपुरेशरचितस्वयंवरामंडपे जग्मुः। इतश्चाङ्गारमर्दकजीवो बहुषु भवेषु भ्रान्त्वोष्ट्रत्वं प्राप्तवान्। सोऽपि तत्रैव पुरे बहुभारभराक्रान्तो रटन् दृष्टः। क्रमेलककरुणच्छन्देन सानुकंपचित्तास्ते प्राहुः—"अहो

विनेयपञ्चशतसेवितचरणः समागतः । तस्याशनादिभक्तिं कृत्वा द्वितीयेऽह्नि स्वशिष्यसंदेहनिवारणाय तत्सूरेरभव्यत्वज्ञापनार्थं सुविहिताचार्येण लघुनीतिस्थाने प्रच्छन्नं कोकिलाः स्वशिष्येण निधापिताः । रात्रौ अभव्यस्य शिष्या मात्रकपरिष्ठापनार्थं गत्यागतिं कुर्वन्तः पदाक्रमणेन कोकिलशब्दान् शुश्रुवुः । ते सर्वे कोकिलद्रव्यमजानन्तो जीवोपमर्दनं विज्ञाय पुनः पुनः पश्चात्तापेन स्वात्मानं निन्दन्ति प्रतिक्रमन्ति च । ततो रुद्रसूरिः स्वयं लघुनीतिस्थाने समागच्छत् । तेषां शब्दानाकर्ण्य पुनः पुनरुपमर्दनेन शब्दं कारयन्नुवाच—'इमेऽर्हतो जीवाः पूत्कुर्वन्ति' इति वाक्यं स्वशिष्याय प्रत्यक्षं श्रावितं । सूरिभिः प्रत्यूषे रुद्रसूरिशिष्यान् प्रोक्तं—"अयं युष्मदीयो गुरुरभव्यत्वान्न सेवार्हः । यतः—

सप्पो इक्कं मरणं कुगुरु अनंताइं दिंति मरणाइं । तो वर सप्पग्गहियं मा कुगुरुसेवणा भद्दं ॥ १ ॥

असंजयं न वंदेज्जा मायरं पियरं गुरुं । सेवणा विय सव्वाणं रायाणं देवयापि वा ॥ २ ॥

जहायारो सूरी जहायाराणुविक्खउ सूरी । उम्मग्गठिउ सूरी तिन्नि वि मग्गं पणासंति ॥ ३ ॥

बाह्याचरणिनस्तु अनुयोगद्वारसूत्रे एवमुक्ताः—"जे इमे समणगुणमुक्कजोगी छक्कायनिरणुकंपा हया इव उद्दमा गया इव निरंकुसा घट्टा मट्टा तुप्पोट्टा पंडुरपाउरणा जिणाणं आणाउ सच्छंदं विरहिऊण उभउ कालं आवस्सगस्स उवट्ठंति, तं लोगुत्तरियं दव्वावस्सयं" इत्यादि । तथा प्रज्ञापनासूत्रवृत्तौ चैवमुक्तं—

परमत्थसंथवो वा सुदिट्ठपरमत्थसेवणा वावि । वावन्नकुदंसणवज्जणा य संमत्तसद्दहणा ॥ १ ॥

इति दर्शनरत्नाकरे । तथाऽभव्योऽनाद्यनन्तभंगेनाद्यगुणस्थानवर्ती बहुशः सामग्रीसद्भावेऽपि कदाचिदपि भवमध्ये सास्वादनस्वभावं नाप्येति । यदुक्तं त्रिभुवनशरणदैः—

कालो सुपत्तदाणं सम्मविसुद्धं च बोहिलाभं च । अंतेसमाहिमरणं अभवजीवा न पावंति ॥ १ ॥

इंदत्तं चक्कित्तं पंचुत्तरसुरविमाणवासं च । लोगंतियदेवत्तं अभवजीवा न पावंति ॥ २ ॥

उत्तरनरपंचुत्तर तायत्तीसा य पुवधर इंदा। केवलिदिक्खिय सासणि जक्खणि जक्खा य नो भवा ॥ ३ ॥

संगम य कालसूरी कविला अंगार पालया दो वि। नोजीव गुट्ठमाहिला उदाइनिवमारउ अभवा ॥४॥

अभव्यस्य चतुर्णां सामायिकानां मध्ये कदाचिदुत्कृष्टस्तु श्रुतसामायिकस्य लाभो भवति, तदधिको न । इमौ भव्याभव्यमिथ्यात्वसंयुक्तौ द्वावपि धर्मकथनादिना, आदिशब्दान्मातृस्थानानुष्ठानातिशयेन[1] वा परेषां बोधयन् शासनं दीपयन् । कारणे कार्योपचारात्तयोर्दीपकं सम्यक्त्वं भवेदिति भावार्थः ।

अत्रार्थेऽङ्गारमर्दकसूरेः संबन्धश्चायम्—

क्षितिप्रतिष्ठपुरे श्रीविजयसेनसूरेः शिष्येण रात्रौ स्वप्ने पञ्चशत्या गजैः परिवृत एकः सूकरो दृष्टः । प्रत्यूषे गुरुं प्रति तथैवोक्तं। तच्छ्रुत्वा सूरिराह—'अद्यैकोऽभव्यगुरुः पञ्चशत्या शिष्यैः समन्वितः समेष्यति'। ततस्तस्मिन्नेव दिने रुद्राचार्यो

---

१ समितिगुप्त्यनुष्ठानस्यातिशयेन ।

श्रीकाकजंघो नृपतिः प्रसिद्धः, कोकासबुध्ध्या कृतधर्मदार्ढ्यः ।
सिद्धेर्गतिं कारकदर्शनाढ्यः, अतीन्द्रियज्ञानपरां जगाम ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ चतुर्थस्तंभे एकोनषष्टितमं व्याख्यानम् ॥ ५९ ॥

## ॥ अथ षष्टितमं व्याख्यानम् ॥ ६० ॥

अथ दीपकसम्यक्त्वमिदम्—

मिथ्यादृष्टिरभव्यो वा स्वयं धर्मकथादिभिः । परेषां बोधयत्येवं दीपकं दर्शनं भवेत् ॥ १ ॥

सुगमः । इयमत्र भावना—अनादिसान्तभंगकः प्रथमगुणस्थानवर्ती मिथ्यादृष्टिः केनचित्पुण्येन श्राद्धकुले समुत्पद्यते । तत्र कुलाचारतया गुर्वादिसामग्रीं प्राप्य महत्त्वार्थितया मत्सराहंकृतिहठादिभिर्वा जिनबिंबप्रासादादीनि श्राद्धोचितसुकृतानि करोति । परमनुपलक्षितदेवादिस्वरूपोऽकृतग्रन्थिभेदतया सम्यग्भावेन विना सुकृतानि विदधात्यनन्तशोऽपि जन्तुः । परं तद्विधानेन न कश्चिद्विशिष्टतरलाभः । यदुक्तमागमे—

पाएणणंतदेउलपडिमाउ कराविआउ जीवेण । असमंजसवित्तीए न हु सुद्धो दंसणलवो वि ॥ १ ॥

साकं निजपुरं जग्मिवान् । काकजंघेन स्वनियमाधिकदूरत्वात्तस्य राज्यं न स्वीकृतं । अथ स्वराज्यं कुर्वता तेन निज-
भ्रात्रा सह निजभार्याया दुश्चरितं विज्ञाय गांभीर्यान्न क्वापि प्रकटितं । यतः—

**अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ १ ॥**

अथात्र बहवोऽन्ये जनाः सपरिकरनृपकर्षणाशया पद्मगृहं विदारयितुं कुठारादिघातं दापयन्ति, तदा ते ( नृपादयः )
प्रत्युत वेदनां प्रापुः । ततस्तेऽनन्यगतिका जना अवन्त्यामेत्य कोकासं स्वस्वामिजीवितभिक्षां प्रार्थयामासुः । सोऽपि
तत्स्वामिनो दासस्येव सेवाकारितां तान् प्रतिपाद्य सद्यस्तत्पुरं गत्वा तद्भुवनमुन्मुद्य निष्कासयामास । नृपोऽपि पितर-
मिवाराध्य तं व्यसर्जयत् ।

अथान्येद्युर्गुरुं नत्वा ताभ्यां स्वप्राग्भवः पृष्टः । सूरिराह—"राजन् ! पूर्वभवे गजपुरेशस्य तवायं जैनविप्रसूत्रधारः ।
तद्वचसा त्वयाऽनेके प्रासादाः कारिताः । अन्यदा एकः कलापात्रजैनसूत्रधारः कुतोऽपि तत्रागतः । तं जात्यादिना
निन्दन् कलामात्सर्यात्त्वदग्रे पैशुन्यं चकार । यतः—

**कलावान् धनवान् विद्वान् क्रियावान् धन्मानवान् । नृपस्तपस्वी दाता च स्वतुल्यं सहते न हि ॥ १ ॥**

ततस्त्वयापि षट् घटिका यावत् कारायां स क्षिप्तः । पश्चात्तेन मोचितः । तदनालोच्य नृपसूत्रधारौ सौधर्मसौख्यं
भुक्त्वा युवां जातौ । कोकासस्य जातिमदाद्दासेरत्वं । मुधा तस्य षड्घटीधरणाद्वयोः षण्मासान् यावद्दुःखं जातं" । इति
ज्ञान्युक्तं श्रुत्वा स्वपुत्रं राज्ये स्थापयित्वा नृपो रथकारेण साकं चरणं ललौ । क्रमेण केवलज्ञानं प्राप्य सिद्धिं जग्मतुः । इति ।

ततो नृपस्तं सत्कार्यावोचत्—"भोः कलाकुशल ! कमलाकरं भुवनं मम योग्यं गरुत्मवदाकाशमार्गगामुकं कुरु । तस्मिन् शतदलानि । तेषु मत्पुत्रयोग्यानि मन्दिराणि । कर्णिकापदे मद्योग्यं भुवनं । तत्समीपेऽमात्यादिप्रकृतिवर्गस्थलं । ईदृशं देवविमानं निर्माहि" । सोऽपि जातजीविताशो गूढाशयः 'स्वाम्यादेशः प्रमाणं' इत्युक्त्वा स्वेप्सितसिद्ध्यर्थं बाह्यतो नृपचित्ताह्लादकं पद्मगृहं निष्पादितं । ततः प्रच्छन्नं काकजंघमुवाच—"स्वामिंस्त्वं चिन्तां मुक्त्वा जिनध्यानैकपरो भव । अहममुकदिने शत्रुं विडंबनापदे रोपयिष्यामि" । ततः कोकासेन गुप्तवृत्त्या स्वनृपसुतःससैन्यः समानीतः । तमासन्नागतं विज्ञाय तस्मिन्नेवाहनि शुभमुहूर्तादिकं कृत्वा कनकप्रभं सपरिकरं तत्र न्यधापयत् । नृपोऽपि गर्वेण सौधर्मभुवनं तिरस्कुर्वन् जहर्ष । इतश्च सोल्लासः कोकासः प्राह—"स्वामिन् ! यूयं सपरिकराः स्वस्वस्थाने निषीदत । अहं कीलिकाप्रयोगेण तत्कालं नभःकौतुकं दर्शयामि" । ततस्ते बुभुक्षिता रंका इव भोजनार्थं कौतुकेक्षणार्थं स्वस्वस्थलमध्यासामासुः । ततस्तस्मादगारात्स्वयं किंचिन्मिषेण निःसृत्याह—'पश्यत रे मूढा मत्प्रभुविडंबनाफलं' । इत्युक्त्वा यावत् कीलिकां परावर्तयत्तावन्निद्रालुनेत्रे इव सकलोऽपि प्रासादो मिमील । तत्र पद्मकुड्मलान्तःस्थिता भ्रमरा इव ते हाहारवं चक्रुः । उक्तं चान्योक्तौ—

> रात्रिर्गमिष्यति भविष्यति सुप्रभातं, भास्वानुदेष्यति हसिष्यति पंकजश्रीः ।
> इत्थं विचिन्तयति कोशगते द्विरेफे, हा हन्त हन्त नलिनीं गजमुज्जहार ॥ १ ॥

इतश्च कोकासेन संकेतितः काकजंघसुतस्तन्नृपसुभटान् जित्वा नगरे एत्य निजपितरं काष्ठागारान्निष्कास्य रथकारेण

तीरदेशमासेदिवांसः । तत्र चासन्नं काञ्चनपुरं वीक्ष्य स्वामिनमशिक्षयत् स्थपतिः—"हे नृप ! सावधानतयाऽत्र स्थेयं, यथा कोऽपि न वेत्ति । अहं त्वस्मिन्नगरे रथकारगृहे गच्छामि" । इत्युक्त्वा निःशंकं नृपमान्यसूत्रधारगृहे समेत्य कोकासः कीलिकाघटनार्थमुपकरणानि विशिष्टानि ययाचे । सोऽप्यन्तर्गृहे रथचक्रकरणसामग्रीमन्तरा मुक्त्वा तदानयनाय यावद्ययौ तावत्तस्मादधिकं दिव्यं चक्रं कोकासेन निष्पादितं, करान्मुक्तं सदाघातं विना स्वयमेव गच्छति । अथागत्य स तामसाधारणकलां वीक्ष्य दध्यौ—'नूनमयं कोकास एव, तेन विना क्षोण्यामन्यस्य दिव्यकला कुतः ?' । इति निश्चित्य किंचित्प्रपञ्चेन तत्र तं संरक्ष्य सूत्रधारो नृपाय गत्वेति प्राह—'हे नृप ! पुण्यादात्मगृहे कुतोऽपि कोकासः समेतोऽस्ति' । तच्छ्रुत्वा राज्ञा निजपूरुषैः स आनाय्येति पृष्टः—'त्वत्स्वामी कुत्रास्ति ?' । सोऽपि व्यापादनभिया पटिष्ठधीः किंचिच्चित्ते विचार्य स्वनृपस्थितिस्थानान्यकथयत् । ततः कनकप्रभः सैन्येन सह तत्र गत्वा तं बबन्ध । विडम्बनापूर्वं काष्ठपञ्जरेऽक्षेपयत् । कलिंगेशस्तस्यान्नमात्रमपि न दत्ते । ततः सानुकंपमनसो बहुजना नृपभिया पुण्यार्थं वायसदानमिषेण पिंडान् ददुः । एवं वायसपिंडिकया प्राणधारणां कुर्वन् कदाप्यप्राप्तदुःखोऽपि स्वकर्म निन्दन् दिनान्यत्यवाहयत् । यदुक्तम्—

को इत्थ सया सुहिओ कस्स व लच्छी थिराइ । को मच्चुणा न गहिओ को गिद्धो नेव विसएसु ॥ १ ॥

एकदा नृपः कोकासवधाय सज्जो जातः तदा लोकैरुक्तं—"स्वामिन्नेदं तवार्हं, कीलिकार्थं प्रासादभंगमिव । उत्तमा गुणेषु न स्वपरविभागं चिन्तयन्ति । यतः—

सर्वेषां बहुमानार्हः कलावान् स्वः परोऽपि वा । विशिष्य च महेशस्य महीयोमहिमातिक्तत् ॥ १ ॥

उन्मत्तप्रेमसंरम्भादारभन्ते यदंगनाः। तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः॥ १॥

अथ नृपस्तेन तया च सह तमारुह्य गगनमुल्लंघयन् दिग्विरतिव्रतं संस्मार्य प्राह—'भो मित्र! कियन्मात्रं क्षेत्रमस्माभिरुल्लंघितं?'। स प्राह—'स्वामिन्! द्विशतयोजनी व्यतीता'। तच्छ्रुत्वा सखेदमुक्तं—"हंहो पश्चाद्वालय वालय, व्रतं ज्ञात्वा निषिद्धाचरणेन मूलतो भंगः स्यादज्ञातव्रतेनौघतो गमनं चातिचारकरं, तच्च प्रतिक्रमणादिना शुध्यति। हा हा कुतूहलप्रियं मां धिक् धिक्, येनात्महितमपि न ज्ञातं"। इत्यादि गतसर्वस्व इवोच्चैः शोचति स्म। तदा स्थपतिपतिः पतत्रिणः पश्चाद्वालनाय कीलिकां यावद्गृह्णाति, तावत्तामितरां निश्चित्य चिन्तातुरः प्राह—"देव दुर्दैववशाद्दुष्टेन केनापि कीलिका परावर्तयांचक्रे। न च तां विनाऽयं पश्चाद्गन्तुमलंभूष्णुः। अतः परं यद्यग्रे गम्यते कियन्मात्रं क्षेत्रं तदा सर्वं सुखं स्यात्। अन्यथाऽत्र शत्रुसीमभूतलपतनादनर्थो भावी। इति श्रुत्वा नृपेणोक्तं—"भो मित्र! किमेवं वदसि अनन्तभवदुःखदं विधिविध्वंसकं वाक्यं?। अनाभोगादिना निषिद्धसेवनाद्व्रतस्य मालिन्यरूपेणातिचार एव, विज्ञायोल्लंघनेन तु व्रतभंग एव। अतिचारेण खंडितं व्रतमपक्वकुंभवत् सुखेन संधातुमपि शक्यं, पक्वभग्नकुंभस्तु तथा न। अतः पुरस्तात् पदमात्रगमनं सर्वथैव नानुमन्यते। यतः—

जलधूलीधरित्र्यादिरेखावदितरन्नृणाम्। परं पाषाणरेखेव प्रतिपन्नं महात्मनाम्॥ १॥

किं च व्रतोल्लंघनफलं तु कटुकद्रव्यास्वादवदधुनैव समायातं। अतोऽनयैव कीलिकयाऽनुवालय"। तद्दार्ढ्यं पुनः पुनः प्रशंसता तेन गरुडो पश्चाद्वालनाय प्रयुक्तस्तावन्मिलितपक्षयुगत्वेनाधस्तादपतत्। परं भाग्येन सरसि पतनाद्भग्नांगास्ते

र्षुकाः, यमः स्वमहिषेण जलवाहकः, सप्तापि मातर आरात्रिकोत्तारिकाः, शेषनागश्छत्रधरः, सरस्वती वीणावादिनी, रंभा नृत्यकारिका, तुंबुरुर्गायनः, नारदो दूतः, महेश्वरः तालवादकः, सूर्योऽन्नपाचकः, चन्द्रोऽमृतस्रावी, भौमो महिषीदोहकः, बुध आदर्शदर्शकः, गुरुर्घटीयंत्रवादकः, शुक्रो मंत्रीश्वरः, मन्दः पृष्ठरक्षकः, अष्टाशीतिसहस्रर्षयः प्रपापालकाः, नारायणो दीपिकाधारी, ब्रह्मा पुरोहितः, इत्यादिऋद्धिसमृद्धोऽपि परस्त्रीग्रहणेन दुःखमवाप। एवमन्येद्युः प्रतीच्यां दिशि गच्छन् शत्रुञ्जयरैवतयोः प्रबन्धं व्याहरति स्म। इत्थमुदीच्यां दिशि कैलासमष्टापदाख्यं तथा शाश्वतसिद्धायतनजिनकल्याणकस्थानादि दर्शयन् हस्तिनापुरस्वरूपं प्राह—"भो नृप ! अत्र सनत्कुमारादिचक्रिपंचकपांडवकृतषड्वार्षिकतपःपारणकशान्त्यादिजिनत्रयनिर्वृतिवर्जकल्याणकचतुष्कविष्णुकुमारोत्तरवैक्रियविकुर्वणकार्तिकश्रेष्ठ्यष्टोत्तरसहस्रनरव्रतप्रव्रजनाद्यनेकशुभकार्याण्यभूवन्"। प्रत्यहमित्याद्यपूर्वतीर्थमाहात्म्यादिश्रवणेन प्राप्तजिनधर्ममर्मः क्षोणीपः कोकासेन गीतार्थसमीपे नीतः। गुरुर्निर्देशना ददे—

"सम्यक्त्वमूलानि पञ्चाणुव्रतानि गुणास्त्रयः। शिक्षापदानि चत्वारि व्रतानि गृहमेधिनाम् ॥ १ ॥
विसंवदंत्यपि फलैः परे धर्माः पराब्दवत्। जैनधर्मः पुनर्नैवं पुष्करावर्तवत् क्वचित् ॥ २ ॥"

इत्यादिधर्मवाक्यं श्रुत्वा दर्शनमूलानि द्वादश व्रतानि जग्राह। तत्र दिग्विरतिव्रते दिनं प्रत्येकस्माद्योजनशतादूर्ध्वगमनं नियमयति स्म। एकस्मिन्नहनि काष्ठतार्क्ष्यपृष्ठेन गन्तुमनसं यशोदेव्याग्रमहिष्या साकं नृपं विज्ञाय विजयाख्यया सपत्नीस्त्रियाऽमर्षादन्यस्य पार्श्वे मूलकीलिकां संग्राह्यान्या तद्रूपैव कारयित्वा तथैव स्थापिता। यतः—

सत्यं मित्रैः प्रियं स्त्रीभिरलीकं मधुरं द्विषा । अनुकूलं च सत्यं च वक्तव्यं स्वामिना सह ॥ १ ॥

तत्कलातिशयदर्शनात्तुष्टः क्ष्माकान्तस्तं प्राह—'अन्यदपि विज्ञानं वेत्सि ?' । तेनाप्यूचे—"स्वामिन् ! सर्वं रथकृद्विज्ञानं वेद्मि । कामितगतिगामुकं काष्ठमयमयूरगरुत्मत्कीरकलहंसादिपक्षिणं रथवरमिवारुह्य भूमाविव व्योमांगणेऽपि कीलिकादिप्रयोगेण यथेप्सितं गम्यते आगम्यते च" । तन्निशम्य कुतूहलप्रियः क्ष्माप्रियस्तमेवमुवाच—"भो निर्माहि मम मार्गगमनागमनकरं गरुडमेकं, येन सकलभूमंडलं विलोकयामि" । ततस्तेन निर्मापितः । तद्दर्शनमात्रेण संतुष्टो राजा । नृपाज्ञया स सकुटुंबोऽपि यथासुखं तत्र तिष्ठति स्म । यतः—

लूणसमो नत्थि रसो विन्नाणसमो अ बंधवो नत्थि । धम्मसमो नत्थि निही कोहसमो वेरिअं नत्थि ॥ १ ॥

अन्येद्युः कोकासेन साकं स्त्रिया सह तं गरुडमधिरुह्य लक्ष्मीपतिरिव नृपतिर्मरुत्पथे प्रस्थितो नानादेशाद्युल्लंघयन् भृगुकच्छपुरोपरि गच्छन् कोकासं तन्नगरनामादिकं पप्रच्छ । सोऽपि गुरुमुखेभ्यः श्रुतपूर्वज्ञातान्याह—"अस्मिन् भृगुकच्छपुरे पुरा श्रीमुनिसुव्रतस्वामी प्रतिष्ठानपुरादेकस्यामेव यामिन्यां षष्टियोजनान्यतिक्रम्य यागे हूयमानं हयवरं पूर्वभवमित्रं प्रतिबोध्य कृतस्थिरधर्मानुरागं सौधर्मे सामानिकश्रियं प्रापयामास । तेन तदैव तत्रैत्य जिनसमवसरणस्थाने जिननिजहयमूर्तियुक्तं चैत्यमश्वावबोधतीर्थं च स्थापितं" । इत्थं नानाविधदेशान् विलोकयन् लंकानगरीं चालोक्य तस्य स्वरूपं पप्रच्छ । स प्राह—"स्वामिन् ! अत्र पुरा रावणोऽभूत् । तस्यर्द्धिस्वरूपं लोक इत्थं श्रूयते—यथा तेन नव ग्रहाः स्वखट्वापादे बद्धाः । अन्तकं वध्ध्वा पाताले क्षिप्तः । तस्य च वायुदेवो गृहांगणे प्रमार्जकः, चत्वारोऽपि जीमूता गन्धांबुव-

रपि स्नेहं नाकर्षितं । ततस्ते सर्वे विलक्षवदना बजूवुः । अंगमर्दकरत्वेनापि तद्दिन एव क्रष्टुं शक्यते, न तु दिनान्तरे ।
तच्च तत्रैव कूपे कूपछायेव तिष्ठति स्म । ततः प्रजृति तस्य संजातकृष्णजंघत्वेन जनेषु काकजंघ इत्याख्या प्रथिता । न
हि लोकमुखबन्धो जवतीति सर्वविदितमेव । न तथा सुष्ठु नाम लोके प्रसिद्धिं याति, यथाऽपनाम, माष्तुषकूरगडुक-
सावद्याचार्यरावणादिवत् ।

इतश्च कुंकणदेशे निर्धनजनसंहारमहारक्षःसदृशं महाउर्निक्षं बजूव । यस्मिन् धनवन्तोऽपि निर्धनायन्ते, राजानोऽपि
रंकायन्ते । उक्तं च—

मानं मुञ्चति गौरवं परिहरत्यायाति दीनात्मतां, लज्जामुत्सृजति श्रयत्यदयतां नीचत्वमालंबते ।
जार्याबन्धुसुतासुतेष्वपकृतीर्नानाविधाश्चेष्टते, किं किं यन्न करोति निन्दितमपि प्राणी क्षुधापीमितः ॥१॥

ईदृक्षे उर्निक्षे वर्तमाने स्वकुटुंबनिर्वाहार्थं कोकास उज्जयिनीं जगाम । तत्र कंचित्सहायं विना नृपमीलनेऽक्षमः
कोकासो बहून् काष्ठपारापतान् विनिर्माय तादृक्कीलिकादिप्रयोगेण राज्ञो धान्यकोष्ठागारेषु प्रेषयति । तेऽपि जीवन्त इव
तत्क्षणात्तत्र गत्वा कणादानेन चंचुजिः शालितंडुलैर्जठराणि कोष्ठपूरमापूर्य पश्चादागछन्ति । तैः कणैः स्वकुटुंबं निर्वा-
हयति स्म । अन्यदा धान्यरक्षकैः पोता इव कणैः पूरिताः काष्ठकपोताश्चौरा धान्यागारेज्यो निःसरन्तो दृष्टाः । ततः
प्राप्ताश्चर्यास्ते तत्पृष्ठानुगा एव कोकासगृहे जग्मुः । तैः कोकासो नृपसमीपं नीतः । नृपेण पृष्टः स्पष्टमजाषिष्ट । यतः—

अन्यदा गुरुदेशनया जातजैनमतनिपुणः सर्वज्ञधर्ममारराध । इतश्च मालवदेशे विचारधवलो नृपः । तस्य चत्वारि नररत्नान्यभूवन् । तत्र सूपकारो यथाभिलषितां रसवतीं विधत्ते । यया भुक्तया तस्मिन्नेव क्षणे, क्षणान्तरे, प्रहरे, तद्दिने, पक्षमासादिषु वा यथाभीप्सितमेव क्षुत्प्रादुर्भवति । न तु तत्पूर्वं परतो वा । शय्यापालकश्च तादृक्किञ्चित्तल्पं कल्पयति, यत्र सुप्तः पुमान् यथाभिलषिते काले घटिकादिरूपे प्रबुध्यते । अंगमर्दकश्चैकपलादिबहुतरं तैलं शरीरान्तरावर्तयति, सर्वमपि ससुखं पश्चादाकर्षति, न च स्वल्पमपि दुःखमुत्पादयति । चतुर्थो भाण्डागारिकश्च भाण्डं तथा विरचयति यथा तत्र निहितं धनं तेन विना न कश्चित्प्रेक्षते, न च तत्र खात्राग्निभयं प्रभवति । एभी रत्नैश्चिन्तितार्थसाधकः क्ष्माशक्रो भूयांस्यहानि व्यतीयाय ।

अन्यदा पुत्राभावेन विरक्तात्मा व्रतं प्रतिपित्सुः कस्यचिद्गोत्रिणे राज्यं दित्सति । तावत् पाटलिपुत्रेशेन रत्नचतुष्टयलुब्धेन जितशत्रुनृपेण सहसैवोज्जयिनी वेष्टिता । तदा काकतालीयन्यायवत्तत्पुरेशः शूलरोगार्तः समाधिना मृतिं प्राप । महाशूलाद्युत्पत्तिर्हि प्रायो मृत्युनाटकस्य नान्दी । उक्तं च—

**सूलविसअहिविसूइअपाणिअसत्थग्गिसंभमेहिं च । देहंतरसंकमणं करेइ जीवो मुहुत्तेणं ॥ १ ॥**

ततोऽमात्यादिकैः हृतं सैन्यमनायकमिति विचिन्त्य प्राभृतमिव जितशत्रुनृपाय सा पुरी दत्ता । ततो राजा चत्वार्यपि पुरुषरत्नानि परीक्षांचक्रे । एकदा समग्रदेहादंगमर्दकस्तैलाकर्षणं कुर्वन् राजानुज्ञयैकस्यां जंघायां पञ्चकर्षमितं तैलं ररक्ष । ततो नृपेण पर्षदि प्रोक्तं—'अन्यो यः कश्चिदभिमानी, सोऽस्या जंघायाः स्नेहमाकर्षतु' । ततोऽन्यांगमर्दकैर्बहुभिरुपायै-

नारायणोऽभवद्भक्तस्त्रिधा श्रीजैनशासने । भुवनेषु गुणान् यस्य गायन्ति सुरमानवाः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभेऽष्टपञ्चाशत्तमं व्याख्यानम् ॥ ५८ ॥

## ॥ अथैकोनषष्टितमं व्याख्यानम् ॥ ५९ ॥

अथ कारकगुणो व्याख्यायते—

तथा कार्यं गुरोर्वाक्यं यथा प्रवचनाद्भुतम् । तपोव्रतादिकं सर्वं सेवनात् कारको मतः ॥ १ ॥

अत्रार्थे काकजंघकोकासयोर्ज्ञातमिदम्—

सोपारके विक्रमधनो नृपः । तन्नगरे सोमिलो रथकाराग्रणीः । तस्य सूनुर्देवदत्तनामा । तस्यैव रथकारस्य दास्याः पुत्रो द्विजाज्जातः कोकासनामा । स च रथकारः स्वपुत्रं प्रत्यहं महाटोपेण कलाः शिक्षयति । यतः—

पितृभिस्ताडितः पुत्रः शिष्यश्च गुरुशिक्षितः । घनाहतसुवर्णं च जायते जनमंडनम् ॥ १ ॥

परं तस्य न काचित्कलोन्मीलति । कोकासस्तु दासत्वेन तत्पार्श्वे तूष्णीकतयैव तिष्ठन्नपि गुरोरधिकतरः सर्वकलापारतां हेलयैव जगाम । क्रमेण सोमिले स्वर्लोके गते पुत्रस्य कलाविकलतया कोकास एव नृदेवशासनात्तत्पदं जग्राह ।

दासेरोऽपि गृहस्वाम्यमुच्चैः काममवाप्तवान् । गृहस्वाम्यपि दासत्वमहो प्राच्ये शुभाशुभे ॥ १ ॥

अन्यदा श्रीनेमिजिनो रैवतके समवसृतस्तदा हरिः सपरिवारो वन्दनाय ययौ । अष्टादशसहस्राणां साधूनां गणं द्वादशावर्तवन्दनेन वन्दते स्म । अन्ये नृपाः श्रान्तास्तस्थुः । वीरकस्तु तदनुवृत्त्यैव विष्णुना सह द्रव्यतो वन्दते स्म ।

**प्रस्वेदक्लिन्नगात्रश्च श्रीनेमिं पृष्टवान् हरिः । षष्टित्रिशतसंग्रामैर्नाहमेवं श्रमं गतः ॥ १ ॥**

भगवानुवाच—"कृष्ण त्वया सप्तकद्वयेण क्षायिकं चागामिकचतुर्विंशतिकायां द्वादशाममनाम पश्चानुपूर्व्या तु त्रयोदशं तीर्थकृन्नाम समुपार्जितं, तथा सप्तमपृथ्वीयोग्यमायुःकर्म तृतीयस्यामानीतं" । तच्छ्रुत्वा सोऽवक्—'पुनरपि वन्दित्वा तदप्यपनये' । जिनो वक्ति—"तत्समयनिराशीर्भावस्तु तदैव गतः, परं जगत्युत्तमपदार्थाः सर्वे त्वया स्वीकृताः, अतः परं किमीप्ससि ? तृतीयनरकायुष्कं तु पूर्वनिदानाद्बद्धवासुदेवपदायत्तं, तस्याभावो न स्यात् । यतः—'अनियाणकडा रामा' इत्यादि ।" तद्भगवद्वाक्यं निश्चलतया मन्यमानः कृष्णः स्वगृहं ययौ ।

अत्र शिष्यप्रश्नः—"पूज्य ! तृतीयनरके तूत्कृष्टं सप्तसागरायुः प्रोक्तं, नेमिजिनस्य भाविकृष्णजीवद्वादशाममाख्यजिनस्य चान्तरमष्टचत्वारिंशत्सागरोपमाः, तत्कथमेकभवेन पूर्णं स्यात् ?" । उच्यते—"श्रीहेमचन्द्रकृतनेमिचरित्रे तु पञ्च भवाः प्रोक्ताः सन्ति, तत्त्वं तु केवलिनो विदन्ति । शुद्धश्रद्धागुणान्वितोऽचिरेण श्रीकृष्णो भवपारं प्राप्स्यतीति । वसुदेवहिंडौ तु—कण्हो तइयपुढवीओ उवट्टित्ता भारहे वासे सयदुवारे नयरे पत्तमंडलियभवो पव्वज्जं पडिवज्जिय तित्थयरनामं पवज्जित्ता वेमाणिए उववज्जित्ता दुवालसमो अमम नाम तित्थयरो भविस्सइ । श्रीकृष्णो भवपारं प्राप्स्यति । रोचकगुणोऽपि श्रेणिकादीनां तीर्थकृदादिपददायकत्वेन प्रसिद्धः ।

नाहत्य भूमौ पातितवान् । तथा वर्षासु शकटाध्वनि चक्रोत्खातं वहन्नीरं वामपादेन धारितं पश्चागतं । तथा पाजणिभाजनप्रविष्टमक्षिकागणो गुमगुमारावं कुर्वन् मया कराभ्यां रोधितः" श्रुत्वेति किञ्चित्स्मिताननो हरिः सभायां स्थितः प्राह—"शृण्वन्तु वीरस्य चरितं कुलं च—

येन रक्तस्फटो नागो निवसन् बदरीवने । पातितः क्षितिशस्त्रेण क्षत्रियः सैष वै महान् ॥ १ ॥
येन चक्रोत्खता गंगा वहन्ती कलुषोदकम् । धारिता वामपादेन क्षत्रियः सैष वै महान् ॥ २ ॥
येन घोषवती सेना वसन्ती कलशीपुरे । धारिता वामहस्तेन क्षत्रियः सैष वै महान् ॥ ३ ॥

तदस्याः केतुमञ्जर्या योग्योऽयम्" । इत्युक्त्वा हरिणाऽनिच्छतस्तस्य सा दत्ता । वीरोऽपि कृष्णभयात्तां परिणीय स्वगृहे नीत्वा शुश्रूषापरोऽभूत् । बहुदिनैः समागतः । तं प्रति हरिणा पृष्टं—'मत्सुता त्वदाज्ञां करोति न वा ?' । वीरः प्राह—'अहं त्वत्सुताज्ञाकरः' । ततः कृष्णेन बाढं धिक्कृतः गृहे गत्वा तां प्राह—'रे पाजणिं कुरु, गृहं मार्जय, जलाशयाज्जलमानय' । अश्रुतपूर्वं श्रुत्वा साह—'स्वामिन्नहं तु न किमपि वेद्मि' । ततो वीरेण रज्ज्वा गाढं ताडिता । सा रुदन्ती पितुरग्रे वक्ति स्म । सोऽवक्—'त्वयैव मार्गितं दासत्वं' । साह—'तात नास्य गृहेऽहं वसामि । संप्रति त्वत्प्रसादात् स्वामिन्येव भविष्यामि' । ततः केशवो वीरकं समनुज्ञाप्य तां प्रव्रज्यां ग्राहयामास । स्वयं तु अप्रत्याख्यानकषायोदयवत्त्वेन व्रतादिग्रहणेऽक्षमः ।

स्वाम्याह—'बहुजीवाकुलत्वाद्भूमित्वात्' । ततः सोऽप्यन्तःपुरमध्यस्थश्चतुर्मासीमतिक्रामति । अथ तस्य वीरको नाम सेवको नृपदर्शनमलभमानो नित्यं प्रवेशद्वारं पुष्पादिभिरभ्यर्च्य याति, परमशनवसनश्मश्रुनखशुद्धिं नाकरोत् । वीते वर्षाकाले वीरक एत्य नृपं ननाम । पृष्टो हरिणा—'किं कृशो दृश्यसे ?' तेनायमीदृशो जात इति वेत्री व्यजिज्ञपत् ॥ १ ॥

**देवपादेष्ववदृष्टेषु न कुर्याद्भोजनादिकम् ।**

एवं श्रुत्वा तुष्टः सर्वत्रावारितप्रवेशं तं कृत्वा हरिर्नेमिं वन्दितुं गतः । धर्मं श्रुत्वोचे—"स्वामिन् ! भागवतीं दीक्षां व्रतं च गृहीतुमक्षमस्तथाप्यन्यः कोऽपि लाति तस्य महोत्सवमहं करिष्ये" । इत्यभिग्रहेण गृहमागात् । अन्यदा विवाहयोग्या निजपुत्र्यः प्रणन्तुमागताः । ता एवं प्राह—

**स्वामिन्यः किमु दास्यो वा वशा यूयं भविष्यथ । ताश्च प्राहुर्भविष्यामः स्वामिन्यस्त्वत्प्रसादतः ॥ १ ॥**

**कृष्णोऽप्युवाच यद्येवं वशानां संमतं तदा । संनिधौ नेमिनाथस्य गृह्णीत व्रतमुत्तमम् ॥ २ ॥**

श्रुत्वैवं ताः सर्वा अपि व्रतं ललुः । अन्येद्युरेकया राज्ञ्या निजपुत्री शिक्षिता—'त्वया पितैवं वाच्यः, अहं दासी भविष्यामीति' । एकदा राज्ञा पुत्री पृष्टा, तदा सा शिक्षितमुत्तरं ददौ । तदा कृष्णो दध्यौ—"अन्या अपि मे सुता असाविव संसारे मा पतन्तु । अतोऽस्याः शिक्षितं दासीत्वमेव फलं ददामि" । इति विचिन्त्य रहसि वीरकं पप्रच्छ—'अरे पूर्वं त्वयाद्भुतं कर्म यत् किञ्चित् कृतं तन्निवेदय' । ततः सोऽवदत्—"शरीरचिन्तां कुर्वाणोऽहं बदरीशिखरस्थं सरटं लेष्टु-

तत्रौपशमिकं भिन्नकर्मग्रन्थेः शरीरिणः । सम्यक्त्वलाभे प्रथमेऽन्तर्मुहूर्तं प्रजायते ॥ २ ॥
देहिनः शान्तमोहस्योपशमश्रेणितोऽथवा । मोहोपशमसंभूतं स्यादौपशमिकं परम् ॥ ३ ॥
सम्यक्त्वं प्राप्य तत्कालोदीर्णानन्तानुबन्धिनः । तदुद्वमन् रसास्वादं तस्य यल्लभते भवी ॥ ४ ॥
जघन्येनैकसमयमुत्कर्षाच्च षडावली । भवेद्द्वितीयं सम्यक्त्वं तत्सास्वादनसंज्ञकम् ॥ ५ ॥
मिथ्यात्वमोहनीयोद्यत्क्षयोपशमसंभवे । क्षायोपशमिकं तु स्यात्सम्यक्त्वगुणयोगिनः ॥ ६ ॥
वेदकं नाम सम्यक्त्वं क्षपकश्रेणिमीयुषः । अनन्तानुबन्धिनां च क्षये जाते शरीरिणः ॥ ७ ॥
मिथ्यात्वस्याथ मिश्रस्य सम्यग्जाते परिक्षये । क्षायिकसंमुखीनस्य सम्यक्त्वान्त्यांशभोगिनः ॥ ८ ॥
मिथ्यात्वमिश्रसम्यक्त्वैः सहानन्तानुबन्धिनाम् । क्षयाज्जीवस्य यत्तत्त्वश्रद्धानं क्षायिकं हि तत् ॥९॥
सम्यग्दर्शनमेतच्च गुणतस्त्रिविधं भवेत् । रोचकं दीपकं चैव कारकं चेति नामतः ॥ १० ॥
तत्र श्रुतोक्ततत्त्वेषु हेतूदाहरणैर्विना । दृष्टिर्या प्रत्ययोत्पत्तिस्तद्रोचकमुदीरितम् ॥ ११ ॥

अत्र रोचकविषये कृष्णार्धचक्रिप्रबन्धोऽयम्—

द्वारावत्यां पुर्यामेकदा वर्षारात्रौ नेमिजिनः समवसृतः । कृष्णेन पृष्टः—'वर्षासु मुनयः कथं न विहरन्ति ?'

परिनिव्वुआ गणहरा जीवंते णायए नव जणा उ । इंदभूती सुहम्मो य रायगिहे निव्वुए वीरे ॥ १ ॥

इत्यावश्यकनिर्युक्तौ ।

बाल्येऽपि चारित्रपदं गृहीत्वा, निर्वृत्तिमर्वाक् प्रभुतः समाप ।

वाचंयमेषु प्रवरः प्रभासः, स स्तात्सदा मे प्रचुरोदयाय ॥ १ ॥

मासं पाओवगया, सव्वे वि य सव्वलद्धि संपन्ना । वज्जरिसहसंघयणा समचउरंसा य संठाणा ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभे सप्तपञ्चाशत्तमं व्याख्यानम् ॥ ५७ ॥

## ॥ अथाष्टपञ्चाशत्तमं व्याख्यानम् ॥ ५८ ॥

अथात्रान्येऽपि कतिचित्सम्यक्त्वभेदा निरूप्यन्ते—

सम्यक्त्वं चैकधा जीवतत्त्वश्रद्धानतो भवेत् । निश्चयव्यवहाराभ्यां दर्शनं द्विविधं मतम् ॥ १ ॥

कंठ्यः । नवरं अनन्तरोक्ताः सम्यक्त्वैकषष्टिभेदा व्यवहारदृष्टावन्तर्भवन्ति । अन्त्याः षड् भेदास्तु निश्चयेऽन्तर्भवन्ति ।

अथेदं पञ्चधा सम्यक्त्वम्—

आदावौपशमिकं च सास्वादनमथापरम् । क्षायोपशमिकं वेद्यं क्षायिकं चेति पञ्चधा ॥ १ ॥

रीरस्य प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत इति । नेति निपातो निषेधार्थः । ह वै इत्येतदपि निपातद्वयं हिशब्दार्थत्वाद्यस्मादर्थे । सह शरीरेण प्रवर्तत इति सशरीरो जीवस्तस्य । प्रियाप्रिययोः सुखदुःखयोः । अपहतिर्विघातोऽन्तः । नास्ति । न त्वशरीरस्य । तस्मादशरीरं शरीररहितं । मुक्त्यवस्थायां । वसन्तं लोकाग्रे तिष्ठन्तं । प्रियाप्रिये सुखदुःखे न स्पृशतः । नन्वेतत्कथं प्राप्यते ? उच्यते—ज्ञानदर्शनचारित्ररत्नत्रयज्ञावेन तत्प्राप्यते । यदुक्तं दर्शनसप्ततिकायां—

संमत्तनाणचरणा संपुन्नो मोक्खसाहणोवाउ । ता इह जुत्तो जत्तो ससत्तिउ नायतत्ताणं ॥ १ ॥

तथा—

ये धर्मशीला मुनयः प्रधानास्ते दुःखहीना नियमेन सन्ति ।
संप्राप्य शीघ्रं परमार्थतत्त्वं व्रजन्ति मोक्षं चिदमेकमेव (सुखरूपमिद्धं) ॥ १ ॥

इत्यादियुक्तिज्ञिः प्रतिपादितो निजसंशयं मुक्त्वा जिनान्तिके दीक्षां त्रिशत्या छात्रैः सह जग्राह । स षोडशवर्षीयगृहस्थपर्यायं मुक्त्वा सर्वविरतिं स्वीचकार । अष्टौ वर्षाणि यावच्छद्मस्थपर्यायं जुक्त्वा निरावरणं निर्व्याघातं केवलज्ञानं प्राप । षोडश वर्षाणि यावत् केवली बहून् जव्यान् प्रबोध्य यदर्थं उद्योगो विहितस्तदेव सौख्यं बुजुजे । इति संक्षेपतः सर्वगणभृद्वक्तव्यमिदं ।

व्याधिमरणारतिचिन्तौत्सुक्यादिनिःशेषबाधारहितत्वादिति हेतुः। तथाविप्रकृष्टमुनेरिव। यत् किमप्यत्र संसारे स्रक्-चन्दनांगनासंजोगादिसमुत्थं चक्रवर्त्यादिपुण्यफलं च निश्चयतो दुःखमेव विनाशित्वात् कर्मोदयजन्यत्वाच्च, पामाकंडूयनादिवत् अपथ्याहारादिवद्वा। तथा चोक्तम्—

नग्नः प्रेत इवाविष्टः क्वणन्तीमुपगुह्य ताम्। गाढायासितसर्वांगसुखी हि रमते किल ॥ १ ॥

भुक्ताः श्रियः सकलकामदुघास्ततः किं, संप्रीणिताः प्रणयिनः स्वधनैस्ततः किम्।
दत्तं पदं शिरसि विद्विषतां ततः किं, कल्पस्थितं तनुभृतां तनुभिस्ततः किम् ॥ २ ॥
इत्थं न किंचिदपि साधनसाध्यजातं, स्वप्नेन्द्रजालसदृशं परमार्थशून्यम्।
अत्यन्तनिर्वृतिकरं यदपेतबाधं, तद्ब्रह्म वाञ्छत जना यदि चेतनास्ति ॥ १ ॥

अतः सुखं सर्वं तत्त्वतो दुःखमेव। निगदितं च महाभाष्ये—

विसयसुहं दुक्खं चिय दुक्खपडियारओ तिगिछंव। तं सुहमुवयाराओ न य उवयारो विणा तच्चं ॥ १ ॥

विषयसुखं तत्त्वतो दुःखमेव, दुःखप्रतिकाररूपत्वात्। कुष्ठार्शोरोगक्वाथपानछेदनदंभनादिचिकित्सावत। यश्च लोके तत्र सुखव्यपदेशः प्रवर्तते, स उपचारात् न चोपचारस्तथापारमार्थिकं विना क्वापि प्रवर्तते, माणवकादौ सिंहाद्युपचारवदिति। तस्मान्मोक्षसौख्यं निरुपममिति स्थितं। तथा हे प्रभास! वेदेऽपि संसारमोक्षस्वरूपं प्रतिपादितं—न ह वै सशा-

जीवस्तथा निर्वृतिमभ्युपेतो, नैवावनीं गच्छति नान्तरीक्षम् ।
दिशं न कांचिद्विदिशं न कांचित्, क्लेशक्षयात्केवलमेति शान्तिम् ॥ २ ॥

किं वा जैनागमे ?—

केवलसच्चिद्दर्शनरूपाः सर्वार्तिदुःखपरिमुक्ताः । मोदन्ते मुक्तिगता जीवाः क्षीणान्तरारिगणाः ॥ १ ॥

इति । अथैतत्प्रतिविधानमिदम्—न प्रदीपानलस्य सर्वथा विनाशः, परिणामवत्त्वात् दुग्धस्येव । अथवा परिणामान्तरापन्नचूर्णीभूतघटस्येव न सर्वथा नाशः । ननु यदि सर्वथा न नाशस्तर्हि विध्यातानन्तरं किमित्यसौ साक्षान्न दृश्यते? उच्यते—विध्याते दीपेऽनन्तरमेव तमः पुद्गलरूपविकारः समुपलभ्यत एव । यन्नोपलभ्यते, तत्सूक्ष्मतरपरिणामापन्नत्वात्, कृष्णाभ्रविकारवत् । नूनं विचित्ररूपा पुद्गलपरिणतिः । यथा सुवर्णं पत्रीकृतं चक्षुर्ग्राह्यं भूत्वा शोधनार्थमग्नौ क्षिप्तं भस्मनि मिलितं, तत्स्पर्शनेन्द्रियग्राह्यतामेति । तच्चूर्णीकृतं सूक्ष्मं रजसा संपृक्तं निकृष्टं विमूर्त्यं भवति । इत्याद्यनेकपुद्गलेषु विचित्रत्वं स्वधिया भाव्यं । तथा प्रदीपपुद्गलाश्चक्षुर्ग्राह्या भूत्वा पश्चाद्विध्याते एत एव तमसीभूताः सन्तो घ्राणेन्द्रियग्राह्यतामुपयान्ति । यथाऽन्यरूपापन्नो दीपो निर्वाण उच्यते, तथा जीवोऽपि कर्मविरहितकेवलामूर्तसंपूर्णजीवस्वरूपलाभलक्षणमबाधं परिणामान्तरं प्राप्तो निर्वाणो निर्वृतिं प्राप्त उच्यते । ननु शब्दादिविषयोपभोगाभावाद्देहेन्द्रियाभावान्निःसुख एवायं । अत्रोच्यते—मुक्तस्य जन्तोः परं प्रकृष्टमकृत्रिमं स्वाभाविकं सौख्यमिति प्रतिज्ञा । ज्ञानप्रकर्षे सति जन्मजरा-

द्विधापि मम तत्र गमनं न्याय्यं । एकं ज्ञातिसमूहच्छेदाभावेन योग्यं, द्वितीयं पुनः कयाचिद्युक्त्या घुणाक्षरन्यायेन तं जयामि तदा सर्वेषु मध्ये मम श्रेष्ठत्वं" । इति विचिन्त्य जिनान्तिकं आजगाम तदा जिनेनोक्तम्—"हे आयुष्मन् प्रभास ! त्वमेवं मन्यसे—निर्वाणमस्ति न वेति । अयं च संशयस्तव विरुद्धवेदपदार्थनिबन्धनः तानि चामूनि वेदपदानि—जरामर्यं वा एतत्सर्वं यदग्निहोत्रं । तथा—सैष गुहा दुरवगाहा । तथा—द्वे ब्रह्मणी परमपरं च । तत्र परं सत्यं ज्ञानमनन्तं ब्रह्मेति । एतेषां तव मतेऽयमर्थः—यदग्निहोत्रं तज्जरामर्यमेव यावज्जीवं कर्तव्यमिति । अग्निहोत्रक्रिया च भूतवधहेतुत्वाच्छबलरूपा । सा च स्वर्गफलैव स्यात्, न त्वपवर्गफला । यावज्जीवमिति चोक्ते कालान्तरं नास्ति यत्रापवर्गहेतुभूतक्रियान्तरारम्भः स्यात् । तस्मात्साधनाभावान्मोक्षाभावः । तथा गुहा मुक्तिरूपा, सा संसाराभिनन्दिनां दुरवगाहा दुःप्रवेशा । तथा परं ब्रह्म सत्यं मोक्षः, अनन्तं तु ब्रह्म ज्ञानमिति । ततः प्रथमवाक्यं नास्तित्वं, अपरं त्वस्तित्वसूचकमवगम्यं । इति तव संशयः एषां मध्ये किं प्रमाणवाक्यमिति । हे प्रभास ! एषां पदानामर्थोऽयमेव कार्यः—यदेतदग्निहोत्रं तद्यावज्जीवं सर्वकालं कर्तव्यं, वाशब्दान्मुमुक्षुभिर्मोक्षहेतुभूतमप्यनुष्ठानं विधेयमित्यर्थो योग्यः । तथा हे सौम्य ! त्वमेवं मन्यसे—किं दीपस्येवास्य जीवस्य निर्वाणं ? यदाहुः सौगतविशेषाः केचित्—

दीपो यथा निर्वृतिमभ्युपेतो, नैवावनीं गच्छति नान्तरीक्षम् ।
दिशं न कांचिद्विदिशं न कांचित्, स्नेहक्षयात्केवलमेति शान्तिम् ॥ १ ॥

१ पापव्यापाररूपा ।

## ॥ अथ सप्तपंचाशत्तमं व्याख्यानम् ॥ ५७ ॥

**॥ अथ सप्तपंचाशत्तमं व्याख्यानम् ॥ ५७ ॥**

अथ पञ्चमं निर्वाणाख्यस्थानं निरूप्यते—

**अभावे बन्धहेतूनां घातिकर्मक्षयोद्भवे । केवले सति मोक्षः स्याच्छेषाणां कर्मणां क्षये ॥ १ ॥**
**सुरासुरनरेन्द्राणां यत्सुखं भुवनत्रये । तत्स्यादोऽनन्तभागोऽपि न मोक्षसुखसंपदः ॥ २ ॥**
**अनन्तसुखसंपूर्णं निर्वाणपदमक्षयम् । नाद्यनन्तं प्रवाहेण भाषितं विश्ववेत्तृभिः ॥ ३ ॥**

कंठ्याः । अथ षष्ठं मोक्षोपायाख्यं स्थानमिदम्—

**ज्ञानादयस्त्रयः शास्त्रे मोक्षोपायाः प्रकाशिताः । इति सम्यक्त्वरत्नस्य षष्ठं स्थानं विचिन्तयेत् ॥ १ ॥**

कंठ्यः । अत्रार्थे प्रभासगणधरज्ञातम्—

राजगृहे पुरे बलाभिधो विप्रः । तस्य भार्याऽतिभद्रा । तयोः पुत्रः प्रभासोऽभूत् । स च वेदसांख्यमीमांसाक्षपाद-योगाचारादिशास्त्रज्ञत्वादहंकृतिपूरेण सर्वं जगत् स्वात्मानं विना मूर्खमिव मन्यते । इतश्च यज्ञसमये समूहीभूतभूदेवानां मध्ये इन्द्रभूत्यादयो ये ये त्रैशलेयान्तिके गतास्ते ते पञ्चाननं दृष्ट्वा श्वापदा इव निजनिजमानं विमुच्य प्रभुचरणमानस-सरसि हंसत्वं जग्मुः । तद्वार्तां लोकमुखाच्छ्रुत्वा प्रभासो दध्यौ—“नूनमनेन रूपेण स्वधामत ईश्वर एवास्मत्पवित्रीकर-णाय समागतो ज्ञायते । अन्यथेदृशी शक्तिर्न स्यात् । अतोऽहं तस्य पांडित्यं स्वरूपं चातुर्यं वर्ण्यं वर्यं चावलोकयामि ।

युक्तं, यो भवदभिप्रेतः स कर्ता मूर्तो वाऽमूर्तो वा जगदादीन् सृजति? यदि मूर्तस्तदा कुलालवत् किं न दृश्यते?। अथामूर्तो जगत् सृजति, तर्हि तस्य शरीराद्यभावात् कथं जगत्सृष्टिसामर्थ्यं? अतः शुभाशुभकर्मणां कर्ता जीव एव, भोक्तापि जीव एव। अत एवोक्तमागमे—"जीवेणं भंते किं अत्तकडे दुक्खे परकडे दुक्खे तदुभयकडे दुक्खे? गोयमा अत्तकडे नो परकडे नो तदुभयकडे"। अत आत्मा कृतानि स्वयमेव भुंक्ते। तथा हे अग्निभूते! मया ज्ञानावरणादीन्यष्टकर्माणि प्रत्यक्षेण दृश्यन्ते। ततः सत्त्वं प्रतिपद्यस्व, भवत्संशयविज्ञानवत् जीवकर्मादिकं मम किमपि वस्त्वदृश्यं नास्ति। तथा च वेदे—पुण्यं पुण्येन कर्मणा, पापं पापेन कर्मणा इत्यादि। तस्मादागमादपि सिद्धं कर्म स्वीकुरु।"

इत्येवं भगवता प्रतिबोधितः स्वामर्षं त्यक्त्वा दध्यौ—"अहो महद्भाग्यं, यतो मम विश्वपूज्यो निविडजाड्यैकहरणतिग्मरश्मितुल्यानन्तगुणयुक्तो गुरुर्मिलितः। इति सानन्दं पञ्चभिः शतैश्छात्रैः सह दीक्षां ललौ षट्चत्वारिंशत्तमवर्षे। ततो दश वर्षाणि यावत् छद्मस्थपर्यायं प्रपाल्य केवलज्ञानमवाप। षोडश वर्षाणि यावत् केवलज्ञानं भवस्थं भुक्त्वाऽभवस्थकेवलज्ञानपदमलंचकार। अत्र बहुयुक्तिमद्व्याख्यानं श्रीजिनभद्रगणिक्षमाश्रमणकृतमहाभाष्यबृहद्वृत्तितोऽवसेयं। इति।

जिनेन्द्रवाक्याद्धृतकर्मसंशयो, द्वितीयभट्टारक आत्तसंयमः।
त्रसादिजीवेषु दयामयागमं, प्ररूप्य निर्वाणपुरं समासदत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभे षट्पञ्चाशत्तमं व्याख्यानम् ॥ ५६ ॥

वादप्रतिपादकानि च द्रष्टव्यानि । तथा हे सौम्य ! इहात्मत्वेनाविशिष्टानामात्मनां यदिदं देवासुरमनुजतिर्यगादिरूपं क्ष्मापतिद्रमकादिरूपं वा वैचित्र्यं, तन्न निर्हेतुकमेष्टव्यं, मा प्रापत्सदा भावाभावदोषप्रसंगः । यतः—

'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्' । यदेव अस्य वैचित्र्यस्य हेतुस्तदेव कर्म ॥

इति । तथा पौराणिका अपि कर्मसिद्धिं प्रतिपद्यन्ते । तथा च ते प्राहुः—

यथा यथा पूर्वकृतस्य कर्मणः, फलं निधानस्थमिवावतिष्ठते ।
तथा तथा तत्प्रतिपादनोद्यता, प्रदीपहस्तेव मतिः प्रवर्तते ॥ १ ॥
यत्तत्पुरा कृतं कर्म न स्मरन्तीह मानवाः । तदिदं पांडवज्येष्ठ दैवमित्यभिधीयते ॥ २ ॥

अतो मूर्तं कर्म प्रतिपत्तव्यं । अमूर्तत्वे हि कर्मणः सकाशादात्मनामनुग्रहोपघातौ न स्याताम् । आकाशादिवत् । एतत्कर्मणा सह संयोगो जीवस्यानादिको ज्ञेयः । यदि सादिः स्यात्तदा मुक्तात्मनामपि कर्मयोगः स्यादकर्मकत्वाविशेषात् । ततश्च मुक्ता अमुक्ताः स्युः । न चेदमिष्टं । तस्मात् प्रवाहतोऽनादिः संयोगः । नन्वनादिसंयोगे कथं विरहो ( वियोगो ) जीवस्य कर्मणा सह ? उच्यते—काञ्चनोपलानां यद्यप्यनादिः संयोगस्तथापि तथाविधसामग्रीसद्भावे धमनादिना शल्य-वियोगो दृष्टः, एवं जीवस्यापि ध्यानाग्निनाऽनादिकर्मणा सह वियोगः सिद्धो भवतीति । तथा हे आयुष्मन् ! कर्माभावे धर्माधर्मदानादानशीलाशीलतपोऽतपआदीनां सुखदुःखस्वर्गनरकादिफलं सर्वं व्यर्थं स्यात् । तस्मात् स्वपक्षं विहाय कर्मसद्भावं स्वांगीकुरु । ननु जगदादीनां सर्वेषां वस्तूनां कर्तेश्वर एव, कोऽर्थो वा वन्ध्यास्तनंधयलीलातुल्याद्दष्टकर्मकल्पनया ? । तद-

नता सिंहालिंगनं कृतं । अथ मम तत्र शीघ्रगमनमेव युक्तं" । इत्यादिवाग्गर्जितं कृत्वा जिनान्तिकं प्राप्तः । तदा सर्वदर्शिना नामगोत्राभ्यामाभाषितः सन् दध्यौ—'जगत्प्रसिद्धोऽहं । कः किल मां न वेत्ति । यदि मे हृदयगतं संशयं ज्ञास्यति, अपनेष्यति च, तदा भवेन्मम विस्मयः" । इति चिन्तयति तस्मिन् भगवानाह—"हे अग्निभूते गौतम ! त्वमेतन्मन्यसे यदुत कर्माणि किं सन्ति न वेति । नन्वनुचितस्ते संशयः । त्वं वेदपदानामर्थं न जानासि, तेन संशयं करोषि । तेषामयमर्थः, तानि चामूनि वेदपदानि—पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति । यदेजति यन्नेजति यद्दूरे यदन्तिके यदन्तरस्य सर्वस्यास्य वाह्यतः इत्यादि । तेषां चायमर्थस्तव पक्षे—पुरुष आत्मैव ग्निंशब्दो निश्चये, स च कर्मनिषेधार्थः । इदं सर्वं प्रत्यक्षं वर्तमानं चेतनाचेतनं । यद्भूतं यदतीतं । यच्च भाव्यं मुक्तिसंसारौ । उत समुच्चये । अमृतत्वस्यामरणस्य मोक्षस्य । ईशानः प्रभुः । यदन्नेनातिरोहति यदाहारेण वृद्धिमुपैति । यदेजति यच्चलति पश्वादि । यन्नेजति पर्वतादि । यद्दूरे मेर्वादि । यदन्तिके समीपे । तदप्यात्मैवेत्यर्थः । यदन्तर्मध्ये । अस्य चेतनाचेतनस्य । सर्वस्य यदेव सर्वस्यास्य वाह्यतः । तत्सर्वं पुरुष एवेत्यनेन कर्माभावः स्थाप्यते (त्वया) । तदयुक्तं । यतो वेदवाक्यानि हि कानिचिद्विधिवादपराणि, कान्यप्यर्थवादप्रधानानि, अपराणि त्वनुवादपराणि । तत्राग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादीनि विधिवादपराणि । अर्थवादः स्तुत्यर्थवादः निन्दार्थवादो वा । तत्र पुरुष एवेत्यादीनि स्तुत्यर्थवादपराणि । पशुवधहेतुत्वाद्यज्ञो न विधेय इत्ययं निन्दार्थवादः । द्वादश मासा संवत्सरः, अग्निरुष्णः, अग्निर्हिमस्य भेषजं इत्यादीन्यनुवादप्रधानानि, लोकप्रसिद्धस्यैवार्थस्यैतेष्वनुवादादिति । तस्मात् पूर्वोक्तानि स्तुतिपराणि जात्यादिमदत्यागायाद्वैत-

## ॥ अथ षट्पञ्चाशत्तमं व्याख्यानम् ॥ ५६ ॥

अथ तृतीयं कर्त्राख्यस्थानं निगद्यते—

**शुभाशुभानि कर्माणि जीवः करोति हेतुभिः । तेनात्मा कर्तृको ज्ञेयः कारणैः कुंभकृद्यथा ॥ १ ॥**

कंठ्यः । भावार्थस्त्वयं—यथा कुम्भालो मृच्चक्रचीवरादिभिः कारणैर्घटमुत्पादयति, तथा जीवः कषायादिभिर्बन्धहेतुभिः कर्म बध्नाति । इत्येवं ज्ञाततत्त्वः सम्यक्त्वस्थानतामवगाहते, इति तृतीयं स्थानम् ।

अथ भोक्तृस्थानं निरूप्यते—

**स्वयंकृतानि कर्माणि स्वयमेवानुभूयते ( तेषामनुभवः स्वयं ) ।**
**कर्मणामकृतानां च नास्ति भोगः कदापि हि ॥ ४ ॥**

कंठ्यः । अत्रार्थेऽग्निभूतिज्ञातं । तच्चेदम्—

मगधजनपदे गोबरग्रामे वसुभूतिविप्रस्तस्य पत्नी पृथ्वी । तयोः पुत्रोऽग्निभूतिर्जातः । अन्येद्युः सोमभट्टगृहे यज्ञकरणार्थं पञ्चशतछात्रैः सह समागतः । तदा प्रथममेव गतमिन्द्रभूतिं जिनान्तिके प्रव्रजितं श्रुत्वेति दध्यौ—"दुर्जयस्त्रिभुवनस्यापि मद्भ्रातेन्द्रभूतिः केनचिद्दुष्टेनेन्द्रजालिकेन छलादिना छलितः । जगद्गुरोर्मद्भ्रातुश्चेतो भ्रमितं । तस्मादहं गत्वा तं दुष्टं युक्त्या निगृह्णामि । अहो धिग्मद्भ्रातरं सर्वज्ञमार्तण्डसदृशं, यन्मां मुक्त्वैको गतः । किं कृतमनेन स्वशक्तिमजा-

समयेऽहं दूरे प्रहितः ? मत्तः किं मोक्षमार्गः संकीर्णोऽभवत् ? हे त्रिभुवनैकतरणे ! अथ को मां प्रश्नोत्तरं दास्यति ?" इत्यादि विचिन्त्य पुनः पुनः महावीरशब्दं संस्मरन् शुष्ककंठतालु तदक्षरमध्यात् वीतिवर्णो मुखे स्थितवान् ! तदा द्वादशांग्यागमज्ञत्वादेकेनैव शब्देन सर्वशास्त्रार्थसंदर्भकशक्तिमन्तं गणनाथं वीतिवर्णपूर्वकाः सुशब्दाः स्मृतिपथे आजग्मुः— वीतरागः, विबुद्धः, विषयत्यागी, विज्ञानी, विकारजित्, विद्वेषी, विशिष्टश्रेष्ठः, विश्वपतिः, विगतमोही, इत्यादिशब्देषु मध्ये वीतरागशब्दार्थं परिभावयन् विगतमोहः पञ्चमज्ञानमवाप। देवगणैः स्वर्णाबुजरचनादिविधिः वितेने। ततोऽनेकभव्यान् प्रबोध्य द्वादश वर्षाणि यावत् केवलिपर्यायं प्रपाल्य साद्यपर्यवसितसौख्यमभुंक्त। इति।

विमलकेवलबोधगुणोत्तमे, प्रथमगौतमसाधुगणेश्वरे।
जिनवरोदिति जातविनिश्चये, स्तुतिमहं विदधामि मनोरमाम्॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभे पञ्चपञ्चाशत्तमं व्याख्यानम्॥ ५५॥

तदा विज्ञानघन आत्मा नश्यति । अत एव न प्रेत्यजवे संज्ञास्ति, प्रागेव सर्वनाशं नष्टत्वात् । इत्येतदयुक्तं, अस्य वेदपदस्यायमर्थो युक्तस्तन्निशम्यताम्—विज्ञानं ज्ञानदर्शनोपयोगस्तेन घनो निबिडो जीवः एतेज्यो ज्ञेयजावपरिणतेज्यो जूतेज्यो घटादिज्यः समुत्थाय घटादिज्ञानोपयोगेनोत्पद्य तान्येवोपयोगलंबितानि जूतानि, अनु पश्चात् कालक्रमेणान्यमनस्कत्वादिनाऽर्थान्तरोपयोगे सति ज्ञेयजावेन विनाशमश्नुवन्ति, न पुनरयमात्मा सर्वथा विनश्यति । यत एक एवायमात्मा त्रिस्वजावः । कथं ? उच्यते—पूर्वोपयोगविगमेन विनश्वररूपः, अपरविज्ञानोपयोगस्वजावेनोत्पादस्वरूपः, अनादिकालप्रवृत्तसामान्यविज्ञानमात्रसंतत्या पुनरयमविनष्ट एव तिष्ठति । एवमन्यदपि वस्तु सर्वं त्रिस्वजावं ज्ञेयं । न प्रेत्यसंज्ञास्ति, न चान्यवस्तूपयोगकाले प्राग्विज्ञानसंज्ञा न स्यात्, सांप्रतवस्तूपयोगात् । अनेनार्थेन जीवसत्त्वं प्रतिपद्यस्वेति ।

तदेवं त्रिजगत्स्वरूपवेदिना जगवता निःशेषपरप्रबोधनोपायकुशलतया गतसंशय इन्द्रजूतिः पञ्चाशद्वर्षीयमुक्तगृहिधर्मो जागवतीं दीक्षां जग्राह । जगवता गणधरपदे स्थापितः । काञ्चनवर्णः सप्तहस्तोच्चदेहमानोऽनेकलब्धिसमन्वितः शुद्धचारित्रपर्यायेण प्राप्तचतुर्थज्ञानः क्षयोपशमदर्शनान्वितो यावज्जीवं षष्ठतपःकारको निर्जितविषयकषायादिगुणः श्रीइन्द्रजूतिगणजृद्बजूव, येन त्रिंशद्वर्षाणि यावत् सर्वज्ञसेवा कृता ।

अथान्यदा वीरेण स्वनिर्वाणसमयमासन्नं ज्ञात्वा प्रेमच्छिदे गौतमो देवशर्मविप्रप्रबोधाय तत्र प्रहितः । तदा षोडश प्रहरान् यावत् जगदीश्वरो देशनां दत्वाऽक्षयसौख्यं प्राप । ततः श्रीगणजृत्तं प्रतिबोध्य जिनाज्यर्णे समागच्छन् सुरगणात् सर्वज्ञमोक्षं ज्ञात्वा वज्राहत इवाकस्मात् सशोकचित्तोऽचिन्तयत्—"अहो ! कृपासमुद्रेण किमिदं चेष्टितं कृतं ? यतोऽस्मिन्

एवोपपद्यते, नैकतरस्याभावे । इत्यनुमानेन जीवास्तित्वं प्रतिपद्यस्व । तथा च हे सौम्य ! आगमाः सर्वे परस्परविरुद्धताभाजस्ततश्च कः प्रमाणं कश्चाप्रमाणमिति संदेहो न युक्तः । यतः सर्वेऽप्यागमा आत्मसत्त्वं स्थापयन्त्येव । यदाहुः शाब्दिकाः—यद्व्युत्पत्तिमत् सार्थकं शुद्धपदं, तद्वस्तु भवत्येव, यथा तपनः । व्युत्पत्तिरहितश्च यच्छब्दः, तद्वस्तु नास्त्येव, यथा डित्थडवित्थादयः । तथा—

परमानन्दसंपन्नं निर्विकारं निरामयम् । ध्यानहीना न पश्यन्ति निजदेहे व्यवस्थितम् ॥ १ ॥
उत्तमा ह्यात्मचिन्ता च मोहचिन्ता च मध्यमा । अधमा कामचिन्ता च परचिन्ताधमाधमा ॥ २ ॥
नलिन्यां च यथा नीरं भिन्नं तिष्ठति सर्वदा । अयमात्मा स्वभावेन देहे तिष्ठति सर्वदा ॥ ३ ॥

ये सर्वशास्त्रसंमतं जीवाभावं कथयन्ति, ते मिथ्यावादिन एव, अतोऽसंख्यप्रदेशात्मकं जीवं प्रपद्यस्वेति । तथा हे गौतम ! आत्मसदृशः पदार्थः कोऽपि नास्ति, तदयुक्तं, धर्माधर्माकाशाः पदार्थास्तत्प्रदेशप्रमाणा एव सन्ति । तेषां स्थापनं तु हरिभद्रकृतषड्दर्शनसमुच्चयबृहद्वृत्तितो ज्ञेयं । तथा च यादृशस्तव देहे आत्मा तादृशोऽन्यदेहेऽप्यस्ति, हर्षशोकसंतापसुखदुःखादिविज्ञानोपयोगस्य सर्वत्र दर्शनात् । तथा चात्मा कुंथुर्भूत्वा स्तंबेरमो भवति, इन्द्रो भूत्वा तिर्यग्भवति । अतोऽचिन्त्यशक्तिमान् विभुः कर्ता ज्ञाता कर्मतो भिन्नाभिन्नस्वरूपमय एष्टव्यः । तथा विज्ञानघनादिवेदवाक्यस्येममर्थं त्वं करोषि—विज्ञानघनरूप आत्मा भूतेभ्यः पञ्चभूतेभ्यः समुत्थायोत्पद्य, ततस्तान्येव महाभूतान्येव अनुविनश्यति

एतावानेव लोकोऽयं यावानिन्द्रियगोचरः ।
जद्रे वृकपदं पश्य यद्वदन्त्यबहुश्रुताः ॥ १ ॥
पिब खाद च चारुलोचने, यदतीतं वरगात्रि तन्न ते ।
न हि जीरु गतं निवर्तते, समुदयमात्रमिदं कलेवरम् ॥ २ ॥

इति नास्तिकाः । तथा च वेदे—"न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसंतं प्रियाप्रिये न स्पृशतः" इति । तथा कापिलमते—'अस्ति पुरुषोऽकर्ता निर्गुणो जोक्ता चिद्रूपः' इत्यादिशास्त्रादपि विरुद्धत्वान्नात्मसिद्धिः । तथा च नेह कश्चित्त्रिभुवनेऽप्यात्मसदृशः पदार्थः, य उपमयोपमीयते । इति सर्वप्रमाणातीतो जीवो नास्त्येवेति त्वं मन्यसे । तदयुक्तं । हे आयुष्मन् ! अतीन्द्रियमपि त्वच्चित्तगतजीवसंशयवत् सर्वत्राहंप्रत्ययेन जीवं पश्यामि । तव त्वहंप्रत्ययग्राह्यमात्मानं निह्नुवानस्य माता मे वंध्येतिवत् स्ववाक्यव्याहतिदोष आपतति । तथा जीवं स्मृतिजिज्ञासाचिकीर्षाजिगमिषासंशीत्यादिज्ञानविशेषाणां तद्गुणानां स्वसंवेदनप्रत्यक्षत्वात् प्रपद्यस्व । तथा देहाद्यक्षाणामधिष्ठाता जोक्ता स जीव एव, यस्य जोक्ता नास्ति तज्जोग्यमपि न जवति, यथा खरविषाणं । जोग्यं शरीरादिकं, ततो विद्यमानजोक्तृकमिति । पुनर्हे सौम्य ! अस्त्येव तव जीवः, संशयसद्भावात्, यत्र यत्र संशयस्तत्र तत्र तदस्ति, यथा स्थाणुपुरुषौ, कश्चिन्नरो दूराद्वने स्थाणुं नरं च दृष्ट्वा स्थाणुपुरुषधर्मद्वयान्वेषणं करोति—किमयं स्थाणुर्वा पुरुषो वा । एवं संशय आत्मशरीरयोः सत्त्व

स्मरणं । अत एव तस्य सपर्यायभावाभवान्तरगमनानि सादिसान्तकाले वैशिष्ट्येनानित्यः । एतावतात्मा नित्यः । तत्पर्यायास्त्वनित्याः । न च कदाचिद्द्रव्यपर्यायरहितः स्यात् । उक्तं च पूज्यैः—

"पर्यायविच्युतं द्रव्यं पर्याया द्रव्यवर्जिताः । किं कदा केन किंरूपा दृष्टा मानेन केन वा ? ॥ १ ॥"

चापरं सद्भावेन सत्तामाश्रित्य शाश्वतोऽनाद्यनन्तकेवलावस्थायित्वेन ध्रुवो ज्ञेयः एवं निश्चलीकृते मनसि सम्यक्त्वस्थानता ज्ञायते ।

अत्रार्थ इन्द्रभूतिप्रबन्धोऽयम्—

मगधदेशे गोबरग्रामे वसुभूतिविप्रः । तस्य पृथ्वी नाम भार्या । तयोरिन्द्रभूतिस्तनयः । स च स्वबुद्ध्या व्याकरणन्यायकाव्यालंकारवेदपुराणोपनिषदादिसर्वशास्त्रज्ञो जातः । परं स वेदार्थं परिभावयन् जीवसंशयं बभार । स स्वात्मनि सर्वज्ञाडंबरं वहन् एकदा वीरसमवसरण आययौ । तदा जिनेनालापितः—'हे इन्द्रभूते ! अनया युक्त्या त्वया जीवाभावः स्थाप्यते—यच्चायं जीवो घटपटलकुटनिकुरंबमिव प्रत्यक्षेण न दृश्यते, अतः शशविषाणवत् प्रत्यक्षप्रमाणेन यन्न दृष्टं तन्नास्त्येव । तथा चानुमानप्रमाणमपि प्रत्यक्षेण प्रवर्तते, यथा पूर्वं महानसादौ धूमेनाग्निमध्यक्षेण गृहीत्वा तदुत्तरकालं 'यत्र धूमस्तत्र वह्निः' इत्येवमवगच्छति । न चैवमात्मलिंगिना सार्धं कस्यापि लिंगस्य प्रत्यक्षेण सिद्धिरस्ति, येन चिह्नेन जीवे प्रत्ययः स्यात् । तथा च नागमग्राह्योऽपि जीवः । यतः सर्वेषामप्यागमाः परस्परविरोधिनः खलु । तथाहि—

## ॥ अथ पञ्चपञ्चाशत्तमं व्याख्यानम् ॥ ५५ ॥

अथ सम्यक्त्वस्य षट्सु स्थानेषु प्रथमं जीवसत्ताख्यस्थानस्वरूपमिदं—

**अनुभवसिद्धो जीवः प्रत्यक्षो ज्ञानचक्षुषाम् । ज्ञायतेऽनेकवाग्भिर्निरस्तिस्थानं तदेव हि ॥ १ ॥**

इह केचिन्मिथ्यात्विन इत्थं जीवाभावं वेदयन्ति—नास्त्यात्मा, सम्यक् पञ्चेन्द्रियैः प्रत्यक्षेण गृहीतुमशक्यत्वात्, व्योमकुसुमवत्, अतो नास्त्येवात्मेति । तन्निरासायोच्यते—ननु स्वसंवेदनानुभूत आत्मा । तथेति शेषः । ज्ञानचक्षुषां केवलिनां प्रत्यक्षः । न केवलं केवलिगम्यः, किं त्वनुमानगम्योऽपि सिद्धः । अनेकवाग्भिः सुखदुःखकल्पनाजालैर्निश्चीयते । अत्र साधनं चेदं—अस्त्यात्मा चैतन्यसुखदुःखेच्छादीनां कारणभूतत्वात्, यत् कार्यं कारणभूतं तत्तदस्ति, यथा घटकारणं मृत्पिण्डः, तथा चायमिति । येषां सम्यग्बुद्धिस्तेषां सम्यक्त्वस्थानता ज्ञायते । हीति निश्चयेन तदेव अस्तिस्थानं प्रथममिति ।

अथ जीवनित्यत्वस्थानं निरूप्यते—

**द्रव्यार्थापेक्षया सत्त्वो व्ययोत्पादविवर्जितः । पर्यायपक्षतोऽनित्यः सद्भावेन च शाश्वतः ॥ २ ॥**

अयमात्मा द्रव्यमाश्रित्य । व्ययोत्पादवर्जितो विनाशोत्पत्तिविरहितो ज्ञेयः । न कदाचिदप्ययमुत्पद्यते विपद्यते च । नन्वेवं ब्रुवाणेनाचार्येण नित्यैकान्तपक्ष एव कक्षीकृतोऽतस्तन्निराक्रियते—हीति चार्थे । पर्यायपक्षतोऽनित्यः अशाश्वतः । यतः पूर्वकृतकारितस्मरणात् । मयेदं पूर्वजन्मनि श्रीमदर्हद्बिंबं कारितमासीत्, अधुना तदवलोकनात् प्रत्यभिज्ञाने जाते

कं नमस्कारमर्हसि ?" । यक्षोऽवक्—"भो ममान्त्यमेव नमस्कारं त्वं कुरु । यतो जगत्सृष्टिसंहारपालनं संसारान्निस्तारणादि (च) मयैव क्रियते" । कुमारो जगौ—"भोः पूर्वं त्वमेव भवाब्धौ मग्नोऽसि, अन्यान् कथं तारयिष्यसि । यतः—

जह लोहशिला अप्पंपिं बोलए तह विलग्गपुरिसंपि । इय सारंभोय गुरू परमप्पाणं च बोलेई ॥ १ ॥"

इत्याद्युक्तिभिः प्रबुद्धस्तस्योपरि पुष्पवृष्टिं कृत्वा 'त्वया संकटेऽहं स्मार्यः' इत्युक्त्वा तिरोबभूव । अन्यदा कुमारेण दुर्जयः कलिंगजनपदाधिपः समरे यक्षसाहाय्येन निर्जितः ।

अथान्यदा विक्रमनृपो राजपाटिकां गच्छन्नेकस्येभ्यस्य गृहे महोत्सवं दृष्ट्वा प्रमोदं दधत् क्रीडां कृत्वा पश्चादागच्छंस्तत्रैवेभ्यावासे रोदनक्रन्दनं दृष्ट्वाऽपृच्छत् । ततः केनापि प्रोक्तं—'स्वामिन् ! अस्य पुत्रो जातमात्रो विपन्नः संप्रत्येव, अतो लोका विलपन्ति' । इति श्रुत्वा राजा वैराग्यमापन्नः । यतः—

"बाल्यादपि चरेद्धर्ममनित्यं खलु जीवितम् । फलानामिव पक्वानां शश्वत्पतनतो भयम् ॥ १ ॥"

इति विचिन्त्य स्वपुत्रं राज्ये न्यस्य दीक्षादिने केवलज्ञानं प्राप्य परमपदं प्राप ।

भावनाभिश्च सम्यक्त्वं सेव्यं विक्रमवत्ततः । यतो ह्याभिर्भवन्त्याशु लोकद्वयमहोदयाः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभे चतुःपञ्चाशत्तमं व्याख्यानम् ॥ ५४ ॥

इति दुःश्रवं प्राग्भवं श्रुत्वा कुमारो जातिस्मृतिं प्राप्य मुनिमेवं जगौ—

"मिच्छत्तमोहमूढो जीव तुमं कत्थ कत्थ न हु भमिओ। छेयणभेयणपमुहं किं किं दुक्खं न पत्तोसि ॥१॥

अथ हे भगवन्! मां प्रसीद, भवकूपाद्धर्मरज्ज्वा समुद्धर" । मुनिः षड्भावनान्वितदर्शनमवर्णयत्। ततः स श्राद्धधर्मं सम्यक्त्वमूलं स्वीकृत्य स्वपुरे समेतः । निरोगो जातः अन्यदा स यक्षः स्वयं प्राह—'भोः कुमार! मद्भक्त्या सज्जदेहो जातोऽसि । मम महिषशतं देहि' । कुमारो हसित्वाह—"मम रोगः केवलिप्रसादादगात् त्वं याचमानः किं न लज्जसे? अहं कुंथुमपि न हन्मि" । श्रुत्वेति यक्षः सकोपं जगाद—'रे मत्कृतं त्वया वीक्षणीयं' इत्युक्त्वाऽदृष्टो जातः । अथान्यदा कानने सर्वज्ञमभ्यर्च्य गृहमागच्छन्तं कुमारं क्रमयोः संगृह्य भूमावास्फाल्य प्राह—'रे अद्यापि कथं न मुञ्चसि स्वाग्रहं?' । श्रुत्वेति यक्षमुवाच—"भोः त्वं जीवहिंसां मा कुरु । यतः—

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः । परोपकारः पुण्याय पापाय परपीडनम् ॥ १ ॥

हेमधेनुधरादीनां दातारः सुलभा भुवि । दुर्लभः पुरुषो लोके यः प्राणिष्वभयप्रदः ॥ २ ॥"

इत्यादि कुमारसाहसं दृष्ट्वा जगौ—'त्वं मम प्रणामं कुरु । तेनैवाहं तुष्टो भविष्यामि' । कुमारो जगौ—"भोः प्रहासविनयप्रेमप्रभुभावभेदतो नमस्कारः पञ्चधा । तत्र मत्सरेणावहेलनया च कस्यापि यो नमस्कारः स प्रहासः । पित्रादिभ्यो यः स विनयः । मित्रादीनां यः स प्रेम । यः पार्थिवादीनां स प्रभुः । यो गुर्वादिषु स भावनमस्कारः । त्वमेतेषां मध्ये

कुसुमपुरे हरितिलकराजा। तस्य गौरी पत्नी। तयोः पुत्रो विक्रमः। स पित्रा द्वात्रिंशन्नृपकन्याः परिणायितः। ताभिः सह दोगुंदुकसुर इव सौख्यमनुभवन् दुष्कर्मवशादकस्मात् कासश्वासज्वरादिभिरामयैरुपद्रुतो बहुमंत्रतंत्रौषधादिभिरुपचरितोऽपि शान्तिं न प्राप। ततो गदार्तो धनञ्जययक्षस्य रोगशान्तये महिषशतं मेने, तदपि व्यर्थमभूत्।

इतश्च विमलकेवलिनं वने समागतं वनरक्षकाज्ज्ञात्वा राजा वन्दनोत्सुको जातः। कुमारेणोक्तं—'तात मां तत्र नय। मुनेर्दर्शनतो व्याधिक्षयः पापक्षयश्च मे स्यात्'। नृपेण तथा कृतम्। केवलिना देशना दत्ता। राज्ञा तस्य महाव्याधिकारणं पृष्टं। केवली प्राह—

पुरा पद्मराजाऽन्यायमन्दिरं। सोऽन्यदा आखेटकं कुर्वन् प्रतिमास्थं साधुं दृष्ट्वा निष्कारणं वैरं चिन्तयन्मुनिं शरेण जघान। तदा धार्मिकैः प्रधानादिभिः राजा पञ्जरे क्षिप्तः। तस्य सूनू राज्ये स्थापितः। मुनिस्तु समाधिध्यानेन लवससमसुरो जातः। अथ कियद्दिनं यावत् पञ्जराभिःकास्य नगराद्बहिः कृतः इतस्ततो वनेऽभ्रमत्। तेन च नृपेण द्वेषान्मुनिस्ताडितः। तदा मुनिना ज्ञानेन तं दुराचारं ज्ञात्वा तेजोलेश्यया भस्मीकृतश्चरमनरके गतः। तदायुःक्षयेण स्वयंभूरमणे मत्स्यत्वं प्राप्य सप्तम्यां गत्वा पुनर्मत्स्यभवं गत्वा षष्ठीं दुर्गतिं गतः। इत्थमेकस्मिन्नरके द्विवेलं त्रिवेलं भ्रान्त्वा कुदेवकुमारो भूत्वा तिर्यक्पृथिव्यप्तेजोवाय्वाद्यनन्तकायादिषु महापदं सहमानेन पद्मेनानन्तोत्सर्पिण्योऽतिक्रान्ताः। ततोऽकामनिर्जरया स्वकर्माणि लघूनि कुर्वन् कश्चिदिभ्यपुत्रो भूत्वा तापसश्च भूत्वा तव पुत्रो जातः। स्तोकमात्रावशिष्टर्षिघातपातकेन रोगैः पराभूतः"।

॥ अथ चतुःपंचाशत्तमं व्याख्यानम् ॥ ५४ ॥

अथ षड्भावना निरूप्यन्ते—

मूलं द्वारं प्रतिष्ठानमाधारो भाजनं निधिः । द्विविधस्यापि धर्मस्य षडेते बोधिभावनाः ॥ १ ॥

स्पष्टः ।

मूलं सर्वज्ञधर्मद्रोर्द्वारं मुक्तिपुरस्य च । जिनोक्तधर्मयानस्य प्रतिष्ठानं सुनिश्चलम् ॥ १ ॥
आधारो विनयादीनां धर्मामृतस्य भाजनम् । निधिर्ज्ञानादिरत्नानां सम्यक्त्वमिति भावयेत् ॥ २ ॥

गमनिका—सर्वज्ञोक्तयतिश्राद्धरूपधर्मवृक्षस्य सम्यक्त्वं मूलं । तन्निश्चले सति स्वर्गापवर्गादिफलं प्राप्यते, इति प्रथमा भावना । मोक्षपुरस्य द्वारं, यतस्तद्दर्शनरूपद्वारं विहाय न प्रवेशो नान्तर्गमनं, अपरस्मिन्नगरे गोपुरद्वारं विना प्रवेशो न स्यादिति द्वितीया भावना । तथा जिनोक्तधर्मयानस्य तद्दर्शनं प्रतिष्ठानं सुनिश्चलं पीठं, तत्पीठे निश्चले सति धर्मश्चिरकालं तिष्ठतीति तृतीया भावना । तथा विनयादिगुणानां दर्शनमाधारोऽवस्थानं, एतद्विना तेषामस्थिरत्वमिति चतुर्थी भावना । तथा धर्मरूपसुधाया भाजनं दर्शनं, पात्रं विना नान्यत्र धर्मामृतं तिष्ठतीति पञ्चमी भावना । तथा ज्ञानदर्शनचरणादिरत्नानां सम्यक्त्वं निधानं, यथा निधानं विना रत्नानां नावस्थितिस्तथा सम्यक्त्वमन्तरेण रत्नत्रयस्यापि नावस्थानमिति षष्ठी भावना । इत्थं सम्यक्त्वं भावयेत् । अत्रार्थे विक्रमनृपज्ञातं । तच्चेदं—

रा मुक्तास्ते च कंठे हारत्वं, मौलौ मौलितां, कर्णयोः कुंडलत्वं, करचरणे च कटकत्वं जज्ञिरे। आरक्षकैस्तच्चित्रं राज्ञे ज्ञापितं। ततो राज्ञा तत्रागत्य श्रेष्ठी सत्कृत्य स्वहस्तिनमारोप्य समहोत्सवं स्वगृहे नीतः। तज्ज्ञातं ज्ञात्वा तया कायोत्सर्गो मुक्तः। अथ राजा तन्मुखाद्राज्ञीवृत्तं ज्ञात्वा श्रेष्ठिवचनादभयाया अभयं दत्वा श्रेष्ठिनं हस्तिस्कन्धमारोप्य स्वगृहे प्रैषीत्। तद्वृत्तं विज्ञायाभया स्वमुद्बध्य मृता। पंडिता पाटलीपुरे वेश्यान्तिकेऽगमत्।

अथ सुदर्शनो भवविरक्तो गृहीतव्रतो विचरन् पाटलीपुरे गतः। तत्र पंडितया प्रतिलाभमिषेण स्वगृहे नीत्वा द्वारं पिधाय कदर्थितोऽपि नाचलत्। ततः सायं विमुक्तो निर्गत्य वने गत्वा स्मशानान्तः प्रतिमया स्थितः। तत्रापि व्यन्तरीभूतया तयाभयाराज्ञ्या प्राग्वैरादनेके उपसर्गाः कृताः। तथापि तन्मनो न चलितम्। स मुनिः शुक्लध्यानात् केवलज्ञानमासाद्य देशनां ददौ। तदाऽभयापि सम्यक्त्वं प्राप। पंडितापि प्रतिबोधिता। एवं केवलपर्यायं चिरं प्रपाल्य शिवं गतः। इति।

बलान्नियोगादपि ये स्वधर्मे, सुदर्शनस्येव भजन्ति दार्ढ्यं।
सुदर्शनैस्ते प्रवरा जगत्यां, क्षणेन संपत्तिपदं भजन्ते ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभे त्रिपञ्चाशत्तमं व्याख्यानम् ॥ ५३ ॥

धसा समं निविडा प्रीतिरभूत्। अन्यदा पत्युक्ततद्गुणश्रवणानुरक्ता तत्पत्नी कपिला कामातुरा सुदर्शनसौधे समेत्य 'तवाद्य सुहृदो वपुरपाटवमस्त्यतस्त्वया सुखपृच्छार्थं शीघ्रं मद्गृहे समेतव्यं' इत्युक्त्वा तं गुप्तगृहान्तर्नीत्वा द्वारं दत्वा त्रपां त्यक्त्वा रतार्थं प्रार्थयामास। ततः परस्त्रीरतौ षंढः स श्रेष्ठी शीलरक्षार्थं 'षंढोऽहमस्मि मुग्धे, किं वृथा मां प्रार्थयसि ?' इत्युक्त्वा निर्गत्य गृहमागतः।

अन्यदा नृपः सपुरोधःसुदर्शनः क्रीडितुमुद्यानं गतः। यानारूढाभया राज्ञ्यपि कपिलया समं वनमगात्। इतः कपिला सुदर्शनप्रियां सुतषट्कयुतां पथि दृष्ट्वा 'केयं स्त्री ?' इत्यभयामपृच्छत्। तयोक्तं—'इयं श्रेष्ठिस्त्री, एते तत्सुताः'। ततः कपिलया तद्वृत्तान्तो मूलतः प्रोक्तः। अथ सा देव्या प्रोचे—'त्वं मुग्धाऽनेन दंभेन वञ्चिता'। ततस्तयोक्तं—'देवि ! तवापि वैदग्ध्यं तदा वेद्मि, चेदनेन समं रमसे'। इति तद्वचः श्रुत्वा देव्याङ्गीकृतं।

एकदा राजादौ वने रंतुं गते शून्यगृहे कायोत्सर्गस्थं कामयक्षमूर्तिदंभेन यानारूढं कारयित्वा पंडिताख्यया स्वधात्र्यानाय्य स्वान्तःपुरान्तः प्रच्छन्नं क्षिप्त्वा सा कामविभ्रमादिदर्शनपूर्वमत्यर्थं प्रार्थितवती। तथापि तन्मनो न मनागपि चलितं। ततस्तया स्तनोपपीडं तस्य सर्वाङ्गीणमालिंगनं दत्तं। तथापि न क्षुब्धं चेतः। ततः कुपितया तया पूच्चक्रे। तच्छ्रुत्वा रक्षकैः स धृत्वा राज्ञोऽग्रे नीतः। पृष्टेनापि तेन तस्यां कृपया मौनमाश्रितं। ततो दोषं संभाव्य रुष्टेन राज्ञा 'एष विडंब्य पुरे भ्रामयित्वा मार्यतां' इति रक्षका आदिष्टाः। तैस्तथा कृत्वा नीयमानस्तत्प्रियया दृष्टः। तदा सा जिनाग्रे कायोत्सर्गं चकार कलंकोत्तरणं यावत्। इतस्ते तं शूलिकायां न्यधुः। सा च स्वर्णसिंहासनमभूत्। अथ तैस्तद्वधार्थं खड्गप्रहा-

## ॥ अथ त्रिपञ्चाशत्तमं व्याख्यानम् ॥ ५३ ॥

अथ बलान्नियोगेनेत्याकारः प्रतन्यते—

**बहूनां हठवादेन बलाद्वा त्यक्तसेवनम् । एवं बलान्नियोगः स्यात् षडेते छिं[1]डिका मताः ॥ १ ॥**

सुगमः । केचिदुत्सर्गपक्षस्थाः परबलादपि स्वव्रतं न मुञ्चन्ति । अत्रार्थे सुदर्शनप्रबन्धोऽयम्—

चंपायामृषभदासः श्रेष्ठी । तस्यार्हद्दासी स्त्री सुशीलाऽभवत् । अन्येद्युर्माघमासे सुभगाख्यस्तन्महिषीपालः श्रेष्ठिमहिषीश्चारयित्वा गृहमागच्छन् सायमपावृतं प्रतिमास्थं शीतार्तं मुनिं पथि दृष्ट्वा तस्य श्लाघां विधाय गृहमागत्य निशामतिवाह्य सवेलमुत्थाय महिषीः पुरस्कृत्य गच्छन् तथास्थं मुनिं वीक्ष्य तत्पार्श्वे निषण्णः । इत उदिते रवौ स चारणमुनिः 'नमो अरिहंताणं' इत्युक्त्वा दिवमुत्पतितः । ततस्तेन तत्पदं व्योमगामिविद्यामंत्रमिव मत्वा चित्ते न्यस्तं । तदेव सोऽर्हत्सन्निधौ अन्येद्युः पठति स्म । तद्ध्यानपरं तं दृष्ट्वा श्रेष्ठी पप्रच्छ—'कुत इदं त्वया प्राप्तं ?' । तेनोक्तं—'मुनेः' इत्युक्ते सर्ववृत्तान्ते च तुष्टः श्रेष्ठी तं संपूर्णं नमस्कारमपाठयत् ।

इतस्तद्गुणनं कुर्वतस्तस्य क्रमाद्वर्षाकालः समेतः । ततो मेघेनैकार्णवे महीमंडले कृते स महिषीर्लात्वा वनं गतः । अन्तराले नदी पूरमागता । अथ तेन व्योमविद्याबुद्ध्या तदेव स्मरता नद्यां झंपा दत्ता । अन्तराले स कीलकविद्धो मृत्वा तस्यैव श्रेष्ठिनः सुदर्शनाख्यः सुतो जातः । क्रमात् पितृभ्यां मनोरमामिभ्यसुतां विवाहितः । इतस्तस्य कपिलेन नृपपुरो-

---

[1] भाषाशब्दोयं द्वारवाचकः ।

पुनः शक्रः प्राह—'हिरण्यहाटकमण्यादिकेन कोशं वृद्धिं नीत्वा ततो व्रतचरणं युक्तं'। श्रुत्वेति नमिराह—

"सुवण्णरूप्पस्स उ पव्वया भवे, सया हु कैलाससमा असंखया।
नरस्स लुद्धस्स न तेहि किंचि, इच्छा हु आगाससमा अणंतिआ ॥ १ ॥"

इत्याद्युत्तराध्ययनोक्तयुक्तिभिर्मुनिर्विप्रं निरुत्तरीचक्रे—

इत्येवाक्षोभ्यचित्तं तं मत्वा सत्त्वाश्रयो हरिः। द्विजरूपं परित्यज्य प्रणम्येति स्तुतिं व्यधात् ॥ १ ॥
"अहो ते निज्जिओ कोहो अहो माणो पराजिओ। अहो ते तिरिक्कया माया अहो ते लोहो वसीकओ ॥ १ ॥"

बहुधेति स्तुत्वा नाकेशो नाकं गतवान्। अथ मुनिः क्रमेण केवलज्ञानमवाप्य मोक्षमसाधयदिति।

प्रत्येकबुद्धो नमिराजसाधुः, शक्राज्ञया चैव न मुक्तधर्मः।
प्रशंसितो ज्ञातसुतेन शास्त्रे, सौख्यप्रदो मे च स एव भूयात् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभे द्विपञ्चाशत्तमं व्याख्यानम् ॥ ५२ ॥

वलयावलिदृष्टान्ताज्जीवो बहुपरिग्रही । दुःखं वेदयते नूनं वरमेकाकिता ततः ॥ १ ॥
इत्येकाकिविहारं स ध्यायन् दाहोपशान्तये । स्वप्ने मेरूपरि श्वेतगजारूढं स्वमीक्षते ॥ २ ॥
ईदृग्गिरिः पुराप्यैक्षि क्वापि हेममयो मया । ऊहापोहवशात्तस्य जातिस्मृतिरजायत ॥ ३ ॥
स हि प्राच्यभवेऽगण्यपुण्यश्रामण्यपालनात् । श्रियाऽमाने विमानेऽभूद्भूरः पुष्पोत्तरे सुरः ॥ ४ ॥
स्वर्णशैलस्तदानेन दृष्टोऽभूज्जिनजन्मसु । अथायं देवतादत्तलिंगः प्रव्रज्य निर्ययौ ॥ ५ ॥

अथ तस्मिन् समयेऽद्भुतप्रतिबोधेन रञ्जितः शक्रोऽवधिना विज्ञाय विप्ररूपमाधाय तमेत्येत्यवदत्—"भो मुने ! त्वदीयनगरे बहुजनानामाक्रन्दः शोकशब्दश्च जायते, तव पुरं च दह्यते । प्रव्रज्या तु दयामूला कीर्त्यते । अतः पूर्वापरविरुद्धं तव व्रतित्वं नार्हं । तस्मात्सर्वं ससौख्यं कृत्वा व्रतं चरितुमर्हसि" । पुनः प्राह—

"एष वह्निश्च वातश्च तवैव दहति गृहम्(दहत्येवालयं तव) । अन्तःपुरं च तन्नाथ त्वं किमेतदुपेक्षसे ॥१॥"

इति शक्रेण चोदितः प्रत्येकबुद्धः प्राह—

'सुखं वसामि जीवामि येन मे नास्ति किञ्चन । मिथिलानगरीदाहे न मे दहति किञ्चन ॥ १ ॥
स्वार्थाय यतते सर्वस्तं विना दुःखमश्नुते । मयापि साध्यते स्वार्थस्तस्मान्निर्ममचेतसा ॥ २ ॥"

अथ तस्य बालस्य नमिरित्याख्यानं कृतं । क्रमेण प्राप्तयौवनं तमष्टोत्तरदशशतं कन्याः तत्पित्रा परिणायिताः । अथ पद्मरथस्तं राज्ये निवेश्य स्वयं दीक्षां जग्राह ।

इतश्च यस्यां रात्रौ मणिरथेन बन्धुर्हतः, तद्रजन्यां कृष्णाहिना दष्टः स रौद्रध्यानपरश्चतुर्थनरके जगाम। तदा राज्याधिकारी युगबाहुसुतश्चन्द्रयशा अभवत् ।

अन्यदा नमिभूभर्तुः पट्टहस्ती आलानस्तंभमुन्मूल्य स्वसीम्नि समागतः, तं चन्द्रयशा जग्राह । नमिना दूतमुखेन याचितोऽपि न दत्तः । तदा युद्धाय तत्रागत्य नमिस्तस्य पुरीं रुद्ध्वा स्थितः । अथार्या तद्वृत्तान्तं ज्ञात्वा स्वयं नमिनृपं प्राह—'भो नमे ! ज्येष्ठसहोदरेण सह युद्धकरणं न युक्तं' । तच्छ्रुत्वा विस्मितो नमिरप्राक्षीत्—'कथं ममायं बन्धुः ?' । ततः सा सर्वं संबन्धं तमुवाच । तच्छ्रुत्वा स्वपितृनामांकिते च मुद्रारत्ने दृष्ट्वा निश्चित्य राज्ञो विशेषेण प्रतीतिरुदपद्यत । अथ तं युद्धान्निवर्त्य सा चन्द्रयशःपार्श्वे गत्वा सर्वं व्यतिकरमुक्त्वा परस्परं प्रीतियुक्तमकारयत् । ततश्चन्द्रयशाः स्वबन्धुं नमिं राज्येऽभिषिच्य स्वयं व्रतेप्सुर्दीक्षां कक्षयकरोत् ।

अन्यदाऽखण्डं राज्यद्वयं पालयतो नमेर्देहे षाण्मासिको महादाहज्वरोऽभूत् । अनेकायुर्वेदिभिश्चिकित्सितोऽपि तस्य दाहः शान्तिं न प्राप । अन्येद्युर्वैद्यनिर्देशतः सर्वा राज्यश्चन्दनं घर्षयन्ति । तासां वलयरवो मिथः संघर्षजो जज्ञे । ततस्तं श्रोतुमक्षमस्य पत्युरादेशात् स्त्रिय एकैकं वलयं धारयामासुः । तदा नृपः प्राह—'अधुना कंकणक्वाणः कथं न श्रूयते ?' । ताभिरेकैकं दर्शितम् । इतश्च तस्य चारित्रावारके कर्मबन्धने त्रुटितेऽयमध्यवसाय उदियाय—

सुतं प्रासूत । ततस्तं बालं रत्नकंबलेन वेष्टयित्वा स्वभर्तृनामांकितां मुद्रां तत्करे निक्षिप्य वस्त्रादिक्षालनकृते सरसि प्रविशन्ती जलहस्तिना करेणादाय गगने क्षिप्ता । तदा नन्दीश्वरं जग्मुषा खेचरेन्द्रेण सा गगने एव गृहीता । ततस्तया रुदन्त्या सुतप्रसवज्ञातं चोर्वटमुक्तं प्रोक्तं ( कश्च स प्रोक्तः ) तदाकर्ण्य विद्याधरेण विद्याबलेन तत्स्वरूपं कथितम् "भद्रे ! भवत्तनूरुहो वक्रशिक्षिताश्वापहृतेन मिथिलेशेन पद्मरथेन गृहीत्वा स्वपत्न्यै पुत्रत्वेन दत्तोऽस्ति । त्वं विषादं मुक्त्वा मां पतित्वेन भजस्व" । इति निशम्य सा प्राह—'भोः पूज्य ! पूर्वं नन्दीश्वरे मम यात्रां कारय । ततोऽहं कामपूरणे यतिष्ये' । ततस्तेन नन्दीश्वरे नीता । तत्र द्विपञ्चाशतं तीर्थंकरान्नत्वा तत्रागतं मणिचूडाभिधं सार्वभौमराजर्षिं प्रणम्य यावत् स्थिता, तावदवधिना प्राग्भवस्वरूपं ज्ञात्वा ब्रह्मकल्पाद्युगबाहुदेवेनागत्य प्राक् तस्याः पादांबुजं प्रणम्य ततः साधुं नत्वोपाविश्यत। तद्दृष्ट्वा मणिप्रभस्तं सुरं किमयुक्तमिदं कृतमित्युपालंभयत् । तदा चारणश्रमणमुनिः सुरस्य पूर्वभवस्वरूपमुक्त्वा तमभाषत—

"धर्माचार्यमनुस्मृत्य तूर्णमत्रेयिवानयम् । युक्तं मुनीन् विहायादौ ननामैनां महासतीम् ॥ १ ॥

यतः—

यतिना श्रावकेणाथ योऽर्हद्धर्मे स्थिरीकृतः । स एव तस्य जायेत धर्माचार्यो न संशयः ॥ २ ॥"

इति श्रुत्वा खेचरस्तं सुरं क्षमयामास । ततः सुरेण सा मिथिलायां मुक्ता । तत्र पुत्रं सुखान्वितं ज्ञात्वा स्वस्थचित्ता प्रवर्तिनीपार्श्वे दीक्षां जग्राह ।

---

१ उन्मार्गे मुक्तं ।

दृष्ट्वा यद्रूपसंपत्तिं स्वात्मन्येव स्मरोऽज्वलत् । वृथा पुनः प्रवादोऽयं लोके दग्धो हरेण यत् ॥ १ ॥

ततो मणिरथस्तदावर्जनकृतेऽजस्रं पुष्पतांबूलवसनादिकं प्राहिणोत् । सापि ज्येष्ठप्रसादोऽयमिति मत्वा जग्राह । एकदा भूपवाक्येन दूत्या तां प्रति नृपेप्सितं प्रोक्तं । तच्छ्रुत्वा तामभाषत—

"जगत्प्रसिद्धो नारीषु शीलमेव महागुणः । तस्मिंल्लुप्ते वृथा सर्वं गते जीव इवांगिनः ॥ १ ॥"

अतोऽनर्हं मां प्रति वाक्यकथनं न युक्तं भूपतीनाम्" । ततस्तया तथैव नृपाय निवेदितम् । तथापि रागलोलुपः स दध्यौ—'बन्धोर्मारणं कृत्वा गृह्णाम्येनां, नान्यथा' । अथ वसन्तक्रीडार्थं स्वस्त्रिया सह युगबाहुरुद्यानं गतः । तत्र सविस्तरां क्रीडां विधाय सप्रियः तत्रैव रंभागृहे निशि सुष्वाप। अथ राजावसरं ज्ञात्वा छन्नं सनिस्त्रिंशः कदलीगृहे प्राविशत्।

विहाय कुलमर्यादायशोधर्मत्रपादिकम् । खड्गेन बन्धुराजघ्ने ग्रीवायां हा स्मरोदये ॥ १ ॥

ततो नृपः स्वगृहं गतः । अथ सा स्वामिनोऽवसानसमयं ज्ञात्वा विलप्य सगद्गदं प्राह—

"त्वं वृथा मा कृथाः खेदं महाभाग मनागपि । सर्वत्र प्राकृतं कर्म प्राणिनामपराध्यति ॥ १ ॥
तस्मान्मनः समाधेहि विधेहि शरणं जिनम् । ममत्वं मुञ्च मैत्रीं च कुरु सर्वेषु जन्तुषु ॥ २ ॥"

इत्यादिवचसा शान्तकोपः पञ्चनमस्कृतिं स्मरन् पञ्चमकल्पसौख्यं प्राप । अथ सा निजज्येष्ठकर्तव्यं विज्ञाय स्वशीलरक्षार्थं पुत्रादिकं विमुच्य सगर्भा निस्स्वेव पलायिता महारण्येऽपतत् । तत्र शार्दूलसिंहादिशब्दात्त्रस्ता महासती तरुतले

तथा धर्मवतां देहोऽर्थतुल्यः । आत्मा पुनर्देहतुल्यः । एवं सति देहपीडोपेक्षणेनात्मा रक्षणीयः" । एवं तस्य निजप्रतिज्ञानिश्चलत्वमवगम्य देवयोर्महान् हर्षः संजातः । अहो सात्त्विकमूर्धन्यः सत्यः प्रशस्यश्चेत्युक्त्वा देवाभ्यां निजरूपं प्रकटीचक्रे । ततः शक्रप्रशंसास्वरूपमुक्त्वा तस्य सर्वरोगहरणं रत्नैर्गृहभरणं च कृतं । ततश्च सर्वत्रारोग्यद्विज इति रूढः । एवं गुरुनिग्रहाकारकोऽपि धर्मे स्थैर्यं नामुचत् । एवं स्वनियमान् प्रपाल्य स्वर्गसौख्यं प्राप ।

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ चतुर्थस्तंभे एकपञ्चाशत्तमं व्याख्यानम् ॥ ५१ ॥



## ॥ अथ द्विपञ्चाशत्तमं व्याख्यानम् ॥ ५२ ॥

अथ देवाभियोगेनेति व्याख्यायते—

**कुलदेवादिवाक्येन यन्मिथ्यात्वं विधीयते । स सम्यक्त्वरतानां च भवेत्सुराभियोगकः ॥ १ ॥**

केचिच्चुलनीपित्रादिवद्गृहीते धर्मे देवाद्युपसर्गेण चपलतां प्राप्नुवन्त्यपि न तेषां महान् दोषः । मिथ्यादुष्कृतादिना झटिति निवर्तते । केचिदुत्सर्गपक्षस्था नमिराजर्षिवन्न चलन्त्येव । अत्रार्थे ज्ञातमिदम्—

अवन्तिदेशे सुदर्शनपुरे मणिरथो राजा । तस्यानुजो युवराजो युगबाहुनामाऽभवत् । तस्य प्रियां मदनरेखामन्यदा क्वापि विलोक्य कामासक्तो भूपो जातः ।

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ १ ॥"

इति विचार्य रोगद्विजो भणति—"भो वैद्यौ ! नाहमपरैरप्यौपधैश्चिकित्सामिच्छामि, किं पुनरमीभिः ? सर्वधर्मवतामसेव्यैश्च । तथा—

मद्ये मांसे मधुनि च, नवनीते तक्रतो ( कृते ) बहिः । उत्पद्यन्ते विलीयन्ते, सूक्ष्माश्च जन्तुराशयः ॥ १ ॥
सप्तग्रामे च यत्पापमग्निना भस्मसात्कृते । तदेव जायते पापं मधुबिन्दुप्रभक्षणात् ॥ २ ॥
यो ददाति मधु श्राद्धे मोहितो धर्मलिप्सया । स याति नरकं घोरं खादकैः सह लंपटैः ॥ ३ ॥"

एवं तेनोक्ते वैद्याभ्यां तत्स्वजनेभ्यो ज्ञापितं । स्वजनादिसमवायश्च लग्नः शास्त्रकथाभिस्तं चिकित्सायां प्रवर्तयितुं । यथा—

"शरीरं धर्मसंयुक्तं रक्षणीयं प्रयत्नतः । शरीरात्स्रवते धर्मः पर्वतात्सलिलं यथा ॥ १ ॥"

एवं पित्रादिभिः प्रज्ञाप्यमानस्यापि तस्य दृढधर्मतया देहादिप्रत्याशापरिहारेण निर्वाणसुखाभिलाष एवासीत् । ततस्तेन देहार्थपीडाज्ञातमकथि—

आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि । आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १ ॥

"आयुर्गलत्याशु न पापबुद्धिर्गतं वयो नो विषयाभिलाषः ।
यत्नश्च भैषज्यविधौ न धर्मे, स्वामिन्महामोहविडंबना मे ॥ १ ॥
अनित्यानि शरीराणि, विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः, कर्तव्यो धर्मसंग्रहः ॥ २ ॥"

तद्वाक्या प्रबुद्धो द्वादश व्रतानि जग्राह । अणुव्रतादिशुद्धपालनपरत्वेन सुश्रावकत्वेन च संपद्यमानचिकित्सासामग्रीकेणापि रोगादिसहनमेवाश्रित्योचे—

पुनरपि सहनीयो दुःखपाकस्त्वयायं, न खलु भवति नाशः कर्मणां संचितानां ।
इति सह गणयित्वा यद्यदायाति सम्यक्, सदसदिति विवेकोऽन्यत्र भूयः कुतस्ते ॥ १ ॥

एवं निश्चलमनसस्तस्येन्द्रः प्रशंसां चकार—"अहो महासत्त्वो रोगद्विजः, य एवं गुरुवर्गेणोपस्थाप्यमानानेकचिकित्सोपायोऽपि तदनपेक्षया रोगव्यथां सहते" । ततश्चाश्रद्दधानौ द्वौ देवौ वैद्यौ भूत्वागत्य भणतः स्म । यथा—"भो रोगार्तभूदेव ! त्वां रोगविमुक्तं कुर्वः । परं रजन्यां मद्यमांसभक्षणानां परिभोगः कार्यः" । एतद्वैद्योक्तं श्रुत्वा दध्यौ—"द्विजकुलोत्पन्नस्य मम विशेषतः संप्रति प्रतिपन्नजिनधर्मस्य चैतद्गर्हितकर्मत्यजनमेव श्रेष्ठं, लोकलोकोत्तरनिन्द्यत्वात् । यतः—

ख्यमहिषानमारयत् । एवं जीवहिंसां विधाय पापकर्माण्यर्जयित्वा निबद्धसप्तमनरकायुः प्रान्ते रुजाक्रान्तोऽभूत् । तदा तत्सुतेन सुलसेन पितुः सुखकृते मनोज्ञाशनपानगीतगानसुकुमारकुसुमशय्याचन्दनविलेपनादिका बहूपचाराः कृताः । तथापि तस्य न मनागपि सुखं जातं । ततस्तेनागत्याभयकुमाराय सर्वमुक्तं । ततो मंत्रिणा भणितम्—"अयं नरकगामी । तस्यानुपूर्वी सम्मुखमागता । अतः सुखहेतवो दुःखाय भवन्ति । ततो नीरसाहारदानक्षारपयःपानखरश्वशब्दश्रावणतीक्ष्णकंटकशय्याऽशुचिविलेपनाद्युपचारं कुरु, यथा सुखं स्यात्" । एवं तेन कृते तस्य सातं जातं । ततो मृत्वा सप्तमं नरकं गतः । तत्सुतः प्रत्यक्षपापफलं दृष्ट्वा मंत्रिवचसा च श्रीवीरस्य श्रावको जातः ।

अथैकदा मातास्वस्रादिस्वजनवृन्दैः संभूय प्रोक्तं—'त्वं पितृवत् पापं कुरु । पापसमूहं धनवद्विभज्य लास्यामः' । इति प्रेरितेन सुलसेन कुठारप्रहारेण स्वांघ्रिरेव मनाक् छिन्नः । पृथिव्यां पपात । ततोऽवोचत् । 'यूयं मम दुःखं संप्रति विभज्य गृह्णीत, यथा पापं' इति वाक्येन मौनं कारितास्ते । जीववधस्तु न कृतः । यतः—

**अवि इच्छिज्जइ मरणं, न य परपीडं करंति मणसा वि । जे सुविइयसुगईपहा, सोयरियसुउ जहा सुलसो**

क्रमाल्लब्धत्वं प्रपाद्य देवो जातः

अत्रार्थे आरोग्यद्विजस्य ज्ञातमिदम्—

उज्जयिन्यामाबाल्यमेव रोगबहुलतया रोगद्विज इत्याख्यया प्रसिद्धो द्विजोऽभूत् । लोकात्तन्नाम श्रुत्वा प्रत्यहं खेदमुद्वहन् अन्यदा देशनां कुर्वतो मुनेर्धर्मवाक्यमिदं शुश्राव—

स्वर्णवृष्टिं कृत्वा स्वस्थानं गतः। मुनियुगलमपि तस्या उपबृंहणां कृत्वा तच्चैलेन साधुं पटूचक्रे। सापि गर्वोज्झिता श्राद्ध-धर्मं प्रपाल्यान्ते समाधिना मृत्वा देवसुखानि भुक्त्वा मोक्षं यास्यति।

**अर्चंकार्याः संबन्धोयं श्रुत्वा सम्यक्त्वबुद्धिना। दुःखेऽपि न त्यजेद्धर्मं सोऽचिरेण श्रियं भजेत् ॥ १ ॥**

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ चतुर्थस्तंभे पञ्चाशत्तमं व्याख्यानम् ॥ ५० ॥

---

## ॥ अथैकपञ्चाशत्तमं व्याख्यानम् ॥ ५१ ॥

अथ गुरुनिग्रहाख्य आकारः कथ्यते—

**पितृमातृकलाचार्या मिथ्यात्वभक्तचेतसः। कारयन्ति यदकृत्यं, तद्गुरुनिग्रहो भवेत् ॥ १ ॥**

गुरुनिग्रहनियमभङ्गादिना तदादिष्टकरणं। यतः—

**माता पिता कलाचार्या एतेषां ज्ञातयस्तथा। वृद्धा धर्मोपदेष्टारो गुरुवर्गः सतां मतः ॥ १ ॥**

एतेषां मध्ये ये कुदृष्टिभक्तास्तद्वाक्येन निषिद्धं सेव्यते, तेन व्रतभंगो न स्यात्। केचिदपवादपक्षं विहायोत्सर्गपक्ष-मेव स्वीकुर्वन्ति। अत्रार्थे सुलसस्य ज्ञातमिदम्—

राजगृहे पुरेऽतीवनिर्दयोऽभव्यः प्रत्यहं पञ्चशतमहिषवधकर्ता कालसौकरिकाख्यः। अन्यदा यो हि स्वनरकगमन-निवारणतया श्रेणिकेन कूपे निक्षिप्तोऽपि मृन्मयमहिषपञ्चशतीं जघान। अथ नियंत्र्य कूपे क्षिप्तश्च मनसाऽनेकशतसं-

मपि शीले यत्नं कुरु" । एतद्वार्तां श्रुत्वा शीलवत्याः शापत्रयेन विरक्तो भिल्लः कस्यचिन्नरस्यान्तिके तां व्यक्रीणात् । तेन बब्बरकुले कारुकगृहे विक्रीता । तेनापि भोगार्थं प्रार्थिता । तया तस्योक्तं न कृतं । स पुनराह—'त्वमन्नवसनादिसुखमिच्छसि चेत्तदा मदुक्तं प्रमाणीकुरु' । सा तृतीयाकारज्ञापि निश्चयं नामुचत् । ततः क्रुद्धः स स्त्रीशरीरतो रुधिरमाकृष्यैकत्र भांडे न्यधात् । तत्रोत्पन्नकृमिकाणां रुधिरैर्वस्त्राणि रञ्जयति । रक्तस्रावेणेयं पांडुरोगा जाता । शीलं न भग्नम् ।

इतश्च तन्नगरे वाणिज्यार्थं समागतेन तस्या ज्येष्ठसहोदरेण तत्र भ्राम्यता सा भगिनी दृष्टा । स धनपालस्तस्मै धनं दत्वाऽमोचयत् । स्वसारं गृहीत्वा स निजपुरं ययौ । अथ भर्ता तां प्रत्यानीय सर्वस्वस्वामिनीं व्यधात् । ततस्तया 'मरणाऽन्तेऽप्यहं कोपं न करोमीति' प्रतिज्ञा कृता । अथ तन्नगरवने कायोत्सर्गस्थितमुनिपतिदेहः केनचिद्वह्निना दग्धः । तस्य चिकित्सार्थं कुंचिकश्रेष्ठिनाऽन्यन्मुनियुगलं लक्षपाकतैलार्थमच्चंकारीगृहे प्रेषितं । तेन तैलं याचितं । सा दास्यै 'तैलघटमानय' इत्यादेशं ददौ । अत्रान्तरे इन्द्रेण सेति प्रशंसिता—'संप्रति भुवनेऽच्चंकारीभट्टासदृशः कोऽपि क्षमावान्नास्ति' । तदिन्द्रवाक्यमश्रद्दधानो नास्तिको देवस्तस्या गृहे समागतः । स दास्याः करादेकं कुंभं देवशक्त्याऽपातयत् । ततो द्वितीयः कुंभ आनायितः । सोऽपि पातितः । एवं तृतीयेऽपि भग्ने सा तुर्यं स्वयमानयत् । स तु शीलमाहात्म्यतो न भग्नः । तया तैलं दत्तं । ततो मुनिनोक्तं—"भो भद्रे ! अस्माकं कृते तव घटानां भंगतो गुरुर्व्ययो जज्ञे । दास्यां त्वया कोपो न कार्यः ।" किञ्चिद्विहस्य सोचे—'भगवन्मया क्रोधमानयोः फलं प्रागनुभूतं' । किं तदिति तेन पृष्टे सा निजस्वरूपं तस्मै न्यवेदयत् । तन्निशम्य स सुरः प्रत्यक्षीभूय तामिन्द्रस्य वृत्तान्तं जगौ । पूर्वभग्नांस्तैलघटान् सज्जीकृत्य तां प्रशस्य

तस्याहं दास्ये, नान्यस्य'। तेनापि स्वीकृतं। ततः शुभे लग्ने विवाहो जातः। तया सह वैषयिकसौख्येन कतिपयदिनान्युदलंघयत्। ततस्तया भर्तुरग्रे प्रोक्तं—"प्राणेश! अस्तमिते रवौ अधिकारिणा त्वया क्वापि न गन्तव्यं मत्प्रीत्या प्रयोजनं चेत्"। तेन तद्वाक्यं प्रतिपन्नं। अन्यदा राज्ञा पृष्टं—'भो मंत्रिन्! त्वं प्रत्यहं किं सकाले गृहे यासि?'। तेन यथास्थिते प्रोक्ते राज्ञा किञ्चिन्मिषं कृत्वा विनोदाय यामयुग्मं संस्थाप्य ततो विसृष्टः स गृहे ययौ। तया द्वारं नियंत्रितं दृष्ट्वा प्राह—"प्रिये! द्वारमपावृणु। नृपाज्ञया स्थितो न स्वेच्छया। परवशे मयि न कोपः कार्यः"। इति पुनः पुनरुच्यमानं तत् श्रुत्वा कोपेन द्वारमपावृत्य दृशौ प्रतार्य गृहान्निर्गता पितुर्गृहं यान्ती चौरेण गृहीता। वस्त्राभरणानि संगृह्य तां पल्लीस्वामिने दत्ता। पल्लीशेन भोगार्थं भृशं कदर्थिता सा प्राह—"प्राणत्यागेऽपि नाहं शीलं खंडयामि, त्वं मुधा प्रयत्नं करोषि यथोषरे वर्षणं"। तथापि स न बुद्धः। ततः सा तद्बोधार्थं वृत्तान्तमकथयत्—

एकस्तेजोलेश्यायुक्तस्तापसस्तरुतले स्थितः। तस्य शिरसि बलाकिकया पुरीषप्रक्षेपः कृतः। तेन कोपतस्तेजोलेश्यया सा दग्धा। ततस्तेन "यः कोऽपि ममावज्ञां करिष्यति, तमहमनया विद्यया ज्वालयिष्यामि" इति चिन्तितम्। ततो भिक्षार्थं कस्यचिच्छ्रावकस्य गृहे गतः। तस्य शीलवती स्त्री। सा निजपतिकार्यव्यापृता भिक्षां गृहीत्वा विलंबेनागता। स तदुपरि कुपितस्तेजोलेश्यां मुमोच। परं शीलमाहात्म्यतः सा न दग्धा। तयैवं भणितं—'भोस्त्रिदंडिन्! नाहं सा बलाकिका'। तेनोक्तं—'अरण्यजातं त्वं कथं जानासि?'। साकथयत्—'एतद्व्यतिकरं तव वाणारसीकुंभकारः कथयिष्यति'। स तत्र गत्वा तं पृष्टवान्। कुंभकारः प्राह—"अस्या मम च शीलमाहात्म्यतो ज्ञानमुत्पन्नं तेन ज्ञायते, अतस्त्व-

सर्वान्नियोगादपि भूमिपेन, वाक्यं च हिंसात्मकमाहितं न ।
वैराग्यचारित्रमवाप्य भूपः, साद्यन्तहीनं शिवसौख्यमाप ॥ १ ॥

॥ इत्युपदेशप्रासादे चतुर्थस्तंभे एकोनपञ्चाशत्तमं व्याख्यानम् ॥ ४९ ॥

॥ अथ पञ्चाशत्तमं व्याख्यानम् ॥ ५० ॥

अथ वृत्तिकान्ताराख्योऽभिधीयते—

दुर्भिक्षारण्यसंपर्के जीवनार्थं विधीयते । मिथ्यात्वं स च कान्तारवृत्तिनामा निगद्यते ॥ १ ॥

दुर्भिक्षेऽन्नाद्यभावे । अरण्यं जलफलादिविकलप्रदेशस्तस्य संपर्के संयोगे । केनचिदुत्सर्गापवादज्ञेन संविग्नेनापि जीवितरक्षायै मिथ्यात्वं नियमभंगादिकं क्रियते स तृतीय आकारः कथ्यते । केचिदुत्सर्गपक्षस्थाः स्वधर्मं कष्टेप्यचंकारीवन्न मुञ्चन्त्येव । स चायं प्रबन्धः—

क्षितिप्रतिष्ठपुरे धनश्रेष्ठी । तस्य भद्राख्या गेहिनी अभवत् । तयोः सुता अष्टौ, तदुपरि भट्टिकानामा दुहितैका वल्लभा । एकदा श्रेष्ठिना स्वजनसमक्षमुक्तं—'मदीयेयं सुता केनापि न चुंकारयितव्या' । तेनाचंकारी भट्टेतिनाम्ना प्रसिद्धा जाता । अन्यदा तत्कमनीययौवनं राज्ञो मंत्रिणा वीक्ष्य तज्जनकपार्श्वे मार्गिता । श्रेष्ठिनाऽभाणि—'योऽस्या वाक्यं नोल्लंघयति

ततो वृद्धेनोक्तं—"भोः पुत्रा यूयं निरुच्छ्वासा मृतवत्तिष्ठत। अन्यथा पारधिर्गल (व्याधो गल) मोटनं करिष्यति"। तैस्तथा कृतम्। प्रातरितेन तेन पक्षिसमूहो मृत इति ज्ञात्वा विश्वस्तेन सर्वेऽपि अधो भागे मुक्ताः। तदनन्तरं सर्वेऽपि वृद्धवाक्येन पलायनं चक्रुः, चिरंजीविनश्च बभूवुः। पश्चाद्वृद्धेनाभाणि—

"दीहं कालं वयं तत्थ पायवे निरुवद्दवे। मूलाउ उट्ठिया वल्लि जायं सरणतो भयं॥ १॥"

इत्युक्त्वा पुनरपि इन्द्रदत्तेनोक्तम्—"भो राजन्! पित्रा संतापितः शिशुर्मातृशरणं गच्छति, मात्रोद्वेजितः पितुः शरणं च। ताभ्यामुद्वेजितः शिशू राज्ञः शरणं च। राज्ञापि सन्तापितो महाजनशरणं गच्छति बालः। यत्र तु माता विषं ददाति, पिता गलं मोटयति, राजा प्रेरयति, महाजनो मूल्यं कृत्वा गृह्णाति, तदा कस्य शरणं विधीयते?। यतः—

मात्रा पित्रा सुतो दत्तो राजा च शत्रुघातकः[1] (समुपेक्षकः)।
देवता बलिमिच्छन्ति लोकः कथं करिष्यति॥ १॥

अत एव राजन् मम यमातिथिभवनमेव युक्तं"। तद्वचनं श्रुत्वा राज्ञोक्तं—"हे माणवक! यः कोऽपि त्वां हन्ति स मम शत्रुरेव। त्वं सुखेन तिष्ठ। मम नगरादिना प्रयोजनं नास्त्येव"। इत्युक्त्वा स्वसेवकपार्श्वे सर्वत्र पुरेऽमार्युद्घोषणमकारयत्। एवं तस्य धैर्येण संतुष्टो देवो नृपं प्रणिपत्य नगरगोपुरं निर्माप्य प्रश्लाघ्य च स्वस्थाने गतः।

---

१ शत्रुरिव घातकः.

प्रायः संप्रति कोपाय सन्मार्गस्योपदर्शनम्। निर्लूननासिकस्येव विशुद्धादर्शदर्शनात् ॥ १ ॥

अन्यच्च—

उपदेशो न दातव्यो यादृशे तादृशे नरे । पश्य वानरमूर्खेण सुगृही निर्गृहीकृता ॥ २ ॥

यथैकत्र तरौ सुगृहीत्याख्या एका चटका सुग्रथितरम्यमालके सुखेन स्थितास्ति। इतो घने वर्षति इतस्ततो भ्रमन् शीतलसमीरकंपमानतनुः स्वदन्तान् वादयन् कोऽपि कपिस्तत्र समेतः। तं तादृशं दृष्ट्वा तयोक्तं—'भो वानर! वर्षाकाले इतस्ततः कथं भ्रमसि? किं गृहं न करोषि?'। इति श्रुत्वा तेनैवमुक्तं—

"सूचीमुखे दुराचारे रेरे पण्डितमानिनि। असमर्थो गृहारंभे समर्थो गृहभञ्जने ॥ १ ॥"

इत्युक्त्वोच्छ्रत्य तन्मालकस्तेनैकैकतृणीकृत्य विदिक्षु क्षिप्तः। साऽन्यत्र गत्वा सुखेन तस्थौ।

इति विचार्य वृद्धहंसो मौनेन स्थितः। कालान्तरेण वल्ली वृक्षं परितः प्रसृता। एकदा वृक्षाग्रं यावद्वर्धिता। तामारुह्य व्याधो वृक्षस्योपरि चटितः। तत्र तेन पाशराशयो मण्डिताः। रात्रौ हंसकोशाः शयनार्थं वृक्षमायाताः। ते सर्वेऽपि पाशैर्बद्धा बुंबारवं चक्रुः। तदा वृद्धेनोक्तं—'पूर्वं मदुक्तं न कृतं, तेनेदं मरणमायातं'। तैर्निगदितम्—"हे तात! वल्ल्यंकुरः शरणाय रक्षितः, स विपर्ययत्वेन परिणतः। अथ जीवनोपायं चिन्तय। यदुक्तं—

चित्तायत्तं धातुबद्धं शरीरं, नष्टे चित्ते धातवो यान्ति नाशम्।
तस्माच्चित्तं यत्नतो रक्षणीयं, स्वस्थे चित्ते बुद्धयः संभवन्ति ॥ १ ॥

वरदत्ताख्यो द्विजोऽस्ति । तद्भार्या रुद्रदत्ता, सा निष्करुणा । तयोः सप्त पुत्राः सन्ति । पटहं श्रुत्वा तेन स्वभार्या पृष्टा—'हे प्रिये ! लघुपुत्रं दत्वा द्रव्यमिदं गृह्यते । धनस्य माहात्म्यं लोकोत्तरं । यतः—

**पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते । वन्द्यते यदवन्द्योऽपि तत्प्रभावो धनस्य हि ॥ १ ॥"**

तयापि निर्दयतया स्वीकृतं । ततो द्विजेन पटहं धृत्वा कथितं—'ममेदं द्रव्यं दत्वाऽयं पुत्रो गृह्यताम्' । प्रजाभिर्निरूपितं—"यदि त्वया त्वद्भार्यया च गलमोटनं विषं च दीयते, तदा युवाभ्यां तद्गृह्महे, नान्यथा" । तेन सर्वं मानितं । तत्पित्रोर्वाक्यं श्रुत्वा तत्पुत्रेणेन्द्रदत्तेन चिन्तितम्—'अहो ! स्वार्थिक एव संसारः । निजपुत्रस्यापि पञ्चत्वे रोपयति' । ततो महाजनस्य सोऽर्पितः । पश्चान्महाजनेन पुष्पादिभिरभ्यर्च्य नृपान्तिकं नीतः । राज्ञापि प्रतोलीसन्मुखमागच्छन्तं हसन्तं तं दृष्ट्वा भणितम्—'रे माणवक ! किमर्थं हससि ? मरणात् किं न बिभेषि ?' तेनोक्तं—"स्वामिन् !

**तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् । आगतं तु भयं दृष्ट्वा सोढव्यं तदशंकितैः ॥ १ ॥"**

पुनश्च प्राह—"हे राजन् ! येषां शरणं विधीयते, तेभ्यो भयं जातं, वल्ल्यंकुरेण हंसानां यथा । ज्ञातं चेदम्—

एकस्मिन् वने मानससरः । तत्पाल्युपरि सरलोन्नतवृक्षोऽस्ति । तस्योपरि वहवो मरालास्तिष्ठन्ति । एकदा वृद्धहंसेन तद्वृक्षमूले वल्ल्यंकुरं दृष्ट्वोचे—"हे पुत्रपौत्राः ! एनं वल्ल्यंकुरं चञ्चूप्रहारैस्त्रोटयत । येन सर्वेषां मरणं न स्यात्" । तच्छ्रुत्वा तरुणहंसैर्हसितं—"अहो ! अयं मरणाद्बिभेति, सर्वकालं जीवितुमिच्छति । कस्माद्भयमिह ?" । वृद्धेन चिन्तितम्—"अहो ! एते मूर्खाः स्वहिताहितं न जानन्ति । यतः—

नान्यपूजाबलिनैवेद्यादिन्निः" । इति चार्वाकपक्षीयवाक्यं श्रुत्वा राजाब्रवीत्—"ममानेन पुरेण किं प्रयोजनं ? यत्र पुरे जीववधो विधीयते । तेन कनकान्नरणेन किं क्रियते ? येन कर्णस्त्रुट्यते । अपरं च—

न कर्तव्या स्वयं हिंसा प्रवृत्तां च निवारयेत् । जीवितं बलमारोग्यं शश्वद्वाञ्छन्महीपतिः ॥ १ ॥"

ततो राजानं निश्चलं ज्ञात्वा मंत्रिणा समस्तनागरानाकार्योक्तम्—"न्नो लोकाः ! श्रूयताम् । यदा मनुष्यवधो राज्ञा क्रियते तदा गोपुरं स्थिरीस्यात्, नान्यथा । मां प्रति राज्ञेत्थमुक्तं—अहं जीववधं न करिष्ये न कारयिष्ये न चानुमोदयिष्ये इत्यवगत्य यूयं यद्विचारे समेति तत्कुरुत" । ततो महाजनैरागत्य राज्ञोऽग्रे न्नणितम्—'स्वामिन् ! अस्मान्निः सर्वमपि क्रियते, न्नवन्तस्तूष्णीं तिष्ठन्तु' । राज्ञोक्तं—"यदा प्रजाः पापं कुर्वन्ति तदा ममापि षष्ठांशं पापं पुण्यं चायाति । यदुक्तम्—

यथैव पुण्यादिसुकर्मन्नाजां, षष्ठांशन्नागी नृपतिः सुवृत्तः ।
तथैव पापादिकुकर्मन्नाजां, षष्ठांशन्नागी नृपतिः कुवृत्तः ॥ १ ॥"

पुनरपि महाजनेनोक्तं—'पापन्नागोऽस्माकं' । राज्ञा तन्महाकष्टेन प्रतिपन्नं । ततो महाजनेन स्वस्वगृहाद्द्रव्यमेकीकृत्य तस्य काञ्चनमयः पुरुषो निर्मापितः । पश्चात्तं नरं शकट आरोप्य नगरमध्ये घोषितम्—"यदि स्वपुत्रस्य माता स्वहस्तेन विषं प्रयच्छति, पिता तस्य गलमोटनं करोति, तर्हि तयोः काञ्चनमयनरः कोटिद्रव्यं च दीयते" । तन्नगरे महादरिद्रो

## ॥ अथैकोनपञ्चाशत्तमं व्याख्यानम् ॥ ४९ ॥

अथ गणाभियोगो व्याख्यायते—

समुदायो जनानां हि स एवोक्तो जिनैर्गणः । क्रियते तस्य वाक्येन निषिद्धमपि सेवनम् ॥ १ ॥
गणाभियोग आकारो द्वितीयोऽयं निगद्यते । केचिदुत्सर्गपक्षस्था नैव मुञ्चन्त्यभिग्रहम् ॥ २ ॥

सुगमौ । अत्रार्थेऽयं प्रबन्धः—

पञ्चालदेशे सुधर्मो राजाऽभवत् जैनधार्मिकः । एकदा तस्याग्रे चरेणोक्तं—'देव ! महाबलनामा चरटः[1] प्रजा अतीव पीडयति' । तच्छ्रुत्वा राजाह—'तत्र गत्वाहं निग्रहीष्यामि । यतः—

तावद्गर्जन्ति मातंगा वने मदभरालसाः । शिरोविलग्नलांगूलो यावन्नायाति केसरी ॥ १ ॥"

इत्युक्त्वा सैन्यभरभारेण नम्रीकृतभूतलस्तं चरटं समागतवान् । तत एकहेलयैव तं जित्वा निजनगर आगतः । प्रवेशसमये मुख्यप्रतोली पतिता । तदपशकुनमिति ज्ञात्वा व्याघुट्य नगरबाह्ये स्थितो नृपः । मंत्रिभिस्तथैव झटिति प्रतोली कारिता । एवं द्वितीयतृतीयदिनयोरपि पतन्तीं वीक्ष्य राज्ञा नियोगी पृष्टः—'भो मंत्रिन् ! किं प्रतोलीयं पुनः पुनः पतति ?' । मंत्रिणोक्तं—"राजन् ! यदि स्वहस्तेनैकं पुरुषं हत्वा तद्रसेन सिच्यते तदा गोपुराध्यक्षो यक्षः संतुष्टः स्यात्,

[1] चौरः.

दर्शिताऽऽत्मकला । तथा वाक्चातुर्यं सर्वं स्वबलं च दर्शितं । ततस्तया विषयविरक्तया प्रोक्तं—

"वरं ज्वलदयःस्तंभपरिरंभो विधीयते । न पुनर्नरकद्वाररामाजघनसेवनम् ॥ १ ॥"

तथा तद्गर्वखर्वकरणाय सर्षपपुंजनिक्षिप्तसूच्यग्रस्थपुष्पोपरि नृत्यन्ती प्राह—

"न दुक्करं अंबयलुंबितोडणं, न दुक्करं सरिसवनच्चियाए ।
तं दुक्करं तं च महाणुभावं, जं सो मुणि पमयवणंमि वुच्छो ॥ १ ॥
गिरौ गुहायां विजने वनान्तरे, वासं श्रयन्तो वशिनः सहस्रशः ।
हर्म्येऽतिरम्ये युवतीजनान्तिके, वशी स एकः शकटालनन्दनः ॥ २ ॥"

इत्यादिना तदग्रे श्रीस्थूलभद्रप्रशंसां कृत्वा स रथकारः प्रतिबोधितो विषयविमुखः प्रव्रजितः, क्रमात्स्वर्गं गतः । सापि चिरं जैनशासनं प्रभावयन्ती स्वर्गधाम ययौ ।

धर्मं न मुञ्चन्ति नृपाज्ञयापि, कोशेव केचिन्निजधर्मरक्ताः ।
ये बोधयन्त्यन्यजनान् स्वबुद्ध्या, सन्त्येव मुक्तेः पथि पंथिनस्ते ॥ १ ॥

॥ इत्युपदेशप्रासादे चतुर्थस्तंभेऽष्टचत्वारिंशत्तमं व्याख्यानम् ॥ ४८ ॥

तत्रागतः । एकं श्रेष्ठिनं विना सर्वोऽपि जनस्तद्भक्तो जातः । तच्च ज्ञात्वा कार्तिकस्योपरि गैरिको रुष्टः । एकदा राज्ञा निमंत्रितोऽवदत्—'यदि कार्तिकः परिवेषयति तदा तव गृहे पारणां करोमि' । राज्ञा तथेति प्रतिपद्येभ्यायोक्तं—'त्वं मद्गृहे गैरिकं भोजय' । ततः श्रेष्ठिनोक्तं—'राजन् ! भवदाज्ञया भोजयिष्यामि' रायाभियोगेण मित्याकारेण स्वव्रतमखंडं मत्वा । ततः श्रेष्ठिना भोज्यमानो गैरिको 'धृष्टोऽसि' इत्यंगुलिना नासिकाचेष्टां चकार । श्रेष्ठी दध्यौ—'यदि मया पूर्वं दीक्षा गृहीताऽभविष्यत्तदायं न पराभविष्यत' । इति विचिन्त्याष्टाधिकसहस्रेण वणिक्पुत्रैः सह चारित्रं गृहीत्वा द्वादशांगीमधीत्य द्वादशाब्दपर्यायः सौधर्मेन्द्रोऽभूत् । सोऽपि निजधर्मतस्तद्वाहन ऐरावणोऽभवत् । ततः कार्तिकोऽयमिति ज्ञात्वा पलायमानं तं धृत्वा शक्रः शीर्षमारूढः । स च शक्रभापनार्थं रूपद्वयं कृतवान् । इन्द्रोऽपि तथाभूत् । एवं रूपचतुष्टयं तौ कृतवन्तौ । ततश्चावधिना ज्ञातस्वरूप इन्द्रस्तं तर्जितवान् । तर्जितश्च स्वाभाविकं रूपं चक्रे । इन्द्रस्ततश्च्युत्वा महाविदेहे सेत्स्यति । विशेषेणास्य व्याख्या पञ्चमांगतो ज्ञेया । इति ।

अथ केचिन्नृपाज्ञायां जातायामपि स्वव्रतं न मुञ्चन्ति । अत्रार्थे कोशाया वृत्तं । यथा—

पाटलीपुरे निरुपमरूपलावण्यकलाकौशलादिगुणमणिकोशानुकारा कोशा वेश्या बभूव । तत्प्रतिबोधाय गुर्वादेशात् स्थूलभद्रमुनिस्तद्गृहे चतुर्मासीमकरोत् कृताननेकहावभावविभ्रमविलासानवगणय्य मुनिना सा प्रबोधिता नृपचरमुक्तपुरुषमन्तरेणान्यनरनियमं ग्राहिता च । इत एकदा तद्व्रतखंडनार्थं नन्दनृपमुक्तो रूपेण कामानुरूपः कामातुरः कोऽपि रथकारस्तद्गृहे समागतः तेन कोशामनोरञ्जनार्थं भूतलस्थेन धनुर्वेदकलया शरानुशरसंधानं कृत्वाम्रतरोराम्रराशिं संगृह्य

॥ अथाष्टचत्वारिंशत्तमं व्याख्यानम् ॥

अथाकारषट्काधिकारः प्रोच्यते—

आकारा षड्विधाः प्रोक्ता अपवादे जिनादिभिः ।

राजगुरुवृत्तिकांतारगणदेवबलैर्युताः ( युता राजगुरुवृत्तिकान्तारबलदैवतैः ) ॥ १॥

कंठ्यः । इयमत्र भावना—अत्र सम्यक्त्वेऽपवादे एवाकाराः, न तूत्सर्गे । यतः—

उस्सग्गसुअं किंचिं किंचि अववाययं भवे सुत्तं । तदुभयसुत्तं किंची सुयस्स भंगा मुणेयवा ॥ १ ॥

अतो गुणविभागं वीक्ष्योभयपक्षसेवा । यदुक्तम्—

तम्हा सवाणुन्ना सवनिसेहो य पवयणे नत्थि । आयं वयं तुलिज्जा लाहाकंखि व्व वाणियउ ॥ १ ॥

उत्सर्गपक्षस्तु यथाख्यातचरित्राणां निरतिचारो मार्गः, स तावत्सम्यक् सेवितुं न शक्यते, अधुना तादृक्संहननाद्यभावात् । अतोऽपवादसेवनमपि कृत्वा पुनरालोचनादिनात्मा शोध्यः । इति भावार्थः ।

अथाद्यो राजाभियोगोऽयं—

दाक्षिण्येन क्षितीशस्य बलाद्वा वाक्यतोऽपि वा । कुदृष्टीनां नमस्कारो राजाभियोग उच्यते ॥ १ ॥

सुगमः । अत्रार्थे कार्तिकश्रेष्ठिज्ञातम्—

पृथ्वीभूषणनगरे श्रीमुनिसुव्रतजिनतः प्राप्तधर्मा कार्तिकाख्यः श्रेष्ठी वसति स्म । एकदा गैरिकतापसो मासोपवासी

अथान्यदा धर्मैकनिष्ठः सद्दालपुत्रः पञ्चदशाब्दान्तरे पौषधेन स्थितस्तदा एको देवः करधृतनिशितकरवालः पिशाचरूपेणैत्योपसर्गांश्चकार। तस्यैकं सुतं गृहादानीय छेदनभेदनं कृत्वा तद्रुधिरेण पौषधस्थस्य तस्य गात्राण्यसिंचत्। तथापि गतकोपः स आस्त। अभीतं तं दृष्ट्वा देवो जगौ—"हे अप्रार्थ्यप्रार्थक! यदि त्वं धर्मं न मुञ्चसि तदाहं त्वदग्रे त्वद्भार्याया अपि घातं करिष्ये"। एवं पुनः पुनस्तद्वाक्यं श्रुत्वा स दध्यौ—'नूनममुमनार्यं गृह्णामि' इति विचिन्त्य महता शब्देन तिरस्कारपूर्वं यावत्तद्ग्रहणोत्सुकस्तावत्सोऽदृश्यत्वं प्राप। तत्कोलाहलं श्रुत्वा स्वाम्यन्तिकमेत्य भार्यया तत्समयस्वरूपं पृष्टः सन्नाचष्ट। तत्सर्वं यथाजातं निशम्य साह—"स्वामिंस्तव सूनुभार्यादिकं केनापि न हतं, परं व्रतभंगस्त्वया कृतः स न योग्यः"। ततस्तत्पापमालोच्य प्रतिक्रम्य च क्रमेणैकादश गृहिप्रतिमाः संपूर्णीकृत्य सौधर्मकल्पे चतुष्पल्योपमायुष्को देवो जातः। ततश्च्युत्वा महाविदेहे सेत्स्यति। इत्युपासकदशांगतो लिखितोऽयं प्रबन्धः।

जिनेन्द्रवाक्येन विबुद्धचेता, निरस्तगोशालकपक्षबुद्धिः।
सम्यक्त्वयत्नाधरणे ( सम्यक्त्वशुद्ध्या यतना ) प्रवीणः, सद्दालपुत्रस्त्रिदिवं समाप ॥ १ ॥

इत्युपदेशप्रासादे चतुर्थस्तंभे सप्तचत्वारिंशत्तमं व्याख्यानम् ॥ ४७ ॥

कलयन् 'अपुरुषाकारेण' इत्युवाच। ततः पुनस्तं प्रश्नयन् प्रभुराह—"भोः सद्दालपुत्र! यदि कश्चिन्नरस्तव भाण्डान्यपहरेत् छिंद्याद्वा, भार्यया सह भोगान् भुंजीत वा, तस्य त्वं कं दंडं वितनोषि?'। स प्राह—'भगवन्! तमकाल एव जीविताद्व्यपरोपयामि तर्जयामीति'। स्वामिनोक्तं—"इत्थमुद्यमपारतंत्र्येण सर्वकार्याणि कुर्वन् यद्वदसि अपुरुषाकारेणेति तत्ते मिथ्या। एकान्तमतेन स्वीकृतं तदसत्यं"। तदुक्तयुक्तितः प्रबुद्धो जिनान्यर्णे श्राद्धधर्ममंगीचकार। तद्भार्ययापि स्वीकृतः पञ्चाणुव्रतसप्तशिक्षाव्रतरूपो धर्मः। ततोऽन्यजनपदे जिनो विहरति स्म।

अथान्यदा तद्धर्मप्राप्तिस्वरूपं श्रुत्वा गोशालस्तद्गृहे समागात्। सोऽपि तमागच्छन्तं दृष्ट्वा मौनेन स्थितः सन्नाभ्युत्थानादिकमकरोत्। तदा लज्जया मंखलिसूनुर्भगवतो गुणवर्णनमित्थं चकार—'भो देवानां प्रिय! अत्र पूर्वं महामाहनाः समागता अभूवन्'। तच्छ्रुत्वा स आह—'भवता के महामाहनाः प्रोक्ताः?'। तेनोक्तं—"भोः सद्दालपुत्र! सूक्ष्मादिभेदभिन्नजीवहननिवृत्तत्वाच्छ्रीवीर एव महामाहनाः। हे श्रमणोपासक! महागोपश्च महासार्थवाहकश्च महाधर्मकथकश्च महानिर्यामकश्चात्र समागतोऽभूत्"। तन्निशम्य स आह—'त्वया कस्यैतत्कीर्तनं कृतं?'। गोशालः प्राह—'मया सर्वमिदं त्रैशलेयस्य वर्णनं कृतं'। तद्वाक्येन हृष्टो वहुमानेन तं प्रत्युवाच—'यूयं मद्गुरुभिः सार्धं वादं करिष्यथ?'। स प्राह—'हे भद्र! नाहं वादे समर्थः। एकेन वाक्येन मां निराकरोति तव धर्माचार्यः'। ततः स प्राह—"यथार्थवर्णनं युष्माभिः सर्वज्ञस्याविष्कृतं तेनाहं युष्मभ्यं सत्कारपूर्वकमशनवसनादिकं प्रयच्छामि, न तु धर्मेण"। इत्याद्युक्तियुक्तितस्तं निर्ग्रन्थप्रवचने दृढतरं विज्ञाय विलक्षः सन्नन्यत्र जगाम।

कृपावद्भिः—"नो मे कप्पई अज्जप्पभिई अन्नउत्थियदेवयाणि वा अन्नउत्थियपरिग्गहियाणि अरिहंतचेइयाणि वा वंदित्तए वा नमंसित्तए वा पुव्विं अणालत्तेणं आलवित्तए वा संलवित्तए वा तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउंवा अणुप्पयाउं वा" इत्यर्थः। अत्रार्थे सद्दालपुत्रज्ञातमुपासकसूत्रतो लिख्यते—

पोल्लासाख्यपुरे मंखलिसुतधर्मज्ञः पञ्चशतकुंभकारापणस्वामी त्रिकोटिहिरण्याधिपः दशसहस्रधेनूनां पोषकः सद्दालपुत्रोऽभवत्। तस्याग्निमित्रा भार्या। एकदा श्रेष्ठ्यन्तिके एकः सुर एत्यान्तरीक्षस्थः तं प्राह—"भोः श्रेष्ठिन्! कल्येऽस्मिन्नगरे महामाहनोऽर्हन् सर्वज्ञः समेष्यति। स त्वया भक्तितः कल्याणं मंगलं दैवतं चैत्यमित्येवंबुद्ध्या पर्युपासनीयः"। इत्युक्त्वा देवे गते स दध्यौ—"नूनं मम धर्मोपदेशको गोशालः स एव महामाहनः सर्वज्ञश्च कल्ये समेष्यति। तमहमशनादिभिः पर्युपासिष्ये"। ततः प्रत्यूषे श्रीवीरसमागमनं श्रुत्वा हृष्टो महोत्सवेन वन्दनाय ययौ। दूरतः प्रातिहार्यादिशोभां वीक्ष्य 'अहो! अचिन्त्येयं सद्गुरूणां शक्तिः' इति ध्यायन् जिनं प्रणम्य पुरतस्तस्थौ। ततो देशनां शुश्राव। ततो वीरेणेति पृष्टः—'भोः सद्दालपुत्र! कल्ये त्वां प्रति यद्देवेनोक्तं तत्स्मृतिपथेऽस्ति?'। ओमित्युक्त्वोचे—'स्वामिन्! मम कुंभकारापणेषु यूयं समागच्छत। येनाहं पर्युपासयामि'। तैरपि तथा कृतम्।

अथान्यदातपे धृतानि भांडानि वीक्ष्य जिनस्तं प्राह—'भोः श्रेष्ठिन्! केनोपायेनेमानि निष्पादितानि?'। स प्राह—स्वामिन्! पिंडविधानचक्रारोपणादिना निष्पद्यन्ते'। 'भो भद्र! त्वया भांडानि किमुद्यमेनेतरथा वा क्रियन्ते?' इति भगवता पृष्टे स गोशालकमतेन नियतिवादित्वेन 'भवति पुरुषाकारेण' इत्युत्तरदाने स्वमतक्षतिपरमताभ्यनुज्ञादोषमा-

खर ! यदि दासीं न ददासि तदैकं भागं ददस्व । अन्यथैनां त्याजयित्वा त्वां त्याजयिष्यामि" । ततः कुमारस्तं प्राह— 'कल्पान्तकालेऽपि त्वदुक्तं न करोमि । किं पुनः पुनः पृच्छयते' । तन्निश्चलत्वेन संतुष्टो दिव्यरूपधरो देवः प्राह—"भोः साहसिकशेखर ! अहं शक्रकृतां त्वत्प्रशंसामश्रद्दधानस्तव परीक्षार्थमत्र समागतोऽस्मि । तव प्रसादेनाहं सम्यक्त्वधरो जातः" । ततो देवस्तेन गन्धर्वविवाहं निर्माप्य स्वर्गं गतः । कुमारोऽपि महामहेन तां परिणीय स्वग्रामं आजगाम । ततः कुमारं राज्ये निवेश्य पित्रा व्रतं गृहीतं । संग्रामशूरनृपोऽपि श्रावकधर्मं प्रपाल्य पञ्चमकल्पे एकावतारत्वेन देवो जातः ।

संग्रामशूरो नृपतिप्रधानो, निश्चितचेता यतनाद्ययुग्मे ।
कष्टेऽप्यहिंसानियमान् प्रपाल्य, श्रीब्रह्मकल्पं समलंचकार ॥ १ ॥

॥ इत्युपदेशप्रासादे चतुर्थस्तंभे षट्चत्वारिंशत्तमं व्याख्यानम् ॥ ४६ ॥

## ॥ अथ सप्तचत्वारिंशत्तमं व्याख्यानम् ॥ ४७ ॥

अथान्ययतनाचतुष्टयं व्यावर्ण्यते—

**मिथ्यात्वलिप्तचित्तानां संलापालापवर्जनम् । सकृद्वा बहुवारं वा न यच्छेदशनादिकम् ॥ १ ॥**

मिथ्यादृशां चरकादीनां सस्नेहं कुशलं युष्माकमिति पुनः पुनः पृच्छनं संलापः । तेषामेकवारं प्रच्छनमालापस्तयोर्वर्जनं, चेति शेषः । तेषामेकवारमनेकवारं वा दानं ( अशनादिकं ) न प्रयच्छेत् । इति तृतीया तुर्या पञ्चमी षष्ठी यतना । यदुक्तं

स्तया पृष्टः सन् स्वकुलादि प्राह । स स्वचरित्रमुक्त्वा तच्चरित्रमशृणोत्—

"वैताढ्यशैले दक्षिणश्रेण्यां विद्युत्प्रभनृपस्य सुता मणिमंजरीत्याख्याहं । अन्यदा मत्पित्रा 'मत्सुताया अर्हः स्वामी कदा भावी ?' इति पृष्टो नैमित्तिकः प्रोवाच—"हे नृप ! पयोधिमध्ये जलकान्तरत्नमन्दिरं कारयित्वा कल्पतरुलंबमानपल्यंके निपक्ष्यामेनां रक्ष । तत्र शूरसेनसूनुः संग्रामशूरोऽस्या वरः समेष्यति" । इति दैवज्ञवचसा मत्पित्रा सर्वं निर्मापितं । अत्र चतुर्भिर्दिनैर्यूयं दृष्टाः" । इत्थं परस्परप्रेमभरवार्तावसरे करधृतनग्नकरवालः तालतमालदलकृष्णांगो विकरालभालस्थल एको राक्षसः सहसा प्रकटीभूय कुमारं प्राह—'भो आर्यपुत्र ! अहं सप्तदिनीं क्षुधितोऽस्मि । त्वं मद्भक्ष्यं कथं परिणेतुं वाञ्छसि ?' । एवं भणित्वा सनूपुरां तां पादतलाद्गिलितुं प्रारब्धवान् । ततः कुमारेण खड्गेनाहतः । खड्गो द्विधाभूतः । ततः कुमारेण बाहुयुद्धं कृतं । राक्षसेन तं बद्ध्वा भुवि पातयित्वा प्रोक्तं—"भो नृपनन्दन ! तव प्रणयिनीं मुञ्चामि, यद्येकामन्यां स्त्रियं वा तव स्थूलकायं ददासि । एवं करणे न क्षमस्तर्हि मद्गुरुं चरकपरिव्राजकं प्रणम । अथवा मत्प्रासादे हरिमूर्तिर्जिनबिंबमप्यस्ति । तं प्रणम्य पूजां कुरु । अथवा मत्प्रतिमां कारयित्वा नित्यमर्चय । अन्यथैनां समंततो गिलिष्यामि" । कुमारो जजल्प—"भो राक्षस ! जीवितान्तेऽपि जिनवरं सुसाधुं च मुक्त्वा नान्यमहं नमामि । निष्कारणं स्थावरस्यापि हिंसां न करोमि, तर्हि कान्यस्य वार्ता ? । भो देव तवाप्येवं वक्तुं न युक्तं" । राक्षसः प्राह—'भो नृपपुत्र ! अत्र जिनायतने वीतरागबिंबं पूजय' । ततः सहर्षेण तत्र गत्वा तद्भावपूजितं बिंबमवेक्ष्य प्रतिनिवृत्य प्राह—'भो देव ! शिरश्छेदेऽपि त्वदुक्तं न करोमि' । एवं श्रुत्वा तेन पादतः सा गिलितुं प्रारब्धा । तदा सा बालातिकरुणस्वरेण प्रलपितुं लग्ना—'हा नाथ प्राणप्रिय ! मां मरणाद्रक्ष' । एवं विलपन्तीं तां गलकन्दलं यावद्गिलित्वा तं प्रत्युवाच—"रे मूर्खशे-

इदं श्रुत्वा प्रबुद्धास्ते यावज्जीवं प्राणिवधनियमं जगृहुः। अथ संग्रामशूरस्ततः समागत्य जीवान्निहन्तुं श्वगणं विमुञ्चति। परं तांश्चित्रलिखितानिव वीक्ष्य तदधिकारिणः पप्रच्छ। तेऽप्याहुः—"स्वामिन् वयं विशेषकारणं न जानीमः। परं चेष्टया साध्वागमेन प्रबुद्धा ज्ञायन्ते"। एतच्छ्रुत्वा दध्यौ—'अहो पशुगणतोऽपि धिग्मां'। ततो गुरुसमीपे धर्ममशृणोत्—

"देवो जिणो द्वारसदोसवज्जिउं, गुरू सुसाहू समलेट्ठुकंचणो।
धम्मो पुणो जीवदयाइ सुंदरो, सेवेह एयं रयणत्तयं सया ॥ १ ॥"

श्रुत्वैतद्दृढधर्ममंगीचकार। ततो राज्ञा स युवराजपदे स्थापितः। अथ कुमारमित्रं मतिसागराख्यं यानपात्रतो बहुधनं समुपार्ज्य प्राग्मित्रमिलनाय तत्र समागात्। तं प्रति कुमारः कुशलप्रश्नपुरस्सरं द्वीपसमुद्रादिवार्तां पप्रच्छ। सोऽप्याह—"हे वयस्य! यानारूढेन मया भरतावधिमध्यभागे महोन्नतकल्पपादपशाखायामान्दोलायमानपल्यंके स्थितां सकलसीमन्तिनीतिलकभूतां गीतादिरवेण किंकरीकृतकिन्नरीदिव्यतरुणीं प्रेक्ष्य यावत्प्रवहणं तदन्तिक आनीतं तावत्कल्पद्रुमेण मन्मनोरथेन च समं सा जलधौ मध्ये निमग्ना दृष्टा। एतदाश्चर्येण चमत्कृतोऽहमपि। ततोऽद्य त्वदग्रे उक्तं"। ततः कुमारः कुसुमशरप्रसरजर्जरितांगो मित्रेण समं यानपात्राणि प्रपूर्य क्रमेण जलधिमध्यप्रदेशे समागतः। दूरात्तथैव सा क्रीडन्ती दृष्टा। यावन्नृपसूनुस्तदभ्यर्णेऽगात्तावत्पूर्ववत् सा निमग्ना। ततो नृपभूः करविरलीकृतकरवालस्तत्पृष्ठे झंपां ददौ। तत्र जलकान्तमणिनिर्मितसप्तभूमिकप्रासादस्योपरिभागे पतितः। ततोऽधस्तनभूमौ गतः। तत्र कल्पद्रुमशाखोल्लंबमानपल्यंके सुप्तां सूक्ष्मवसनाच्छादितसर्वांगां तां वीक्ष्य वस्त्रोत्सारणमकरोत्। साप्युत्थाय पल्यंके तमतिष्ठिपत्। तत-

—श्रीउपदेशप्रासादे

## ॥ चतुर्थः स्तंभः ॥

### ॥ अथ षट्चत्वारिंशत्तमं व्याख्यानम् ॥ ४६ ॥

अथ षट्सु यतनासु मध्ये द्वे आद्ये व्यावर्ण्येते—

**अन्यतीर्थिकदेवानां तथान्यैर्गृहीतार्हताम् । पूजनं वन्दनं चैव विधेयं न कदापि हि ॥ १ ॥**

परतीर्थिकदेवाः शंकरादयः तेषामर्चादिकं न कार्यमिति प्रथमा यतना । तथाऽन्यैः सांख्यादिभिर्गृहीतानां स्वाश्रमे निहितानां अर्हतां जिनमूर्तीनामपि प्रसंगदोषवृद्धिहेतुत्वाद्वन्दनादि न कार्यमिति द्वितीया यतना इत्यर्थः । एतदर्थे संग्रामशूरप्रबन्धोऽयम्—

पद्मिनीखंडनगरे संग्रामदृढो राजा । तस्य पुत्रः संग्रामशूरः । स प्रतिदिनमाखेटकं करोति । अन्यदा पित्राऽसदाग्रहममुञ्चन्तं तं तर्जयित्वा पुरान्निःसारितः । स बहिः संनिवेशं कृत्वा स्थितः । प्रत्यूषे श्वगणं पुरतः कृत्वाऽरण्ये प्राणिनो निहत्य प्राणवृत्तिं करोति । अन्यदा श्वगणं तत्र विमुच्य कस्मिंश्चिद्ग्रामे गतः । तस्मिन् समये तत्रोद्याने सूरिः समवासरत् । तेषां सारमेयानां प्रबोधनार्थं मधुरवचसोवाच—

“खणमित्तसुक्खकज्जे जीवे निहणंति जे महापावा । हरिचंदनवनखंडं दहंति ते छारकज्जंमि ॥१॥”

अनिर्जितेन्द्रियग्रामो यतो दुःखैः प्रबाध्यते । तस्माज्जयेदिन्द्रियाणि सर्वदुःखविमुक्तये ॥ १ ॥
न चेन्द्रियाणां विजयः सर्वथैवाप्रवर्तनम् । रागद्वेषविमुक्त्या तु प्रवृत्तिरपि तज्जयः ॥ २ ॥
हृताहृतानीन्द्रियाणि सदा संयमयोगिनाम् । अहृतानि हितार्थेषु हृतान्यहितवस्तुषु ॥ ३ ॥

इति श्रुत्वा प्रबुद्धो जिनमततत्त्वं विज्ञाय श्रावकधर्मं प्रपन्नः। एवं बहुजनान् धर्मे संस्थाप्य पद्मशेखरः सुरराजभुवनं प्राप्तः ।

पद्मशेखरनृपस्य चरित्रमास्तिकैर्नरगणैर्गुणयुक्तैः ।
निर्मलेन मनसा परिभाव्यं कुर्वता जिनमते हि शुभास्थाम् ॥ १ ॥

इत्युपदेशप्रासादे तृतीयस्तंभे पञ्चचत्वारिंशत्तमं व्याख्यानम् ॥ ४५ ॥

## ॥ समाप्तोऽयं तृतीयः स्तंभः ॥

गृहे लप्स्यते तस्य दंडो विधास्यते"। इत्यादि यावन्न कोऽपि मन्यते तावन्नृपादेशेन राजपुरुषैः पुरगृहशोधनमारब्धं। क्रमेण तद्गृहे लब्धो हारः। सेवकैः श्रेष्ठी बद्ध्वा राजसमीपं आनीतः। तेन राज्ञाऽऽदिष्टम्—'असौ वराको वध्यः'। न च कोऽपि तं मोचयति। स्वजनादिना बहूक्ते राजा वदति—

"जइ मह घराउ तिल्लिण पूरियपत्तं गहेवि अचयंतो।
बिंदुं पि भमिय सयले नयरे मिल्हेइ मह पुरउ ॥ १ ॥ "

एवं यदि करोति तदैवास्य मोक्षो नान्यथा"। तेनातिमरणभीरुतया प्रतिपन्नम्।

अह पोमसेहरनिवो सयलस्स पुरस्स आइसई लोए। वीणावेणुमुयंगा गाणे गाणेसु वाएह ॥ १ ॥
अइलम्हरूवलवणिमवेसविसेसा विलासकलियाइं। सविंदिअसुहयाइं पए पए पिक्खणसयाइं ॥ २ ॥

स च तेषु विशेषतो रसिकोऽपि तस्मिन्नेव भाजने निहितदृष्टिरुभयपार्श्वे नृपनियुक्तखड्गव्यग्रकरसुभटक्रियमाणनानाविभीषिकाभिर्भाप्यमानः सकलपुरे भ्रामयित्वा आनीतः। नृपोऽपीषद्विहस्य तं प्राह—'भो अत्यन्तचञ्चलानि मनःकरणानि कथं भवता रुद्धानि ?'। तेनोक्तं—'स्वामिन्! मरणभीरुतया'। नृपः प्राह—"यद्येकभवार्थं त्वयाऽप्रमादः सेवितः, तर्ह्यनन्तसंसारमरणभीरवः साध्वादयः कथं प्रमादं कुर्युः ?। हे श्रेष्ठिराज! आकर्णय हितं वचनम्—

प्रतिदिनं सभायां लोकानां पुरतो गुरूणां गुणान् कीर्तयति । तथाहि—

"निवर्तयत्यन्यजनं प्रमादतः, स्वयं च निष्पापपथे प्रवर्तते ।
गृणाति तत्त्वं हितमिच्छुरङ्गिनां, शिवार्थिनां यः स गुरुर्निगद्यते ॥ १ ॥
वंदिज्जमाणा न समुक्कसंति, हीलिज्जमाणा न समुज्जलंति ।
दमेति चित्तेण चरंति धीरा, मुणी समुग्घा जयरागदोसा ॥ २ ॥

दुविहे गुरु पन्नत्ते । तं जहा—तवोवउत्ते नाणोवउत्ते अ । तत्थ तवोवउत्ते वरूपत्तसमाणे केवलं अप्पाणं तारेई । नाणोवउत्ते जाणपत्तसमाणे अप्पाणं परं च तारेई" । इत्यादिगुरुगुणवर्णनैर्भूयान् जनस्तेन स्थापितो धर्मे । परमेको जय-नामा वणिक् नास्तिकमतानुसारी इति जणति—"दुःशकानि रोद्धुमिन्द्रियाणि स्वस्वमार्गानुगामुकानि । आत्मशोषण-मात्रमेव तपः । केन दृष्टौ स्वर्गापवर्गौ । उक्तं च—

हत्थागया इमे कामा कालिया जे अणागया । को जाणाई परे लोए अत्थि वा नत्थि वा पुणो ॥ १ ॥

ततो यत्किञ्चित्तदेतत् । इत्थं तेनापि भूयान् जनो विप्रतारितः । एवं च तस्मिन् नगरे तौ द्वावपि पुण्यपापोपदेशकुशलौ प्रत्यक्षाविव सुगतिदुर्गतिमार्गौ समजायेताम् । अन्यदा तत्स्वरूपं नृपेण ज्ञात्वा प्रच्छन्नं निजजनपार्श्वात्तगृहे हारमेकं लक्षमूल्यं तदीयाभरणकरंडके प्रक्षेप्य नगरे पटहो दापितः—"यो राज्ञो हारं गतं संप्रति कथयिष्यति, तस्य न दंडः, पश्चात्तु यस्य

मरणाद्रक्षितः, नान्यत् किञ्चिदुपकृतम् । ततः राज्ञ्याऽन्यपत्नीभिर्हसिता 'नानया किञ्चिद्दत्तमिति' । ततस्तासां बहूपकार-विषये विवादे जाते राज्ञा चौर एवाकार्य पृष्टो यथा 'तव कया बहूपकृतं ?' । तेनोक्तं—"मया मरणभयपीडितेन स्नानादि सुखं किञ्चिन्न ज्ञातं । व्याघ्रसमीपबद्धहरितयवभोजिमेषवन्मया दुःखमेवानुभूतं । अद्य तु शुष्कनीरसतृणप्रायेण सामान्येनाहारेणापि व्यवहारिगृहबद्धगोवत्सवत् सुखं जीवितव्यप्रापणादनुभवामि । तेनाद्य नृत्यन्नस्मि" । इति श्रुत्वा राज्ञाऽभयदानं प्रशंसितम् ।

राज्ञः स्त्रीभिर्मोचितश्चौर आर्त्या आस्थावद्भिस्तद्वदेवानुकंपा ।
नित्यं कार्या लक्ष्यते तेन शुद्धं सम्यग्दृष्टेर्लक्षणं तुर्यमेतत् ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे चतुश्चत्वारिंशत्तमं व्याख्यानम् ॥ ४४ ॥

---

## ॥ अथ पञ्चचत्वारिंशत्तमं व्याख्यानम् ॥ ४५ ॥

। अथ पञ्चमं लक्षणं प्रोच्यते ।

प्रभुभिर्भाषितं यत्तत्तवत्तान्तरश्रुतेऽपि हि । निःशंकं मन्यते सत्यं तदास्तिक्यं सुलक्षणम् ॥ १ ॥

कंठ्यः । अत्रार्थे पद्मशेखरनृपोदाहरणम् । यथा—पृथ्वीपुरे पद्मशेखरो नृपो विनयंधरसूरिपार्श्वे प्रबुद्धोऽतीवधर्मपरः

ष्यके पारणार्थगमनकालजातमंडूकीविराधनालोचनार्थं स्मारितः क्रुधा क्षुल्लकं हन्तुं धावन् स्तंभ आस्फाल्य मृतो ज्योतिष्केषूत्पन्नस्ततश्च्युत्वा तत्राश्रमे पञ्चशततापसाधिपतिश्चंडकौशिको बभूव । तत्रापि राजकुमारान् स्वाश्रमफलादिग्राहकान् वीक्ष्य परशुहस्तो धावन्नवटे पतितः परशुविद्धस्तत्रैव प्राग्भवनामा दृग्विषोऽहिरभूत् । स च प्रभुं प्रतिमास्थं दृष्ट्वा क्रुधा ज्वलन् सूर्यं दर्शं दर्शं ज्वाला मुमोच । तासु विफलासु प्रभुपादे दशन् गोक्षीरधवलं भगवद्रक्तं वीक्षमाणः 'चंडकौशिक ! बुध्यस्व बुध्यस्व' इति प्रभुवचः शुश्राव । तत्क्षणं जातिस्मृतिमान् स प्रभुं त्रिः प्रदक्षिणीकृत्य प्रपन्नानशनो मान्यत्र विषभृता मे दृष्टिर्यासीदिति तुंडं बिले प्रक्षिप्य स्थितः । तत्र घृततक्रादि विक्रेतुं गच्छन्तीभिर्गोपीभिर्घृतेन सिक्तः पिपीलिकादिभिर्भृशं पीड्यमानः प्रभुभक्तिसुधासिक्तः पक्षान्ते सहस्रारं ययौ । ततोऽचिरान्मोक्षं प्राप्स्यतीति ।

तथात्रार्थेऽन्यापीयं वार्ता—

**तथा चौरोऽन्यराज्ञीभिर्दिने वस्त्राद्यलंकृतः । न रतिं लघुराज्ञ्या तु प्रदत्ताभयतो यथा ॥ १ ॥**

वसन्तपुरेऽरिदमनो राजा वधूचतुष्टययुक्तोऽन्यदा गवाक्षे क्रीडति । तदा तेन सपत्नीकेनैकश्चौरो वध्यस्थानं नीयमानो दृष्टः । पत्नीभिः पृष्टम्—'किमनेनापराद्धं ?' । तदैकेन राजनरेण तत्स्वरूपमुक्तं—'अनेन चौर्यं कृतं' । तत एकया पत्न्या नृपपार्श्वे पूर्वदत्तो वरो मार्गितः—'एकदिनमयं पारिपंथिको मोच्यः' इति । राज्ञापि तत्प्रतिपन्नं । ततस्तया स्नानभोजनसत्कारादिपूर्वकमलंकारैरलंकृतो दीनारसहस्रव्ययेन शब्दादिविषयान् प्रापितो दिनमेकं पालितश्च । द्वितीयदिने द्वितीयया दीनारलक्षव्ययेन लालितः । तृतीयदिने तृतीयया दीनारकोटिव्ययेन सत्कृतः । चतुर्थ्यां तु राजानुमत्याऽनुकंपया

निर्वेदशब्दस्य भवे विरागतेत्यर्थः समाख्यायि जिनेन्द्रवर्त्मनि ।
तद्भावसिंहाश्रितवाहनो हरेः सर्वार्थसिद्धिं पुरमाययौ लघु
(तद्भावसिंहाश्रित आपवाहनः सर्वार्थसिद्धिं विहितेष्टसिद्धिम् ) ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे त्रिचत्वारिंशत्तमं व्याख्यानम् ॥ ४३ ॥

---

## ॥ अथ चतुश्चत्वारिंशत्तमं व्याख्यानम् ॥ ४४ ॥

। अथानुकंपासंग्रहाख्यं चतुर्थं लक्षणं विभाव्यते ।

दीनदुःस्थितदारिद्र्यप्राप्तानां प्राणिनां सदा । दुःखनिवारणे वाञ्छा सानुकंपाऽभिधीयते ॥ १ ॥
कार्या मोक्षफले दाने पात्रापात्रविचारणा । दयादानं तु सर्वज्ञैर्न क्वापि प्रतिषिध्यते ॥ २ ॥
निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः । न हि संहरति ज्योत्स्ना चन्द्रश्चंडालवेश्मनि ॥ ३ ॥

अत्रार्थे प्रबन्धोऽयम्—

अपकारेऽपि कारुण्यं सुधीः कुर्याद्विशेषतः । दंदशूकं दशन्तं श्रीवीरः प्राबोधयद्यथा ॥ १ ॥

छद्मस्थः श्रीवीरजिनः कनकखलाख्यतापसाश्रमे चंडकौशिकसर्पप्रबोधायागात् । सोऽहिः प्राग्भवे क्षपकः क्षुल्लकेनाव-

णमाशां द्रुतं मुञ्च' । तच्छ्रुत्वा नृपो विलक्षोऽजायत । अथ तौ सुहृद्दुःखापनोदाय विमानं तदन्तिके मुमुचतुः । राजा
सुहृदौ वल्लभां च वीक्ष्य प्रमुदितमना जातः । ततो राज्ञः पुरस्तात् सर्वे स्वस्ववृत्तान्तमूचुः । ततो राजा तत्कन्यायुग्मं
मित्रयोर्व्यवाहयत्

अथैकदा पित्रेन्द्रदत्तेनाकार्य राज्ये स्वपुत्रं स्थापयित्वा प्रव्रज्यां जगृहे । कियद्दिनानन्तरं कर्मक्षयं कृत्वा केवलं समु-
पार्ज्य तत्र समवासरत् । तदा श्रीहरिवाहनः परिकरयुग् मुनीश्वरं प्रणम्य देशनामशृणोत्—

"विषयामिषलोलुब्धा मन्यन्ते शाश्वतं जगत् । आयुर्जलधिकल्लोललोलमालोकयन्ति न ॥ १ ॥"

देशनान्ते क्ष्मापो मुनिं प्रत्नुमप्राक्षीत्—'स्वामिन् ! मदायुः कियदस्ति ?' । इति निशम्य जगौ केवली—

नवप्रहरमानं ते समस्त्यायुर्नराधिप । श्रुत्वेति कंपमानाङ्गो मरणात्प्रविज्ञाय सः ॥ १ ॥

तदा मुनिः स्माह—"भो भूप ! यदि त्वं मृत्योर्निर्वेदेन बिभेषि, तर्हि दीक्षां प्रतिपद्यस्व । यतः—

अंतो मुहूत्तमित्तं विहिणा विहिया करेइ पव्वज्जा । दुक्खाणं पज्जन्तं चिरकालकयाइ किं भणिमो?॥१॥"

इति ज्ञानिवचः श्रुत्वा भवतो निर्विण्णो गोपः स्वमित्रैः सह दीक्षामादत्त । तदनु राजर्षिः शुभभावनां भावयन् 'एगो
हं नत्थि मे कोई' इत्यादिशुभध्यानेन मृत्वा सर्वार्थसिद्धाख्ये विमाने सुरः समभूत् ।

ततश्च्युत्वा विदेहेषु भविष्यति स निर्वृतिम् । तन्मित्रानङ्गलेखाद्या गन्तारः स्वः शिवं क्रमात् ॥ १ ॥

ताभ्यामोमित्युक्ते सति साधको विद्यामसाधयत् । विद्यासिद्धौ सत्यां ताभ्यां सोऽदृश्याञ्जनमरिसैन्यमोहिनीं विमानकारिकां चेति विद्यां ददौ । ततस्तौ भ्रमन्तौ वेनातटमवापतुः । तत्र लोकमुखात् स्वमित्रं नृपं शोकवन्तं निशम्य तद्विरहापनोदायाञ्जनं कृत्वाऽनङ्गलेखान्तिके समागत्य पटचित्रिते स्वप्रियप्रतिबिंबे न्यस्तलोचनां तां दृष्ट्वा तत्पट्टमपजह्रतुः । ततः साऽश्रुलोचना प्राह—

"अपराद्धं मया किं ते यच्चित्रितमपि प्रियम्। अहार्षीर्मम हत्याया अपि त्वं न बिभेषि किम् ॥ १ ॥"

ततस्तौ तां दुःखितां दृष्ट्वा पट्टं तस्यै वितीर्य स्ववृत्तान्तं प्रोचतुः । सापि भर्तृसुहृदौ ज्ञात्वाऽवादीत्—'हे भद्रौ देवरौ ! युवां मां निःशोकां कुर्वाथाम्' । ततस्तौ मंत्रवादिस्वरूपं कृत्वा राजानं प्रोचतुः—'भो नृप ! अस्मत्सदृशं कार्यं समादिश'।

राजा तौ स्माह हे प्राज्ञौ कञ्चुकस्वामिनीं स्त्रियम् । युवां विधत्तं मे सम्यगाजन्मवशवर्तिनीम् ॥ १ ॥

इति श्रुत्वा तौ तिलकचूर्णं ददतुः । नृपस्तिलकं कृत्वा तत्र गतः । ताभ्यां पूर्वकृतसंकेतत्वात् सा नृपं वीक्ष्याभ्युत्थानादिकं चकार । नृपस्तां स्वायत्तां मत्वा पुनः पुनस्तद्देहसंगं ययाचे । ततः साऽब्रोचत्—'भो नृप ! अष्टापदाद्रौ जिनं नत्वा स्वेप्सितसौख्यं साधयिष्यामि' । इति श्रुत्वा कामान्धेन तेन द्रुतं चटुभिर्वाक्यैः प्रार्थितौ तौ व्योमगं विमानं चक्रतुः। ततो नृपस्तामाह स—'भो भामिनि ! अनेन विमानेन स्वाभिग्रहं प्रपूर्य मन्मनोरथं पूरय' । सा प्राह—"हे राजन् ! त्वदन्तःपुरतः कन्यायुग्मं मया सह प्रेषय । येन सह वार्तादिसुखमनुभवामि" ततो राज्ञा तथा कृते पूर्वं ताभ्यां तस्मिन्नधिष्ठिते सा कन्याभ्यां सह विमाने समारूढा । ततः किञ्चिद्व्योम्नि दूरं गत्वा तौ नृपं प्रोचतुः—'भो दुष्ट ! आसां स्त्री-

अथ सा केनोपायेन कदा मां मिलिष्यति ?। इति चिन्तार्तो नृपः स्वसचिवं प्रोचे—"यद्यस्माकं जीवेन प्रयोजनं चेत्तर्हि सप्तदिनमध्ये तस्याः स्त्रियाः शुद्धिं समादिश"। ततो मंत्री राजेश्वरीं सूरीमाराधयत्। देवी प्रकटीभूय वरं वृणीष्वेति स्माह। स प्राह—'कञ्चुकेशां स्त्रियमानीय मम भूपाय प्रयच्छ'। सापि तं स्माह—'हे सचिव।

उदेति यदि वारुण्यां भानुश्चांगारमुक् शशी। तथापि सा सती शीलं प्राणान्तेऽपि न लुंपति ॥ १॥

कदाग्रहं भवत्स्वामी न मुञ्चति तथापि हि। तामानीय प्रयच्छामि न स्मार्योऽहं पुनस्त्वया ॥ २ ॥

इत्युक्त्वा सहसा गत्वा तामपहृत्य नृपाग्रे मुक्त्वा सा तिरोदधे। नृपस्तामागतां परिज्ञायानेकप्रार्थनामकरोत्। तच्छ्रुत्वा सावोचत्—'हे नृप! अहं प्राणान्तेऽपि शीलं न खंडयामि'। तन्निशम्य राजा दध्यौ—"स्त्रीणां तु स्वभावेनैव मुखे नकारो भवति, परमियं मदायत्तैव, अतः शनैर्धृष्टस्य चित्तं समाराध्यम्। यतः—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ १ ॥"

राज्ञी तु प्रतिदिनं हृदये भर्तारमेव संस्मारयति।

इतश्च पुरा गजत्रस्तौ कान्तारान्तर्भ्रमन्तौ तौ तद्वकश्रेष्ठिसुतौ एकत्र वेणुकुडंगमध्यस्थं मंत्रसाधकं ददृशतुः। साधकोऽपि साहसिकं नरयुग्मं वीक्ष्य प्राह—'हे कुमारौ! युवां ममोत्तरसाधकौ भवतं, येन मम कार्यनिष्पत्तिः स्यात्'।

"किमेषा प्रथमा सृष्टिर्विधात्रा रचिता ध्रुवम्। एतां दृष्ट्वा यथा नारीरन्याश्च निःसृजाम्यहम् ॥१॥"

इति ध्यायन् तद्दत्तासने स्थितः स सशोकां तां वीक्ष्य शोकहेतुं पप्रच्छ। साप्यूचे—"हे भाग्यशालिन्! अहं विजयनृपस्य नन्दिनी अनंगलेखाख्या। एकदा गवाक्षस्थां मां वीक्ष्य विद्याभृत् हृत्वाऽत्र पुरं कृत्वा निवेशितवान्। ततश्च सांप्रतं—

प्रयातोऽस्ति विवाहस्य सामग्रीकरणाय सः। अद्य स्वावासमागत्य परिणेष्यति मां बलात् ॥ १ ॥

परं पूर्वं मम ज्ञानिनेत्यभाणि—'हे वत्से तव प्रियो हरिवाहनो भविष्यति'। तन्मुनेर्वाग्विसंवादान्मम खेदोऽजनि"। तच्छ्रुत्वा कुमारः प्राह—'हे सुभ्रूः! मा खेदं कुरु'। इतः स खेचर आगतः। तेन सह खेचरो रुषा योद्धुमारेभे। कुमारेणापि जगज्जेतृखड्गेन निर्जितः खेचरोऽवोचत्—"भोः साहसिकश्रेष्ठ! इयं स्त्री इदं च पुरं त्वदधीनं, तस्मात्सुखेन भुंक्ष्व। अहं स्वस्थाने यामि"। अथ तस्मै तद्दिव्यकञ्चुकं दत्वाऽनेकजनाकुलं पुरं कृत्वा साम्राज्यं हरिवाहनः पालयामास।

अथैकदा राजा प्रियया सह नर्मदातटे शुभवस्त्राणि मुक्त्वा जलक्रीडां चकार।

इतस्तत्कञ्चुकं दिव्यं पद्मरागप्रभाञ्चितम्। दुकूलं कुलिनीकूलान्मांसभ्रान्त्याऽगिलज्झषः ॥ १ ॥

तद्दृष्ट्वा नृपादिः शोकं दधौ। ततः स मत्स्यो बेनातटे समागतः। केनचित् कैवर्तकेन विदारितः तस्योदरात् कञ्चुको निर्ययौ। ततः कैवर्तकः स्वनृपाय तत्कञ्चुकोपायनं चकार।

राजा व्यचिन्तयत् कासौ कामिनी विश्वमोहिनी। अयं यस्याः कञ्चुकोऽपि मनो हरति मामकम्॥१॥

भोगावत्यां पुर्यामिन्द्रदत्तो भूनेता। तस्य हरिवाहनः पुत्रोऽभूत्। तस्य सूत्रधारसुतः श्रेष्ठिसूनुश्चेति द्वौ सखायौ स्तः। ताभ्यां सह स्वेच्छया क्रीडन्तं सूनुं राजा दुर्गिरा तर्जितवान्। तेन दुःखेन निजसुहृद्भ्यां सह पित्रादिस्नेहं परित्यज्य कुमारः प्रस्थितवान्। क्वाप्यरण्ये ते त्रयोऽपि करमुत्पाट्याभिसमायान्तं मत्तदन्तिनं ददृशुः। तावत्तद्भकवणिक्सुतौ काकनाशं प्रणेशतुः। राजसुतस्तु तं गजं सिंहनादेन विचेष्टं विधाय सुहृद्गवेषणकृते पुरतोऽचालीत्। परं नैव तच्छुद्धिं क्वापि लेभे। स इतस्ततो भ्रमन्नेकं सरोवरं मनोहरमैक्षिष्ट। तत्र स्नात्वा ततः सरसो दिश्युदीच्यां महारामे प्रविवेश। तदन्तरे पुष्करिण्योपचितद्वारस्य यक्षस्य मन्दिरे रात्रौ सुप्तः। तस्मिन् सुप्ते यक्षाग्रे रणन्मणिनूपुरा अप्सरसः समागत्य नृत्यन्ति स्म। ततो बहुमूल्यवस्त्राणि मुक्त्वा नृत्यश्रमनिर्णाशाय पुष्करिण्यां स्वैरं स्नानं कर्तुं प्रवृत्ताः। तावत्स द्वारमुद्घाट्य तासां वासांस्युपादाय द्वारं पिधाय तस्थौ। ततस्ताः स्ववस्त्राण्यपश्यन्त्यो मिथो जजल्पुः—"अस्माकं वासांसि केनापि धूर्तेन नूनमपहृतानि। परमस्मत्तोऽपि स न बिभेति, अतो नैष दंभेन संसाध्यते"इत्युक्त्वा सामवाक्यैस्तं प्रलोभ्य जगदुः—'भो नराग्रणीः! अस्माकं वस्त्राणि समर्पय'।

"सोऽप्यवादीद्भृशं वायुरादाय वसनानि वः। भविताग्रे गतस्तस्माद्यात यात तदन्तिकम्॥ १॥"

तत्साहसेन संतुष्टास्ता जजल्पुः—'भो वत्स! इदं खड्गरत्नं दिव्यकञ्चुकं च गृहाण'। ततः स द्वारमपावृत्य वसनानि दत्वा क्षमयामास। देव्यस्तद्द्वितयं दत्वा स्वस्थानमगमन्। अथ कुमारो मार्गे गच्छन् शून्यं पुरमेकं ददर्श। तत्र कौतुकाद्भूपागारे सप्तमीं भुवं गतः। तत्रेन्दीवरविलोचनां कन्यामेकामद्राक्षीत्। यतः—

यद्दूषणं मया चक्रे, पृष्ट्वा वो ध्यानविघ्नकम् । निमंत्रिताश्च भोगेषु, तत्क्षमस्वाखिलं मम ॥ ७ ॥

स्तुत्वाऽनगारं तमिति स्वभक्त्या, श्रीश्रेणिकः सर्वनरेन्द्रचन्द्रः ।
सान्तःपुरः सत्परिवारयुक्तो, धर्मानुरक्तः स्वपुरं जगाम ॥ ८ ॥

यो (स) निर्ग्रन्थमुनीश्वरोऽमितगुणश्रेणीसमृद्धस्ततः, पक्षीव प्रतिबन्धबन्धरहितः कुर्वन् विहारं भुवि ।
गुप्तो गुप्तिभिरुग्रदंडविरतः छित्त्वा च मोहादिकं, संवेगात् क्रमतो महोदयपदं प्रापाव्ययं सौख्ययुक्॥९॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे द्विचत्वारिंशत्तमं व्याख्यानम् ॥ ४२ ॥

---

## ॥ अथ त्रयश्चत्वारिंशत्तमं व्याख्यानम् ॥ ४३ ॥

। अथ तृतीयं निर्वेदाख्यं लक्षणमुच्यते ।

संसारकारकागारविवर्जनपरायणा । प्रज्ञा चित्ते भवेद्यस्य स निर्वेदकवान्नरः ॥ १ ॥

सुगमः । तथा चोक्तं प्रवचने—"निव्वेएणं भंते जीवे किं जणयइ ? निव्वेएण ते दिव्वमाणुस्सतिरिच्छिएसु कामभोगेसु विरज्जमाणे निव्वेयं हव्वमागच्छइ सव्वविसएसु विरज्जइ । सव्वविसएसु विरज्जमाणो आरंभपरिग्गहपरिच्चायं करोति । आरंभपरिग्गहपरिच्चायं करेमाणे संसारमग्गं वोच्छिंदति । सिद्धिमग्गपडिवन्ने य भवति" । अत्रार्थे हरिवाहनप्रबन्धः—

प्रव्रज्य ये पञ्चमहाव्रतानि, न पालयन्ति प्रचुरप्रमादात् ।
रसेषु गृद्धा अजितेन्द्रियाश्च, जिनैरनाथाः कथितास्त एव ॥ १ ॥
निरर्थका तस्य सुसाधुता हि, प्रान्ते विपर्यासमुपैति योऽलम् ।
न केवलं नश्यति चेहलोकस्तस्यापरः किं तु भवो विनष्टः ॥ २ ॥
निराश्रवं संयममात्मशुद्ध्या, प्रपाद्य चारित्रगुणान्वितः सन् ।
छित्त्वाष्टकर्माण्यखिलानि साधुरुपैति निर्वाणमनन्तसौख्यम् ॥ ३ ॥"
निशम्य तस्य श्रमणस्य वाक्यं, तुष्टो भृशं श्रेणिकभूमिपालः ।
कृताञ्जलिः प्राह मुने मदग्रे, नाथत्वमुक्तं भवताऽनलीकम् ॥ ४ ॥
मुने सुलब्धं तव मर्त्यजन्म, लाभाः सुलब्धा जगदुत्तमास्ते ।
यूयं सनाथाश्च सबान्धवाश्च, मार्गे स्थिता यज्जिनपुंगवानाम् ॥ ५ ॥
नाथोऽसि नूनं त्वमनाथकानामतः परं स्थावरजङ्गमानाम् ।
जातो मुने देहभृतामथैव, त्वां क्षामयाम्याशु निहन्तुमागः ( निहन्तुमागः क्षमयामि साधो )॥६॥

श्रेणिको हसित्वाह—

"वर्णादिनामुना साधो न युक्ता ते ह्यनाथता । तथापि ते त्वनाथस्य नूनं नाथो भवाम्यहम् ॥ १ ॥
भोगान् भुंक्ष्व यथास्वैरं साम्राज्यं परिपालय । यतः पुनरिदं मर्त्यजन्मातीव हि दुर्लभम् ॥ २ ॥"

मुनिराह—"हे नृप ! आत्मनस्त्वमनाथः सन् मन्नाथः कथं भवसि" । ततः क्ष्माकान्तोऽनाकर्णितपूर्वमाकर्ण्य जगौ—"हे मुने ! एवं वक्तुं तव न युक्तं, यतोऽहं हस्त्यश्वरथपुरंध्रीवर्गं पालयामि" । ऋषिरपीषद्विहस्याह स्म—"पार्थिव ! अनाथसनाथानामर्थं वेत्सि न । तथा शृणु—कौशाम्ब्यां महीपालाख्यनृपो मम जनक आसीत् । अन्यदा आद्य एव वयसि ममाक्षिवेदनाऽभवत् । ततो मे सर्वगात्रे दाहोऽजायत । तां वेदनामपाकर्तुं मंत्रविद्वैद्यादयो निजनिजोपायान् चक्रुः, तथापि ते वेदनां विमोचयितुं नेशाः । तथा—

मत्कृते जनकः सर्वं गृहसारं ददात्यलम् । न मोचयति दुःखाच्च ममास्तीयमनाथता ॥ १ ॥

पितृमातृभ्रातृस्वसृपत्न्यादयो मत्पार्श्वस्था रुदन्ति, न भुञ्जन्ति, क्षणमपि मत्पार्श्वं न मुञ्चन्ति, परं दुःखान्मां न मोचयन्ति । ममेयमनाथता । तदन्वेवं मया ध्यातम्—'अनादिसंसारे पुनर्वेदनेयं कथं मया सहिष्यते ? । अतः क्षणमप्येकं वेदनानिस्तारो भवेच्चेत्तदाहं मुनित्वं गृह्णामि' । राजन्नेवं विचिन्त्य प्रसुप्तस्य मम वेदना क्षयं गता । ततो योगक्षेमकृन्नाथस्त्वात्मैव । ततः प्रत्यूषे स्वजनान् प्रबोध्य मयाऽनगारता गृहीता । ततोऽहं स्वस्यापरेषां च त्रसादीनां नाथो जातः । यतो योगक्षेमकृन्नाथस्त्वात्मैवेति । तथा हे नरेन्द्र ! अन्यामप्यनाथतां शृणु—

शान्तिक्षमाक्षान्तिशमादिनामतः, सूत्रे स्तुतो दर्शनलक्षणादिमः ।
धर्मेषु चाद्यः प्रददाति चान्तिमं, ज्ञानं ततः स्वीक्रियतां शमो गुणः ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे एकचत्वारिंशत्तमं व्याख्यानम् ॥ ४१ ॥

॥ अथ द्विचत्वारिंशत्तमं व्याख्यानम् ॥ ४२ ॥

। अथ द्वितीयं संवेगलक्षणं प्रोच्यते ।

दुःखत्वेनानुमन्वानः सुरादिविषयं सुखम् । मोक्षाभिलाषसंवेगाञ्चितः स दर्शनीभवेत् ॥ १ ॥

कंठ्यः । अत्रार्थे निर्ग्रन्थमुनिप्रबन्धः—

राजगृहोपवन एकदा मगधेशः क्रीडां कुर्वन्नेकं सुकुमाराङ्गं समाधिपरं विश्वविस्मयकृद्रूपं मुनिं ददर्श ।

"अहो अस्य मुने रूपमहो लावण्यवर्णिका । अहो सौम्यमहो क्षान्तिरहो भोगेष्वसङ्गता ॥ १ ॥"

इत्युक्त्वा ध्यानपरं तमवेक्ष्य क्ष्मापतिस्तत्पादपद्मे प्रणम्यैवमपृच्छत्—'हे आर्य ! यौवनेऽप्येवं दुष्करं व्रतमग्रहीस्तत्कारणं कथय' ।

मुनिराह "महाराज ! अनाथोऽस्मि पतिर्न मे । अनुकंपाकराभावात्तारुण्येऽप्यादृतं व्रतम्" ॥ १ ॥

पुत्रो भविष्यति'। ततस्तस्य पुत्रोऽभूत्। तस्य नागदत्त इति नाम विदधे। स क्रमाद्यौवनं प्राप। एकदा गवाक्षस्थ एकं
मुनिं वीक्ष्य जातिस्मृतिं प्राप्य वैराग्येण कथमपि पित्रोरनुज्ञां गृहीत्वा स गुर्वन्तिके दीक्षां जग्राह। तिर्यग्योनितः समा-
गतत्वात् क्षुधावेदनीयकर्मोदयाच्च पौरुषीप्रत्याख्यानमपि न भवति। तदा गुरुभिः प्रोक्तम्—'त्वं क्षमामङ्गीकुरु। तेन
सर्वतपःफलं प्राप्स्यसि'। ततः प्रातरेवासौ मुनिर्गंडुकमितं कूरमश्नाति। ततो लोके कूरगडुकमिति नाम जातम्। अथ
तत्र गच्छे चत्वारः साधवस्तपस्विनः सन्ति। एको मासोपवासी। द्वितीयो द्विमासोपवासी। तृतीयस्त्रिमासोपवासी।
चतुर्थश्च चतुर्मासोपवासी। ते सर्वे अयं नित्यभोजीतिकृत्वा तं निन्दन्ति।
एकदा शासनसूरी एत्य कूरगडुकमुनिमानमत्। साऽनेकधा स्तुतिं विधाय सर्वसाधुसमक्षं प्राह—"अत्र गच्छे संप्र-
तिदिनादागामिसप्तमदिने एको मुनिः प्रथमं केवलज्ञानं प्राप्स्यति"। ततस्तैः क्षपकैः प्रोक्तं—'हे देवि ! अस्मानतिक्रम्यैनं
कथमवन्दथाः ?'। सा बभाषे—'अहं भावतपस्विनं वन्दे' इत्युक्त्वा सा गता। अथ सप्तमे दिने कूरगडुः शुद्धान्नमा-
नीय गुरोस्तेषां तपस्विनां चादर्शयत्। तदा क्रुधा ज्वलतां तपस्विनां मुखे श्लेष्मागतः। तैरशने क्षिप्तः। ततः कूरगडुर्दध्यौ—
"धिङ्मां प्रमादिनं स्वल्पतपःकर्मोज्झितं सदा। वैयावृत्त्यमपि ह्येषां मया कर्तुं न शक्यते॥ १॥"
इत्याद्यात्मनिन्दां कुर्वन् निःशंकतया तदशनमाददानः शुक्लध्यानपरः केवलज्ञानं प्राप्तः। तदा सुरा महिमानं चक्रुः।
अथ ते क्षपका दध्युः—'अहो ! अयं भावतपस्वी सत्यः, वयं तु द्रव्यतपस्विनः'। इति विचार्य ते चत्वारोऽपि केवलिनं
क्षामयामासुः। एवं त्रिकरणविशुद्ध्या क्षमयतां तेषामपि चरमज्ञानं प्रादुर्बभूव। क्रमात् पंचापि मोक्षनगरं प्रापुः।

कंठ्यः । अत्रार्थे कूरगडुकमुनेः प्रबन्धः । स चायम्—

विशालायामेक आचार्यशिष्यो मासक्षपणकपारणे एकेन क्षुल्लकेन समं बहिर्भूमिं व्रजन् प्रमादतो भेकीं पादेन हत-
वान् । तद्वीक्ष्य क्षुल्लकस्तदा मौनं चकार । ततः प्रतिक्रमणे तत्पापं नालोचितं तपस्विना । तदा क्षुल्लकः प्राह—'अहो
तपस्विन् ! तदघं त्रिशुद्ध्या कथं नालोचयसि ?' । स दध्यौ—'अयं दुरात्मा मां साधुसमक्षं विगोपयति, तदेनं हन्मि' ।
इति विचिन्त्य तं हन्तुं दधावे । क्रोधान्धोऽन्तराले स्तंभेनास्फालितो मृत्युमवाप । ज्योतिर्देवो जातोऽसौ विराधितव्रत-
त्वात् । ज्योतिष्केभ्यश्च्युतः स देवताधिष्ठितः सर्पो दृग्विषाहिकुलेऽजनि । तत्कुलेऽन्ये सर्पा अनालोचितपापोत्पन्नजाति-
स्मृत्या सर्व आहारशुद्धिं कुर्वन्ति । तद्वीक्ष्यायमपि मुनिभवकृतगवेषणमस्मरत् ।

जातजातिस्मृतिस्तेन सोऽथ प्राणी न भस्मसात् । भवतु मद्दृशा नेति निर्ययौ दिवसे बिलात् ॥ १ ॥

रात्रावपि प्रासुकं पवनमेवाश्नाति । इतश्च कुंभनृपसुतः सर्पेण दष्टो मृत्युमाप । तेन सर्पाणामुपरि क्रोधं वहन्नृपः सर्प-
हिंसामकारयत् । कश्चित् सर्पहिंसां कृत्वा लाति, तस्य नृपो दीनारं ददाति । तदा केचन सर्पाकर्षकविद्यां पठन्ति स्म ।
एकदा केनचित्तद्बिलसमीपे सा विद्या भणिता । तेन स सर्पस्तत्र स्थातुमक्षमो दध्यौ—'मां दृष्ट्वा जीवा मा म्रियन्ताम्'
इति विमृश्य पुच्छं बहिः कृतं । हिंसकैस्तच्छिन्नं । एवं सर्पः सर्वोऽपि शकलीकृतः । अहिर्दध्यौ—

"देहदंभेन दुष्कर्म तवेदं ननु खंड्यते । रे जीवाधिसहस्वैतां कल्याणायायतौ व्यथाम् ॥ १ ॥"

ततः स दन्दशूकः कुंभनृपराज्ञीकुक्षाववातरत् । नागदेवेन नृपाय स्वप्नं दत्तम्—'अतः परं सर्पघातो न कार्यः, तव

गोपो निशम्य श्लोकं तं पूर्णं राज्ञो न्यवेदयत् । समस्येयं मयापूरि सधैर्यमिति सोऽवदत् ॥ १ ॥
न मनो विस्मितं राज्ञो निर्बन्धे सत्यमाह सः । श्रुत्वा तत्तत्र गत्वा तं क्षमयामास पार्थिवः ॥ २ ॥
स्वस्वापराधं निन्दन्तौ गर्हन्तौ च परस्परम् । तौ क्ष्माधिपती वार्तां चिरं प्रीत्या वितेनतुः ॥ ३ ॥

अत्रान्तरे कश्चित् केवलज्ञानी तत्राययौ । तस्य पुरः सम्यक् निजनिजस्वरूपं ताभ्यां प्रोक्तं । केवली प्राह—'युवयोरघं शत्रुञ्जयं विनातितपोभिरपि न यास्यति' । इति श्रुत्वा शत्रुंजयादितीर्थयात्रां कृत्वा भावगृहीतसंयमौ द्वावपि हत्यादिपापानि हत्वा शत्रुञ्जयाचले सिद्धिं प्रापतुः ।

श्रीतीर्थसेवान्तिमभूषणस्य, निशम्य शंसां श्रवणेन नित्यम् ।
भव्या हि हित्वा कुविकल्पजालं, कुर्वन्तु सेवां शुभतीर्थकस्य ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे चत्वारिंशत्तमं व्याख्यानम् ॥ ४० ॥

॥ अथैकचत्वारिंशत्तमं व्याख्यानम् ॥

अथ सम्यक्त्वपञ्चकाधिकारो विभाव्यते—

शमैः शाम्यति क्रोधादीन् अपकारे महत्यपि । लक्ष्यते तेन सम्यक्त्वं तदाद्यं लक्षणं भवेत् ॥ १ ॥

क्रमाद्गुस्तपतपोभिरुत्पन्नतेजोलेश्यः क्ष्मां विजहार । अथ स खगोऽपि मृत्वा भिल्लः संजातः । स विहरन्तं तं मुनिं वीक्ष्य संजातकोपो यष्ट्यादिना तमताडयत् । भिक्षुरप्यात्मनोऽनाचारं विस्मृत्य लेश्यया भिल्लमदीदहत् । भिल्लोऽपि विपद्य क्वापि कानने केसरी जातः । तत्रापि ऋषिः पुच्छमाछोटयन्तं तममारयत् । तदनु द्वीपी जातस्तमप्यमारयत् । ततः संमुखधावनाज्जातसंढं, ततः स्वदेहे दशन्तं फणिनं—

प्राग्वत्तान् हतवान् साधुः संजातो ब्राह्मणस्ततः । निन्दां कुर्वन् हतः क्वाहो निर्विवेकस्य संवरः ॥१॥
हत्यासप्तकमित्येष निर्ममोऽपि विनिर्ममे । योगीशोऽपीति पापानां कर्मणां धिग्विजृंभितम् ॥ २ ॥
द्विजो वाणारसीपुर्यां महाबाहुर्नृपोऽभवत् । यथाप्रवृत्तिकरणात् शुभकर्मोदयोन्मुखः ॥ ३ ॥

स नृपो गवाक्षस्थोऽन्यदा कञ्चन संयतं प्रेक्ष्य जातिस्मृतेर्भवसप्तकं ज्ञातवान् । 'अहो ! तस्य मुनेरघहेतुकोऽहमजनि इति विमृश्य तस्य तत्परिज्ञानाय श्लोकार्धं चकार—

"विहंगः शबरः सिंहो द्वीपी संढः फणी द्विजः" । अन्त्यार्धं पूरयेत्तस्य लक्षमित्युदघोषयत् ॥ १ ॥

सर्वे जनास्तं पेठुः । परं श्लोकार्धं कोऽपि न पूरयति । अन्यदा स एव मुनिस्तत्रागात् । मुनिना गोपेनोच्चीयमानः श्लोकखंडः शुश्रुवे । क्षणं विमृश्य ज्ञातोत्तरार्धं तमपूरयत्—

'येनामी निहताः कोपात् स कथं भविता हहा ।'

मिथ्यात्वं नात्याक्षीत् । एकदा तीर्थयात्रायामुद्यतं तं माता स्माह—"हे वत्स ! लौकिकतीर्थगंगागोदावरीत्रिवेणीसंगमप्रयागैर्जलदर्भादिस्नानेनात्मनो हिंसासत्यस्तेयादिसंभवं मालिन्यं न याति" । इत्यादि बहु शिक्षितोऽप्यसौ यदा न निवर्त्तते तदा तद्बोधनायैकां कटुं तुंबिकां दत्वा एवमूचे—"हे वत्स ! सर्वेषु तीर्थेषु आत्मानमिव विधिना इमां तुंबिकामपि स्नापयेथाः, एतत् मदुक्तं त्वया विधेयं" । तदंगीकृत्य यथारुचिततीर्थेषु गत्वा मात्रोक्तं विधाय मुंडितमुंडः प्रभूतमुद्रांकितवाहुदंडः स्वपुरमागात् । विनयेन मातुः पादौ नत्वाऽलाबुव्यतिकरं चाभिधाय भोक्तुमुपविष्टस्य तस्य स्थाले तस्यास्तुंबिकायाः शाकं विधाय माता पर्यवेषयत् । सोऽपि तं शाकमास्वाद्य 'अहो ! अखाद्यं विषभूतं चैतत्' इति वदन्तं तं माता बभाण—"हे पुत्र ! या तुंबिका तीर्थजलैः स्नपिता, तस्या अपि शाके कटुत्वं कुतः ?" । स प्राह—'हे मातः ! जलैर्मज्जिताया अस्या आन्तरकटुत्वं कथं याति' । सावोचत्—"हे जड ! यद्यस्याः कटुकत्वदोषो न गतस्तदा हिंसामृषावादस्तेयमैथुनादिजनितमान्तरमात्मनि लग्नमघजालं जलस्नानेन कथं याति ?" । इति मात्रोक्तं सत्यं मत्वा गोविन्दो, मात्रा सह सुगुरोः पार्श्वे गत्वा श्रावकत्वमङ्गीकृत्य क्रमाच्छत्रुञ्जयतीर्थे सिद्धिसुखमवापेति ।

अन्योऽपि प्रबन्धः प्रतन्यते—श्रावस्त्यां धात्रीशस्त्रिविक्रमोऽभवत् । सोऽन्यदा कानने नीडनिवासिनं कटु रटन्तं पक्षिणमवेक्ष्य दुष्टशकुनबुद्ध्या तं जवाज्जघान । भूमौ पतितं त्रस्यन्तं तं पतत्रिणमवेक्ष्य संजातसानुतापः पुरो व्रजन् महर्षिणं दृष्ट्वा तं प्रणम्याग्रे तस्थौ । तदा मुनिनाऽहिंसाधर्मवर्णनं कृतम् । तच्छ्रुत्वा नृप एवं दध्यौ—"अहो ! मया विजने कृतमनेन ज्ञातम् । अतस्तदघप्रणोदायैतादृशज्ञानिनोऽन्तिके दीक्षां गृह्णामि" । ततस्तृणवत्त्यक्तराज्यभारोऽनगारो जातः ।

जिनेषु जक्तिमच्चेता जीर्णश्रेष्ठी वणिग्वरः । कल्पं द्वादशमं जुक्त्वा क्रमाच्छिवमुपेष्यति ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंजे एकोनचत्वारिंशत्तमं व्याख्यानम् ॥ ३९ ॥



## ॥ अथ चत्वारिंशत्तमं व्याख्यानम् ॥ ४० ॥

। अथ पञ्चमं जूषणं प्रोच्यते ।

तीर्थानां सततं सेवा संगः संविग्नचेतसाम् । कथिता तीर्थसेवा सा पञ्चमं बोधिजूषणम् ॥ १ ॥

तीर्यते संसारसागरोऽनेनेति तीर्थं श्रीमच्छत्रुञ्जयाष्टापदादिप्रमुखं तस्य नित्यं सेवनाऽश्रान्तयात्राकरणं चेति शेषः । संविग्नचेतसां साधूनां संगः संसर्गः । यतः—

साधूनां दर्शनं पुण्यं तीर्थजूता हि साधवः । तीर्थं फलति कालेन साधवस्तु पदे पदे ॥ १ ॥

इत्युक्तम् । अतः सुतीर्थसेवनं महते गुणाय कल्पते । न पुनरप्रशस्ततीर्थसेवनम् । शेषं कंठ्यं । अत्रार्थे प्रबन्धोऽयम्—

न श्लाघ्यतीर्थैरमलीजवन्ति, जीवा डुरन्तैर्डुरितैः प्रलिप्ताः ।
मिष्टा सुतीर्थे स्नपितापि मातुर्वाग्भिस्तनूजेन न तुंबिकासीत् ॥ १ ॥

विष्णुस्थले परमार्हती गोमती सार्थवाही । तस्याश्च गाढमिथ्यादृष्टिर्गोविन्दः सुतः । मात्रा जैनधर्मे प्रतिबोधितोऽपि

मिन् ! मद्गृहे पारणकमद्य कर्तव्यम्' । इत्युक्त्वा गतः । परं प्रभुस्तु नायातः । द्वितीयेऽह्नि षष्ठपारणकं वितर्क्य जगद्बन्धुं नत्वाऽवोचत्—'हे कृपावतार ! अद्य मदोको मां च पुनातु' । तदा मौनेन स्वामी संस्थितः । एवं प्रत्यहमागत्य जिनेशं निमंत्रयामास । अथ चतुर्मास्यन्ते दध्यौ—'अवश्यमद्य जिनपारणकदिनं' । ततोऽवादीत्—"हे दुर्वारसंसारामयधन्वन्तरे ! मां कृपालोचनाभ्यामवेक्ष्य युष्माभिर्मत्प्रार्थना मनस्यवधार्या" । स्तुत्वेति गृहमगात् । मध्याह्ने स्थालगृहीतमुक्ताफलो वर्धापनाय गृहद्वारे स्थित इति दध्यौ—"अत्रैष्यन्तं विश्वबन्धुं सपरिच्छदोऽहं वन्दिष्ये । ततो गृहस्यान्तः आनेष्ये । ततो वरान्नपानैः प्रतिलाभयिष्ये । शेषमुद्धरितं धन्यंमन्यः स्वयं भोक्ष्ये" । एवं मनोरथश्रेण्यारूढेन तेन द्वादशस्वर्गयोग्यं कर्म समर्जितम् । इतः श्रीत्रैशलेयोऽभिनवश्रेष्ठिगृहे भिक्षार्थमगमत् । भुक्तकालातिक्रान्तत्वात्तेन कुल्माषा दापिताः । तद्दानतः पञ्च दिव्यानि जज्ञिरे । जीर्णश्रेष्ठी दुन्दुभिध्वनिं निशम्य दध्यौ—'धिग्माम्, अधन्योऽहं, यन्मद्गृहे प्रभुर्नायातः' इति ध्यानभङ्गस्तस्याजायत ।

अथैकदा कस्यचिज्ज्ञानिनो मुनेरग्रे भूपेनोक्तम्—"भगवन् ! मम नगरं धन्यं, यत्र श्रीवीरपारणककारयिता भाग्यवानभिनवश्रेष्ठी वसति" । तदा मुनिनोक्तम्—"मैवं वद । द्रव्यभक्तिस्तु तेन कारिता । परं भावनया भक्तिं जीर्णश्रेष्ठी व्यधात् । अतः स एव पुण्यवान् ।

किं चान्यद्यदि नाश्रोष्यत्तदासौ देवदुन्दुभिं । ततस्तदैव संप्राप्स्यत् केवलज्ञानमुज्ज्वलम् ॥१॥

इति गुरुवाक्यतो नृपादयो देवगुरुभक्तिषु सादराः स्वस्थानं जग्मुः । इति ।

रूवविणिज्जियसुरवरतरुणि, रङ्गरससायरतारणतरणिं ।
तणुपहदासीकयनवतरणिं, तं तं सामिय हरइ स रमणिं ॥ २ ॥"

तद्दुःखार्तैः पौरैर्नृपो विज्ञप्तः । ततो नृपः स्वयं गवेषयन् पञ्चमेऽह्नि निशि गन्धस्नेहतांबूलादि गृह्णन्तं तं चेष्टया चौरं ज्ञात्वा तत्पृष्ठे चलन् वन्यगुप्तगृहे शिलामपसार्य प्रविशन्तं स्वखड्गेन तच्छिरश्चिच्छेद । ततो नृपः पौरानाकार्य स्वं स्वं वस्तु दत्तवान् । तदैका कामिनी कार्मणेन तस्मिन्नस्थिमज्जानुरक्ता काष्ठभक्षणोत्सुका जाता । परं वल्लभं नेच्छति । मंत्रज्ञैस्तद्भर्तुः पुरः प्रोक्तं—"यद्येनां परिव्राजकास्थीनि पयसा प्रक्षाल्य पाय्यते, तदा तस्मिन् गतस्नेहा स्यात्" । तेन तथा कृतं, ततो निजभर्तरि सस्नेहा जाता । अत्रायमुपनयः—

यथा कृतोऽयं कमनीयतन्व्या, महानुरागः परिव्राजकेऽस्मिन् ।
तथैव धर्मे जिनदेशिते हि, करोतु रागः शिवव्यक्तिहेतुः ॥ १ ॥

अत्रार्थेऽन्यो जीर्णश्रेष्ठिप्रबन्धः प्रोच्यते—

ध्यातः परोक्षेऽपि जिनस्त्रिभक्त्या, जीर्णाभिधश्रेष्ठिवदिष्टसिद्ध्यै ।
सिन्धुप्रवृद्ध्यै कुमुदौघलक्ष्म्या, भवेच्च तुष्ट्यै विधुरभ्रगोऽपि ॥ १ ॥

विशालाकानने श्रीवीरः कृतचतुर्मासीतपाः प्रतिमया तस्थौ । तत्र तन्नगरजीर्णश्रेष्ठी प्रभुमवेदय व्यजिज्ञपत्—'स्वा-

हि क्कापि पापिनां समीहितसिद्धिर्नवति । द्वादश वर्षाणि यावदागमश्रवणश्रावणधर्मक्रियाकरणादिकं सर्वं निरर्थकं जातं अजव्यत्वात् । अथोदायिनृपतिस्तु तादृक्क्रियाकौशल्यासेवनात् सुरपुराजरणं बजूव । तद्राज्ये नन्दनृपोऽजूदिति ।

इत्थं श्रीमडुदायिनो वसुमतीजोक्तुर्नृपस्याखिलं, चित्रं चारु चरित्रमत्र सुतरां कर्णे निधायाजवत् ।
श्रीमज्जैनविधौ बुधाः कुशलतामासूत्र्य संजूष्यतां, सम्यक्त्वं जवतां यथेप्सितरमा सानन्दमालिंगति ॥१॥

॥ इत्युपदेशप्रासादे तृतीयस्तंजेऽष्टात्रिंशत्तमं व्याख्यानम् ॥ ३८ ॥

## ॥ अथैकोनचत्वारिंशत्तमं व्याख्यानम् ॥ ३९ ॥

। अथ चतुर्थं जूषणं प्रोच्यते ।

यथार्हमर्हदादीनां यद्भक्तिरान्तरीयकी । अलंकारश्चतुर्थः स्यात् सम्यक्त्वगुणद्योतकः ॥ १ ॥

सुगमः । जावार्थस्तु कामिनीदृष्टान्तेन स्पष्टयते—

राजपुरेऽमिततेजा नाम नृपोऽजूत् । तत्रैकः परिव्राजको मंत्रवित् विद्याबलेन पौरस्त्रियोऽपहरति । यतः—

“जं जं पासइ जुवमणतेणिं, अलिजलसामलकुंतलवेणिं ।
जालत्थलअट्ठमिससिकरणिं, मयणंदोलितोलियसवणि ॥ १ ॥

लोच्य क्षामणां च कृत्वा कृतचतुर्थप्रत्याख्यानः संध्यायां स्वान्तःपुरस्थपौषधशालायां पौषधं जिघृक्षुर्गुरूनाकारयति स्म । यतः—

**जं किंचि अणुट्ठाणं आवस्सयमाईयं चरणहेऊ । तं करणं गुरुमूले गुरुविरहे ठवणापुरओ ॥ १ ॥**

सूरयोऽपि तेनैव वाह्याचारिणा विनयरत्ननाम्ना समं राजकुलमाययुः । नृपो गुरून्निवन्द्य सूत्रोक्तयुक्त्या पौषधादि ( च वितत्य ) तैः सह प्रतिक्रमणं विधाय कृतप्रथमप्रहरप्रतिलेखनः संस्तारकमास्तीर्य कुर्कुटवत् पादौ प्रसार्य सुष्वाप । सूरयोऽपि धर्ममाख्याय सुषुवुः । अत्रान्तरे स दुष्टात्मा कपटनिद्रया क्षणं सुप्त्वा 'अयमेव पितृवैरनिर्यातनावसरः' इति विचिन्त्य सुप्तस्य राज्ञो गलकन्दरे कंकलोहपत्रिकां न्यधात् । स पापिष्ठः कायचिन्तामिषेण नृपरक्षादक्षैर्नरैरनिवारितो निरगान्नगरादपि नष्टेतरः । ततो राज्ञः कंठपीठाद्रक्तप्रवाहो गुरूणां संस्तारके आपदां पदमिव साक्षात् पस्पर्श । तस्य स्पर्शाद्गुरवोऽपि जजागरुः । ततस्तथाभूतं भूपं वीक्ष्य दध्यौ—"अहो जिनमतमालिन्यमायुगानुतापाकीर्तिजनकं तेन दुरात्मना विनिर्मितं, तदर्हद्दर्शनम्लानिं रक्षामि आत्मव्ययात्" । इति निश्चित्य भवचरिमप्रत्याख्यानं विधाय तां कंकपत्रिकां कंठे दत्वा सूरयो विपद्य स्वर्गं ययुः । ततो जाते प्रत्यूषे राजकुललोकास्तदमंगलं निरीक्ष्य पूच्चक्रुः, तमेव निनिन्दुश्च । पश्चात्स गवेष्यमाणोऽपि क्वापि न लब्धः । तदनु स दुष्टो नंष्ट्वोज्जयिनीं गत्वाऽवन्तीशनृपाग्रे उदायिगृहस्वरूपं यथाजातं जगाद । तच्छ्रुत्वाऽवन्तीशेन निर्भर्त्सितः—"धिग्धिक् त्वां अप्रार्थ्यप्रार्थित हीनचतुर्दशीजात अदृष्टव्यमुख पापिष्ठ ! धर्मछलेन त्वया धर्मं कुर्वाणो हतः । इत्थं धर्मविप्लवकारी त्वं गच्छ मज्जनपदात्" । इत्युक्त्वा निर्वासितः । न

णदेवगुरुवन्दनषड्विधावश्यकाचरणपौषधनिर्मापणादिकृत्यैरात्मानं पावयन् अन्तःपुरकारितपौषधागारे निशायां क्षणं विशश्राम श्रमण इव । इत्थं जिनशासनक्रियास्वत्यर्थं कौशल्यशाल्यजनि ।

अथ रणाङ्गणे व्यापादितस्यैकस्य नृपस्याङ्गभूरेकाकी क्वापि स्थलमलभमानः पितृवैरनिर्यातनार्थमुदायिनृपतिं जिघांसुरुज्जयिनीपुरमेत्यावन्तीशमसेवत । एकदा स सेवको राजानं व्यजिज्ञपत्—"देव ! श्रीमतां यद्यादेशः स्यात्तदा त्वदरिमुदायिनमहं व्यापादयामि, यदि प्रसह्य यूयं मामकं पैतृकं राज्यं साहाय्यं विधाय दापयत" । इति तद्वचः श्रुत्वा जहर्ष नृपः । ततः स नृपस्तद्वचः स्वीकृत्य तस्मै च शंबलं दत्वा तं प्रेषितवान् । स राजसूनुरुदायिनः सेवकोऽभूत् । नित्यं छिद्राण्यन्वेषयति, परं तानि स कदापि नाससाद । नृपौकसि सर्वदाऽस्खलितगमनाञ्जैनमुनीनेव ददर्श । ततः स छदार्थिनो राजकुले प्रवेशार्थी गुरून् वन्दित्वा विज्ञपयामास—'भगवन् ! मामनुगृहाण संसारविरागिणं निजदीक्षादानेन' । तेऽपि महात्मानस्तदभिप्रायमजानानास्तं दीक्षितवन्तः । सोऽपि तदा कंकपत्रासिपुत्रिकां क्वापि संगोप्य मायया द्वादशवर्षाणि व्रतपर्यायं पालयामास ।

**दत्तं प्रधानं श्रामण्यं न तस्यालब्धि केनचित् ( भावना ) । सुप्रयुक्तस्य दंभस्य ब्रह्माऽप्यन्तं न गच्छति ॥१॥**

अस्थिरचित्तस्य तस्यानन्यमनसस्तादृग्व्रतं पालयतोऽपि कूपारसेन रोममात्रमपि न भिन्नं मुद्गशैलस्येव । एकदा सूरयः पाटलीपुरमैयरुः । तदनूदायिनृपो गुरुं नत्वा व्याख्यानं शुश्राव । अन्यदा पर्वदिने राजा प्रातरुत्थाय विधिनावश्यकपूर्वमष्टप्रकारपूजया जिनमभ्यर्च्य गुरूणां पुरो द्विनवत्यधिकचतुःशतस्थानकोपशोभितद्वादशावर्त्तवन्दनकं दत्वाऽतिचाराना-

ङ्गुलिं स्वमुखे निधाय तावत्तस्थिवान्, रोदनादवतस्थे भवान् यावत्। इत्थं रात्रिंदिवं कुर्वाणो मया निवार्यमाणोऽपि नास्थात्तव स तातः"। इति श्रुत्वा संजातपश्चात्तापः कोणिको जनकं पञ्जरादुन्मोचयितुं दंडमादाय यावद्धावति स्म, तावच्छ्रेणिकभूपस्तमुर्ध्वीकृतदंडं कृतान्तमिवायान्तमालोक्यापमृत्योर्भीतस्तालपुटविषमास्वाद्य विपेदे। ततः कोणिकः स्वदुष्टचेष्टितं निन्दन् पितुः स्नेहं स्मरन् सुतरां विललाप। अन्वहं महादुःखमनुभवन् मंत्रिभिश्चंपानगरीं राजधानीं कुर्वन्निर्गतशोकः कोणिकश्चक्रे। ततः कोणिको दक्षिणभरतार्धभूपान् क्रमेण विजित्य स्वबलात् कृत्रिमचतुर्दशरत्नानि कृत्वाऽहं त्रयोदशमश्चक्रवर्ती भरते संवृत्त इति वदन् वैताढ्यभूधरस्य तमिस्रायाः कन्दरायाः कपाटसंपुटं दंडेनाताडयत्। ततः कृतमालदेवेन संजातकोपेन ज्वालया स नृपो भस्मसाच्चक्रे। अथ तद्दहने वृत्ते मंत्रिभिस्तत्पट्टे श्रीमानुदायी बालोऽप्यभ्यषिच्यत। सोऽपि पितुः स्नेहमनुस्मरन् सशोक आस्ते। तच्छोकापनोदाय सचिवैरन्यां राजधानीं चिकीर्षुभिर्निमित्तवेदिनः सूत्रधारा राजक्षेत्रशुद्ध्यै प्रस्थापयाञ्चक्रिरे। तेऽप्युदयिनीमवनीं गवेषयन्तो गंगातटस्थार्णिकासुतमहामुनिकरोटिभुवि पाटलीतरुं स्वयमागत्यपतत्पतङ्गस्वादनलालसवदनान् कीरान् निरीक्ष्य विमृष्टवन्तः—"यथाऽमी शलभाः कीराणामाहारार्थमागच्छन्ति, तथैतन्नगरस्वामिनो वैरिश्रियोऽनायासेन भोग्यतामुपयास्यन्तीति" विमृश्य तत्रैव राजधान्याः सूत्रं दत्वा पाटलीतरुनाम्ना पाटलीपुरमित्यभिधां व्यधुः। तत्र श्रीउदायी नृपः स्वयमेवैत्य राज्यं पालयति स्म। स्थानस्थस्यापि तस्य प्रतापतपनोदयसहनेऽक्षमा वैरिणो घूकत्वं ययुः। स दिने दिने दानधर्मं चिरंतनं विततार धरायाम्। अन्यच्च स सद्गुरुचरणमूलोपात्तद्वादशव्रतखंडनाय कुतोऽपि न प्रावर्तत। स दृढसम्यक्त्वश्चतुष्पर्व्यां चतुर्थकर-

## ॥ अथाष्टात्रिंशत्तमं व्याख्यानम् ॥ ३८ ॥

। अथ तृतीयं भूषणं प्रोच्यते ।

### कौशल्यं विद्यते यस्य क्रियास्वावश्यकादिषु । द्वितीयेतरमाचर्यमेतत्सम्यक्त्वभूषणम् ॥ १ ॥

सुगमः । अत्रार्थे उदायिनृपस्य ज्ञातम्—

राजगृहे कोणिकनृपस्य स्त्रिया पद्मावत्या पूर्णमासे सुतः प्रसूतः । तस्याङ्गभुव उदायीति नाम विदधे । अन्यदा वामोरुमूले उदायिनं निवेश्य भोजनायोपाविशद्दिशामीशः । अर्धभुक्ते स बालः सर्पिर्धारामिव मूत्रधारामसूत्रयत् भाजनान्तराले । राजापि वात्सल्यवशतो न तं मनागपि चालयामास 'मा भूदस्य मूत्रनिरोधेनगदसंभवः' इति मत्वा । ततस्तन्मूत्रसंसक्तं भोजनं करेणोत्सार्य तथैव रसवतीमास्वादयामास । अहो मोहविलसितम् । अथ च स्नेहमोहितो महीपतिस्तस्मिन्नवसरे स्वमातरं चेलणादेवीमवादीत्—"अंब ! यादृक् स्नेहोऽमुष्य सुतस्य विषये ममास्ति, न तादृक् कस्याप्यभूत् भवति भविष्यति च" । इति श्रुत्वा चेलणापि स्माह—"किं कियांस्तव स्नेहोल्लासः ? यादृक् त्वद्विषये तव पितुरासीत्तस्य कोट्यंशोऽपि तव न त्वत्तनये" । 'मातः कथं' इति कोणिकेनोक्ता सा प्रोचे—"वत्स ! गर्भस्थे त्वयि पितुरंत्रास्वाददोहदो ममाजनि । तस्मिन् दोहदेऽभयकुमारेण पूरिते 'पितुरनर्थहेतुरयमङ्गजः' इति जातमात्रस्त्वं मया परिष्ठापयांचक्रे निजोद्यानावनिकायां। तत्र कुर्कुटेन तव कनिष्ठांगुलिः पिछाग्रेण विद्धा। सा च कृमिपातेन पूयक्लिन्नाभूत् । तस्मिन् क्षणे ज्ञातवृत्तस्त्वत्पिता मां निर्भर्त्स्य त्वां वनादानीय स्नेहपरवशो मुक्तापरराजकार्यः कथमप्यतिष्ठन्तं त्वां विलोक्य त्वद-

तत्र चावसरे निःपुत्रो नृपो मृतिमाप्तवान्। प्रधानादिकृतपंचदिव्यानि सुरोक्तदिने तस्य राज्यं ददुः। तस्य साम्राज्ये जातेऽपि केचिदाज्ञां न मन्यन्ते कर्मकरत्वात्। ततः—

देवपालोऽपि तं देवमुपेत्येति व्यजिज्ञपत्। अलमेतेन राज्येन वरं भृत्यत्वमेव मे ॥ १ ॥
देवोऽप्यधात्कुंभकारपार्श्वे मृन्मयहस्तिनम्। कारयित्वा तमारुह्य व्रजेस्त्वं राजपाटिकाम् ॥ २ ॥

देवपालेन तथा कृते दिव्यानुभावतो मृन्मयस्तंबेरमो गंधसिन्धुरवत् व्रजन् पथि जनानां विस्मयं चकार। तदनु सर्वे तदाज्ञां स्वीचक्रुः। पूर्वश्रेष्ठिनं नृपः प्रधानपदे न्यवेशयत्। ततस्तद्बिंबं निजकारिते तुंगप्रासादे संस्थाप्य त्रिकालजिनार्चां कुर्वन् जिनशासनप्रभावनामकरोत्। अथ नृपः प्राच्यनृपसुतां परिणीतवान्। एकदा सा वातायनस्था कंचिद्वृद्धं नरं काष्ठान्युद्वहन्तं वीक्ष्य क्ष्मापतेः पुरो मूर्छां गता। शीतोपचारेण चैतन्यं प्राप्ता। ततस्तं वृद्धमाकार्य नृपस्य पुरतः सा स्वस्वरूपं जगाद—"हे स्वामिन्! अहं गतभवे एतस्यैव प्रियाभूवम्। एतद्बिंबार्चनादत्र भवे राजन् त्वत्प्रिया जाता। प्राग्भवे मयाऽस्य बहूक्तं, अपि नानेन धर्मोऽङ्गीकृतः। तेनाद्याप्यस्येदृश्यवस्था दृश्यते"। तच्छ्रुत्वा वृद्धोऽपि किञ्चिद्धर्मरतोऽभवत्। अथ देवपालः परमात्मपूजाप्रभावनादिभिस्तीर्थकृत्कर्म बबन्ध। प्रान्ते प्रव्रज्यामादाय स्वर्गभागभूत्।

रंकमात्रमपि तादृशो भवे वाजिवारणचमूयुतराज्यम्।
प्राप्य तज्जिनमतप्रभावनाद् देवपाल इति तैर्थ्यमार्जयत् ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे सप्तत्रिंशत्तमं व्याख्यानम् ॥ ३७ ॥

## ॥ अथ सप्तत्रिंशत्तमं व्याख्यानम् ॥ ३७ ॥

। अथ द्वितीयं भूषणमाह ।

**अनेकधर्मकार्येण कुर्यात्तीर्थोन्नतिं सदा । प्रभावनाख्यं ज्ञेयं द्वितीयं सम्यक्त्वभूषणम् ॥ १ ॥**

सुगमार्थः । भावार्थस्तु देवपालभूपालप्रबन्धादवसेयः—

अचलपुरे सिंहनृपमान्यो जिनदत्तश्रेष्ठी । तस्य भृत्यो देवपालः सर्वदा कानने गोकुलं चारयति स्म । अन्यदा पर्जन्यकाले सरितस्तटे युगादिजिनमार्तण्डबिंबं व्यलोकत । ततः स तृणकुटीरं कृत्वा मूर्तिं सुमनोभिरभ्यर्च्य मध्ये निवेशयेति नियमं जग्राह—'प्रत्यहं विभुभक्तिमृते न मया भोक्तव्यं' । ततो निजास्पदं जगाम । एकदा वर्षारंभेण नद्याः पूरे जाते तत्र गन्तुमशक्तः सशोकः स्वगृहे तस्थौ । तदा श्रेष्ठिना प्रोक्तः—'भो भद्र ! अस्मद्गृहबिंबान्येव पूजय' । तद्वाक्येन कृतजिनपूजोऽपि स कर्मकृन्न भुंक्ते स्म । अथाष्टमेऽह्नि कृशीभूते पयःप्लवे प्रगे पूजार्थं ययौ । तत्र चैत्यान्तिके भयंकरं सिंहं दृष्ट्वा तं श्रृगालवदवगण्य्य देवं प्रपूज्यावोचत्—

**"त्वद्दर्शनं विना स्वामिन् ममाभूत् सप्तवासरी । अकृतार्था यथारण्यभूमिरुहफलावलिः ॥ १ ॥"**

इति तत्सत्त्वभक्तिभ्यां प्रीतो देवो जगौ—'भद्र ! अभीष्टं वरं वृणु' । देवपालोऽभ्यधाद्राज्यं मह्यं देहि सुरोऽब्रवीत् । सप्तमे दिवसे राज्यं तव भावि न संशयः ॥ १ ॥

तुर्भुजः कमनीयकामिनीभिर्वृतो मधुसूदनो जज्ञे । चतुर्थे वासरे समवसरणस्थं तीर्थकररूपं विधाय चतुर्थे गोपुरे तस्थौ । तथापि सा नंतुं नागात् । ततस्तत्समाकरणाय कञ्चिन्नरं प्रैषीत् । सा तं नरं प्रत्युवाच—"भो भद्र ! नायं जिनः । कोऽपि कार्पटिकः पञ्चविंशतितमजिनाख्यया लोकान् वञ्चयति" । एवं मनागपि सा न चचाल । ततोऽम्बडः श्राद्धवेषभृत्तद्गृह आगत्य तया कृतबहुसन्मानस्तां प्राह—"हे सुलसे ! त्वं पुण्यवत्यसि । यतो मदास्येन परमात्मा स्वयं धर्मलाभं ददाति" । एवं श्रुत्वा समुत्थाय सा भक्त्या प्रभुं स्तौति स्म—

"मोहमल्लबलमर्दनवीर, पापपंकगमनामलनीर ।
कर्मरेणुहरणैकसमीर, त्वं जिनेश्वरपते जय वीर ॥ १ ॥"

इत्यादिस्तुतिं कुर्वतीं तां प्रशस्य स स्वस्थाने गतः । सा सुलसा शीलगुणैः शोभमाना धर्ममाराध्य स्वर्गं जगाम । ततश्च्युत्वाऽत्रैव भरतखंडे भाविन्यां चतुर्विंशतौ निर्ममाख्यः पञ्चदशमो जिनो भविष्यति ।

श्रुत्वैवं सुलसाचरित्रमनघं श्रीवर्धमानप्रभोः, स्थैर्यौदार्यमहार्थतापरिगतं विश्वत्रयाश्चर्यदम् ।
भव्या यूयमपि प्रथां नयत तद्धर्मे स्थिरत्वं यथा, सम्यक्त्वेन विभूषिताः शिवरमाश्लेषात्सुखं विन्दत ॥१॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे षट्त्रिंशत्तमं व्याख्यानम् ॥ ३६ ॥

अत्र शत्रुगृहे देव न स्थातुं युज्यते चिरम्। इति तत्प्रेरितो ज्ञात्वा चेलणां व्याघुटन्नृपः ॥ १ ॥

ततः सुज्येष्ठा रत्नसमुद्गकमादायागता। तत्र कमपि नैक्षिष्ट। तदोच्चैश्चेलणाऽपह्रियत इति पूच्चकार। तदा चेटकनृपसैन्यं तत्पृष्ठे गतं। तत्राहवे सुलसैकपुत्रे वैरिणा हतेऽन्ये एकत्रिंशत्पुत्रा द्रुतं मृताः। नृपोऽपि द्रुतं स्वपुरं प्राप्य चेलणामुपायंस्त।

अथ नागसुलसे स्वसुतानाममंगलं श्रुत्वा भृशं रुरुदतुः। तदाऽभयोवक्—

"अपि जैनमतार्थवेदिनामपि संसारिकभावनाभृतां।
भवतां नहि शोकसागरे, पतितुं युक्तमिवाविवेकिनाम् ॥ १ ॥
कुशकोटिगतोदकबिन्दुवत्, परिपक्वद्रुमपत्रवृन्दवत्।
जलबुद्बुदवच्छरीरिणां, क्षणिकं देहमिदं च जीवितम् ॥ २ ॥"

इति श्रुत्वा तौ दम्पती गतशोकावभूताम्।

इतश्चंपायां श्रीवीरं नत्वाऽम्बरूपरिव्राजको राजगृहं पुरमचलत्। तदा जिनेनोक्तं—'सुलसाया धर्मलाभोऽस्मदीयस्त्वया वाच्यः'। तथेति गदित्वा स तत्रागत्य दध्यौ—'अस्याः स्थैर्यं परीक्षे'। ततः स प्रथमदिने ग्रामस्य पूर्वगोपुरे वैक्रियशक्त्या चतुर्मुखो हंसवाहनोऽर्धांगसावित्रीभृत् साक्षात् ब्रह्मा बभूव। तदा तां विना सर्वे पौरास्तं नंतुं समाजग्मुः। द्वितीयेऽह्नि वृषभवाहनो गिरिसुतामंकिताधाङ्गो भस्माञ्चितविग्रहः कंठेकालो जातः। तृतीयेऽह्नि तार्क्ष्यारूढश्च-

तं देवं सस्मार । तदा स सुरो व्यथां संहृत्य प्राह—"त्वयाऽकार्यं कृतं, तेन तव युगपद्द्वात्रिंशत्पुत्रा भविष्यन्ति—

परं द्वात्रिंशदप्येते समानायुष्कतावशात् । समकालं विनंक्ष्यन्ते दुर्लंघ्या भवितव्यता ॥ १ ॥

यतः—गुणाभिरामो यदि रामभद्रो, राज्यैकयोग्योऽपि वनं जगाम ।
विद्याधरश्रीदशकन्धरश्च, प्रभूतदारोऽपि जहार सीताम् ॥ २ ॥"

इत्युक्त्वा देवो गतः । अथ पूर्णे काले सा द्वात्रिंशतं सुतान् प्रासूत । ततो नागस्तेषां जन्मोत्सवं चक्रे । क्रमात्ते यौवनं प्राप्ता नृपोपजीविनो बभूवुः ।

इतः श्रेणिकश्चेटकपुत्रीसुज्येष्ठारूपं चित्रन्यस्तं तापसीसमानीतं दृष्ट्वा तामङ्गीकर्तुकामोऽभूत् । तदाऽभयो गान्धिकवेषेण तत्र गत्वा भूपान्तःपुरपार्श्वे आपणममंडयत् । यदा सुज्येष्ठाचेटी तत्र क्रयाणकं गृहीतुमागच्छति, तदाऽभयः श्रेणिकरूपपट्टं पूजयति । चेट्या अन्यदा पृष्टः—'कस्येदं रूपं ?' । तेन 'श्रेणिकस्येत्युक्तं' । सा चित्रफलकं गृहीत्वा सुज्येष्ठाया अदर्शयत् । ततः सुज्येष्ठा पञ्चबाणार्ता जगौ—'तथा त्वं कुरु, यथा मम स पतिः स्यात्' । चेट्याऽभयस्याग्रे उक्तं । ततस्तेन तदन्तःपुरतः पितुर्नगरं यावत् सुरंगां कारयित्वा पितुर्ज्ञापितम्—'अमुकदिने त्वया सुरंगपथेनागन्तव्यं' । ततो नृपे समागते सुज्येष्ठा यावच्चलितुकामाऽभूत्तावच्चेलणापि जगौ—'ममापि स एव स्वामी' । ततो द्वे अपि पुत्र्यौ तन्मुखे समागते । कियद्दूरं गतेषु तेषु सुज्येष्ठा स्वरत्नकरंडकग्रहणाय गमनोत्सुकाऽवक्—'भगिनि ! मां विनाऽग्रे न गन्तव्यं' । इत्युक्त्वा सा गता ( करण्डकानयनाय ) । इतः सौलसेया नृपं प्राहुः—

कंठ्यः । अत्रार्थे सुलसाचरित्रं कीर्त्यते—

तद्दर्शनं किमपि सा सुलसाप येन, प्रादाज्जिनोऽपि महिमानममानमस्यै ।
नैर्मल्यतः शशिकला न च केतकी च, माला तुलां च हरमूर्ध्नि बभार गंगा ॥ १ ॥

अनेकचातुर्वर्ण्यजनसंभृते महेभ्यविराजिते रम्ये राजगृहे श्रेणिको राज्यं कुरुते । तत्र नागसारथिकस्य प्रिया सुलसाभवत् । एकदान्येषां पुत्रान् दृष्ट्वा सशोकं पतिं वीक्ष्य पत्न्या प्रोक्तं—'स्वामिन् ! खेदं मा कुरु । आवयोरीप्सितं धर्मात् फलिष्यति' । ततः सा त्रिसन्ध्यं जिननाथमपूजयत् । ब्रह्मचर्येणाचाम्लानि कुरुते स्म ।

इतस्तस्याः सत्त्वश्लाघावाक्यं शक्रतः समाकर्ण्य हरिणैगमेषी पदातीशः सुरः साधुद्वयरूपं विधायागत्येति तां प्राह—'श्राद्धे ! लक्षपाकतैलं ग्लानचिकित्सार्थं विश्राणय' । ततो हृष्टा साऽन्तः प्रविश्य तैलकुंभं यावदुपाहरत्तावद्दिवौकसा भूमौ पातितः । एवं सप्त कलशा अभज्यन्त तेन दिव्यमहिम्ना । तथापि तस्या अभंगुरं भावं वीक्ष्य सुर आविर्भूय जगाद—"भद्रे ! अहं सुरस्त्वां परीक्षितुमागाम् । तुष्टोऽस्मि । अथ कमप्यर्थं प्रार्थयस्व" । साऽब्रवीत्—

यदि तुष्टोऽसि मे देव तदा यच्छ तनूद्भवान् । सोऽपि द्वात्रिंशतं तस्यै गुटिकाः प्रददौ मुदा ॥ १ ॥

त्वयैकैका भक्ष्या इत्युक्त्वा घटान् प्रकटीकृत्य सुरः स्वर्गं ययौ । तत ऋतुकाले बहुगर्भदुःखसूतिकर्मभीरुः सा द्वात्रिंशल्लक्षणोपेत एक एव पुत्रो भवत्विति ध्यात्वाऽखिला आश्नात् । क्रमाद्बहुगर्भभारभरेण व्यथां प्राप्ता सा कायोत्सर्गेण

निवृत्तं, मुञ्च शलभोचितोद्यमं, चिरं जैनधर्मं कुरु"। इति नृपं सान्त्वयित्वा सूरिः स्वाश्रयमाप। एकदा राज्ञा सूरिः पृष्टः—'भगवन्! को मे पूर्वभवः'। ततो गुरुः प्रातर्भारतीवचसा तं प्राह—'हे भूप! शृणु। त्वं कालिञ्जरगिरेस्तटे शालद्रुमाधोभागे उपवासान्तरितभोजनस्तपस्वी सार्धवर्षशतं घोरं तपस्तस्वायुःप्रान्ते राजाऽभूः। अद्यापि तत्तरोरधस्त्वज्जटाः सन्ति"। इति श्रुत्वा नृपो जटा आनाययत्। तद्दृष्ट्वा जातप्रत्ययः परमार्हतो बभूव। ततो गुरूपदेशान्महता विस्तरेण सिद्धगिरियात्रां कृत्वा दिगंबरगृहीतं गिरिनारतीर्थमवालयत्। क्रमेण राज्यं प्रपाल्य नमस्काराराधनपर उत्तमार्थमसाधयत्। कविभट्टामार्तण्डः सूरिरपि निर्जरस्थानमलंचकार। विशेषेणायं संबन्धः पूर्वसूरिकृतचतुर्विंशतिप्रबन्धप्रकरणतो ज्ञेयः।

दुर्बोध्यमामं नृपतिं प्रबोध्य, द्विजाः कवित्वादिगुणैरधःकृताः।
प्राज्ञेषु चक्री बप्पभट्टिसूरिराट्, कृत्वोन्नतिं प्राप दिवौकसां सुखम्॥ १॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे पञ्चत्रिंशत्तमं व्याख्यानम्॥ ३५॥

॥ अथ षट्त्रिंशत्तमं व्याख्यानम्॥ ३६॥

। अथ पञ्चभूषणवक्तव्यतायामाद्यं भूषणं लिख्यते।

धर्माङ्गान्येभिर्भूष्यन्ते भूषणानीति कथ्यते। सुरादिभ्यो ह्यक्षोभ्यत्वं तत्राद्यं स्थैर्यभूषणम्॥ १॥

कृपया निष्पद्यमानसौधद्वारपट्टे निशि खटिकया प्रतिबोधकाव्यानि लिखितानि। यथा—

"शैत्यं नाम गुणस्तवैव भवति स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्त्यशुचयस्त्वत्संगतोऽन्ये यतः।
किं चातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः॥ १॥
लज्जिज्जइ जेण जणे मइलिज्जइ निअकुलक्कमो जेणं।
कंठट्ठिए वि जीए तं न-कुलीणेहिं कायव्वं॥ २॥"

इत्यादि। प्रातः क्षामोऽपि तत्सदनं प्रेक्षितुं ययौ। अपश्यच्च तानि पद्यानि। व्यमृशच्च—"मम मित्रं विना कोऽन्य एवं बोधयेत्, इदानीं कथमास्यं दर्शये? धिग्मे जन्म सकलंकं"। इति ध्यात्वा यावदग्नौ प्रविशति तत्रैव तावत् राजलोकाभ्यर्थनयागत्य गुरुर्जगाद—"राजन्! चित्तेन निबद्धं कर्म चित्तेनैव विमुच्यते। यद्वा स्मार्तादीन् पृच्छ। स्मृत्यादिष्वपि पापत्यागोपाया अभिहिताः"। राज्ञा स्मार्ता आहूताः। ते प्रोचुः—

अयःपुत्तलिकां वह्निध्मातां तद्वर्णरूपिणीम्। आश्लिष्यन् मुच्यते सद्यः पापाच्चंडालीसंभवात्॥ १॥

इति श्रुत्वा तदालिंगनाय नृपः सज्जोऽभूत्। तदा गुरुणेति प्रोक्तं—"नृप! त्वया संकल्पेन कृतं पापं पश्चात्तापेन

धर्मस्य गुरुरदर्शयत् । धर्मेण दूतः पृष्टः—'तव नृपः कीदृग्रूपः ?' स जगौ—'योऽयं स्थगीधरस्तादृगस्ति' । ततः—

**मातुलिंगं करे बिभ्रत् सैष पृष्टश्च सूरिणा। करे ते किं स चावादीत् 'बीजोरा' इति हि स्फुटम् ॥ १ ॥**
**दूतेन चाढकीपत्रे[1] दर्शिते गुरुराह सः । स्थगीधरं पुरस्कृत्य तुअरिपत्रमित्ययम् ॥ २ ॥**

इत्येवं श्लिष्टेऽर्थे उक्तेऽपि ऋजुत्वेन धर्मेण न ज्ञातम् । तत उद्भ्रायामो राजवेश्यागृहे कंकणं दत्वाऽवसत् । प्रातस्तद्गृहान्निर्गत्य द्वितीयं कंकणं राजद्वारे मुक्त्वाऽगात् । इतो गुरवो धर्मस्य पुरः प्रोचुः—'हे नृप ! नः प्रतिज्ञा पूर्णा, अथ वयं यास्यामः' । कथमिति राज्ञोक्ते 'आम आगच्छत्' इत्यादिस्वरूपं यथाजातमवदत् । तावद्वारवधूप्रतिहाराभ्यां द्वे कंकणे राज्ञोऽग्रे मुक्ते । ततो धर्मः प्राह—'गुरो! अहं वाहितो वचनच्छलात्' । ततो नृपमापृच्छ्यामेन सह सूरिर्गोपशैलमगमत् ।

अन्यदा तत्र गायकवृन्दमाययौ । तत्रैकां मातंगीबालां वाग्मञ्जुलं गायन्तीं दृष्ट्वा मदनज्वरार्त आम उवाच—

**"वक्त्रं पूर्णशशी सुधाऽधरलता दन्ता मणिश्रेणयः, कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमः ।**
**वाणी कामदुघा कटाक्षलहरी सा कालकूटच्छटा, तत् किं चन्द्रमुखि त्वदर्थममरैरामन्थि दुग्धोदधिः॥१॥"**

सूरिणा ध्यातम्—'महतामपि कीदृग्मतिविपर्यासः ? ' । तत उत्थिता सभा । त्रिचतुर्दिनैर्नृपेन पुरस्य बहिः सौधः कारितः 'मातंग्या सहात्र वसामीति' बुद्ध्या । तदभिप्रायज्ञो गुरुर्दध्यौ—'नारकहेतुं कुमार्गं न सेवतेऽसौ तथा कुर्वे' । इति

---

१ आढकीपत्रं भाषायां तुवेरनुं पत्र.

"शस्त्रं शास्त्रं कृषिं विद्यां विना यो येन जीवति ।"

इति समस्या सभायां विदुषामग्रे पपृच्छे । तथापि समस्यामिमां न कोऽपि भूपाभिप्रायेण पूरयति । ततो नृपः पटह-मवीवदत्—'य एतां ममाभिप्रायेण पूरयेत्तस्मै लक्षं स्वर्णटंकं दास्ये' । तदा द्यूतकृतैकेन तत्र गत्वा सूरयः पृष्टाः प्राहुः—

"सुगृहीतं च कर्तव्यं कृष्णसर्पमुखं यथा ॥ १ ॥"

तेनामाग्रे संपूर्णे श्लोके प्रोक्ते राजा तं दुरोदरं आग्रहेण पृष्टवान् 'केनेयं पूर्णीकृतेति' । तदा स यथास्थितमवक् । तच्छ्रुत्वाऽनुतापपरो नृपो गुरूनाकारयितुं प्रधानान् प्रैषीत्, इमां च प्रशस्तिं दत्तवान्—

"छायाकारण सिर धर्यो, पत्त वि भूमि पड़ंत । पत्तहएहु पत्तणं (पत्तत्तणं), वरतरु कांइ करंत ॥२॥"

इत्यादि प्रधानमुखतः श्रुत्वा गुरुराह—"नृपस्येदं युष्माभिः श्राव्यम्—

अस्माभिर्यदि कार्यं वस्तदा धर्मस्य भूपतेः । सभायां छन्नमागत्य स्वयमापृच्छयतां द्रुतम् ॥ १ ॥

जाते प्रतिज्ञानिर्वाहे यथाऽऽयामस्तवान्तिकम् । प्रधानाः प्रहिताः पूज्यैरिति शिक्षापुरस्सरम् ॥ २ ॥

ते मंत्रिणः कन्यकुब्जभूपं गुरूपदिष्टं प्राहुः । तच्छ्रुत्वा सोत्कंठो नृपः करभारूढस्तत्पुरं प्राप । प्रातर्धर्मभूपादिसंकुलायां सभायां स्थगीधररूप आमो भूरिनरैर्युत आगच्छन् दृष्टः । तदा सूरिर्धर्मभूपं प्राह—'एते आमनृपनराः किंवास्मानाह्वातु-मायान्ति । अग्रे स आगतस्तदा सूरीशैः प्रोक्तं—'आगच्छाम' इति सन्मानिते नृपे आसने उपविष्टे दूतं दत्तविज्ञप्तिं

सिद्धसारस्वतः सूरिः प्राह—

"पुव्वविबुद्धेण तए जीसे पच्छाइअं अंगं ॥ १ ॥"

पुनः पदे पदे मन्दं मन्दं संचरन्तीं वीक्ष्य स्माह नृपः—

"बाला चंकमंती पए पए कीस कुणइ मुहभंगं ।"

सूरिः स्माह—"नूणं रमणपएसे मेहलिया छिवइ नहपंती ॥ २ ॥"

तच्छ्रुत्वा नृपतिर्विकृतमुखोऽभून्निरादरश्च । तं गूढकोपं मत्वा स्वाश्रयकपाटे सूरिः काव्यं लिखित्वा व्यहार्षीत् । तच्चेदम्—

"आम स्वस्ति तवास्तु रोहणगिरे मत्तः स्थितिप्रच्युता
वर्तिष्यन्त इमे कथं कथमपि स्वप्नेऽपि मैवं कृथाः ।
श्रीमत्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा
के शृंगारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥ १ ॥"

ततः श्रीगुरुर्गौडदेशं प्राप । तत्र धर्मभूपोऽस्ति । तस्याग्रहात् यावदामराजा स्वयमाकारणाय नायाति तावन्न विहार्यमिति प्रतिज्ञाय सूरयः स्थिताः । अथामस्तत्काव्यं वीक्ष्य दुःख्यभूत् । एकदा वनतो राज्ञा कृष्णसर्पमुखं दृढं मुष्टिमध्ये कृत्वा वाससाच्छाद्य च—

निषिध्य पिता स्वयं शत्रून् हन्ति । ततोऽम्बामनापृच्छ्यात्रागमम्" । तत् श्रुत्वा 'अस्य मानुषं तेजो न, किं तु कोऽपि देवांशोऽयं' इति ध्यात्वा गुरुणोचे—'वत्स ! अस्मत्पार्श्वे तिष्ठ' । ततः स तत्र स्थितः प्रत्यहमनुष्टुप्सहस्रं पठति । तुष्टो गुरुः तत्पितरौ प्रार्थ्य तमदीक्षयत् । तदा पित्रोरभ्यर्थनया तस्य बप्पभट्टिरिति नामाकरोत् । अन्यदा गुरुदत्तदेवीमंत्र-जापात् सरस्वती तस्मै वरं दत्वा तिरोऽधात् । अन्यदा देवकुलस्थबप्पभट्टेरभ्यर्णे गोपगिरेशस्य यशोवर्मनृपतेः पुत्र आमः पितुः शिक्षावशात् क्रुद्धः समागात् । तत्र च स देवकुले बप्पभट्टिपार्श्वे प्रशस्तिकाव्यानि वाचयामास । ततस्तेन सममुपाश्रय आगतः । गुरुणा पृष्टः स आत्मनः संबन्धं जगौ, खट्टिकया च स्वं नाम आम इति ज्ञापितम् । ततो गुर्वा-ज्ञया स बप्पभट्टिना समं शास्त्राणि पपाठ । अन्यदा स मित्रं बप्पभट्टिं प्रोचे—'राज्यं चेल्लप्स्ये तदा तत्तुभ्यं दास्ये' । ततः कियता कालेन प्राप्तराज्येनामेन बप्पभट्टिस्तत्राकारितः । राज्ञा तस्य सिंहासनं दापितं, तदा मुनिर्जगौ—'अस्माकं सूरिपदे जाते सिंहासनं कल्प्यं' । ततो राज्ञा गुरुपार्श्वे तस्य सूरिपदं दापितम् । एकदा नृपः सूरिं प्राह—'स्वामिन् ! राज्यं गृहाण' । सूरिः प्राह—'राजन् ! वयं देहेऽपि निःसंगाः, किं कुर्मो राज्येन ?' । तच्छ्रुत्वा चमत्कृतो राजा गुरूप-देशादष्टोत्तरशतहस्तोन्नतं प्रासादं कारयामास, तत्र च तेन जात्यसुवर्णाष्टादशभारमिता श्रीवीरप्रतिमा स्थापिता ।

अन्यदाऽन्तःपुरे म्लानमुखीं वल्लभां दृष्ट्वा राजाह समस्यां सूरये—

"अज्ज वि सा परितप्पइ कमलमुही अप्पणो पमाएण ।"

रकं बुर्या भिन्दन् पञ्चभिः काव्यैः पञ्चसु दवरकेषु छिन्नेषु स सिक्यकाग्रे विलग्नः । षष्ठकाव्ये भानुः प्रत्यक्षीभूय तद्देहं स्वर्णवर्णमकरोत् । द्वितीयेऽह्नि नृपसदसि सार्मर्षमागत्य बाणो मयूरं प्राह—"हे पतत्रिन् ! सुपर्णस्य पुरस्तव कृष्णास्यस्य का शक्तिः ? । यद्यस्ति तर्हि त्वमपीदृक् चित्रमाविष्कुरु" । स प्राह—"निरामयस्य किमायुर्विदा ? तथापि तव वचःकुंठीकृते सज्जोऽस्मि" । इत्युक्त्वा निजौ पादौ पाणी च बुर्या विदार्य चंडीस्तोत्रं कुर्वन् पूर्वकाव्यस्य षष्ठेऽक्षरे प्रसन्नीकृतचंडीकातः प्रत्युत वज्रसमदेहं समकरोत् । ततो नृपेणातिसन्मानितः ।

इतश्च जैनद्वेषिभिर्नृपोऽभिदधे—"यदि जैनः कश्चिदीदृक्प्रभावविभवो भवति, तदा श्वेतांबराः स्वदेशे स्थाप्यन्ते, नो चेन्निर्वास्यन्ते" । तद्वचनानन्तरं 'मानतुंगाचार्यो निजदेवातिशयं कमपि दर्शयतु' इति राज्ञा भणिते त आचार्याः स्वांगं चतुश्चत्वारिंशन्निगडैर्नियमितं कारयित्वा चतुश्चत्वारिंशत्तमेऽपवरके स्थित्वा सर्वत्र लोहतालकान्यदापयन् । ततो भक्तामरेत्येकैककाव्येनैकैकनिगडादीनि क्रमेण भग्नानि । चरमे काव्ये सूरयो नृपसभामलंचक्रुः । ततः शासनस्य महान् प्रभावोऽजनि ।

। इति मानतुङ्गसूरिज्ञातम् ।

अथान्यो बप्पभट्टिसूरिप्रबन्धस्तन्यते—

मोढरे श्रीसिद्धसेनसूरिर्वीरं नंतुं प्राप्तः । तत्पुरः षड्वार्षिको बाल एकः प्रापत् । सूरिणा पृष्टः स स्वं स्वरूपमुवाच—"अहं पञ्चालदेशे डुंबाधिवास्तव्यबप्पक्षत्रियभट्टीपत्न्योः सुतः सूरपालाख्योऽस्मि । अन्यदा शत्रून् हन्तुं संनह्यन्तं मां

## ॥ अथ पंचत्रिंशत्तमं व्याख्यानम् ॥

। अथ द्वितीयं सातिशयं कविं स्तौति ।

**सातिशयाढ्यकाव्यानां भाषणे कुशलीभवेत् । स ह्यत्र शासने ज्ञेयो विस्मयकृत्प्रभावकः ॥ १ ॥**

स्पष्टः । अत्रार्थे मानतुङ्गसूरेः प्रबन्धोऽयम्—धारायां मयूरबाणाख्यौ भावुकशालकौ पंडितौ मिथः स्पर्धमानौ निजविद्वत्तया नृपसदसि लब्धप्रतिष्ठावभूताम् । कदाचिद्बाणो जामिमिलनाय तद्गृह आगतः । निशि द्वारि प्रसुप्तः । भावुकेन पत्नीं प्रति मानत्यागायोक्तं तद्बाणोऽशृणोत् । यथा—

"गतप्राया रात्रिः कृशतनु शशी शीर्यत इव, प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव ।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो"

इति श्रुत्वा द्वारस्थो बाण आह—

"कुचप्रत्यासत्त्या हृदयमपि ते चंडि कठिनम् ॥ १ ॥"

इति भ्रातृमुखाच्चतुर्थं पदमाकर्ण्य क्रुद्धा सत्रपा सा 'कुष्ठी भव' इति तं शशाप ( संक्रान्तः काये कुष्ठः ) पतिव्रतात्वात् । प्रातर्नृपसभायां द्वयोर्मिलितयोर्मयूरेण 'कुष्ठी' इति तस्मै प्रोक्तम् । तच्छ्रुत्वा बाणः सत्रप उत्थाय नगरसीम्नि स्तंभमारोप्य खदिरांगारपूर्णमधः कुंडं विधाय स्तंभाग्रवर्तिसिक्कके स्वयमधिरूढः सूर्यं तुष्टाव । तत्र प्रतिकाव्यप्रान्ते एकैकं सिक्ककदव-

अत्रान्तरे मालपुरे धनश्रेष्ठी जैनः। तस्य सिद्धाख्यः पुत्रो द्यूतकारैर्गर्तायां निक्षिप्तः। पिता तद्देयं दत्त्वाऽमोचयत्। ततस्तं सर्वकार्याध्यक्षं कृत्वा पर्यणाययत्। अथ सिद्धश्रेष्ठी कार्याणि समाप्य वासमन्दिरेऽतिकाले एति। एकदाऽस्य पत्नीमातरौ निद्राणेऽतिकाले द्वारमागतं तं समाहतुः—'यत्रेदानीं द्वाराण्युद्घाटितानि स्युस्तत्र व्रज'। तच्छ्रुत्वा स पुर्यां भ्रमन् सूरीणामुपाश्रये गतः। तत्र च दीक्षां ललौ। तत्र सूरिपार्श्वे जैनशास्त्रं पठित्वा विशेषतस्तर्कानाजिघृक्षु बौद्धान्तिके व्रजन्तं तं हरिभद्रः प्राह—"बौद्धसंगेन यदि तव मनःपरावर्तो भवेत्तदाऽस्मद्वेषमत्रागत्यास्माकं ददीथाः"। तदङ्गीकृत्याङ्गीकरोच्चके। पश्चात् स बौद्धान्तिकं गत्वा पपाठ। तत्र बौद्धैः कुतर्केण तस्य मनः परावर्तितम्। ततो वेषं दातुं सूरिपार्श्वे आगतः। सूरिणा युक्त्या धर्मे स्थिरीकृतः। तदा बौद्धवेषं दातुं तदन्तिके गतः। तत्र बौद्धैर्व्युद्ग्राहितः सूरिपार्श्वे आगतः एवं त्रिसप्तकृत्वो जाते गुरुर्दध्यौ—'मा वराकस्यास्य कुदृष्टिना दुर्गतिर्भूयात्' इतिध्यात्वा सूरिः सतर्कां ललितविस्तरां रचयित्वा तस्मै ददौ। तेन तुष्टः स निश्चलमनाः प्राह—

"नमोऽस्तु हरिभद्राय, तस्मै प्रवरसूरये। मदर्थं निर्मिता येन वृत्तिर्ललितविस्तरा ॥ १ ॥"

ततस्तेन सिद्धर्षिणा षोडशसहस्रमिता उपमितिभवप्रपञ्चकथाऽरचि। ततः क्रमेण सूरिर्दिवं प्राप।

निर्मापणे शास्त्रनिशांतकृतेर्निर्मातृतुल्यो हरिभद्रपादः।
त्यक्त्वा कुदेवं गुरुदेव पूज्यः सोयच्छतान्नः कवितासु शक्तिम् ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे चतुस्त्रिंशत्तमं व्याख्यानम् ॥

एकदा हंसपरमहंसौ सूरिभ्योऽधीतशास्त्रौ प्रोचतुः—"भगवन् ! बौद्धशास्त्ररहस्यं गृहीत्वा बौद्धा जेष्यन्ते, अत आवां तत्र यास्यावः" । सूरिराह—'वेषान्तरं कृत्वा व्रजतम्' । तौ तथा कृत्वा तत्र गत्वा बौद्धशास्त्रमर्मज्ञावभूताम् । एकदा बौद्धेन तौ क्रियातः श्वेतांबरौ ज्ञात्वा तयोरुपलक्षणाय छात्रेषु पठत्सु निश्रेण्याः सोपानके खट्या(टिकया)र्हद्बिंबं लिलिखे । ततोऽवतरणसमये सर्वे बिंबोपरि पादौ दत्त्वोत्तीर्णाः । तौ तु प्रतिमाकंठे रेखात्रयाङ्कं कृत्वोत्तीर्णौ । ततः सभयौ पुस्तकं लात्वा नष्टौ । ततः सौगतेन राज्ञः सैन्यं तत्पृष्ठे प्रेषितम् । हंसेन बहु सैन्यं हतं । ततः सैन्येन बहूभूय हंसो हतः । अपरस्तु चित्रकूटासन्ने नंष्ट्वा सुप्तो निहतः । तद्विज्ञातवृत्तैर्गुरुभिः सकोपं तप्ततैले कटाहे चतुश्चत्वारिंशदधिकचतुर्दशशतबौद्धा होतुमाकृष्टाः मंत्रशक्त्या । गुरुभिरयं वृत्तान्तो ज्ञातः । ततस्तत्प्रतिबोधाय गुरुणा द्वौ साधू सूरिसमीपे प्रेषितौ । ताभ्यामिमा गाथा दत्ताः सूरीणाम् । यथा—

"गुणसेणअग्गिसमा सीहा णंदी य तहा पिआपुत्ता। सिहिजालिणिमाइसुआ धणसिरिमो अप्पईभज्जा
जय विजया य सहोअर धरणोलछी अ तह पई भज्जा । सेणविसेणा पित्तिअउत्ता जंमंमि सत्तमए ॥२॥
गुणचंदवाण सत्तरसमरा इत्थ गिरिसेणपाणो उ। एगस्स तउ मुक्खो णंतो बीअस्स संसारो ॥ ३ ॥
जह जलजलई लोए कुसत्थपवणाहउ कस्सायग्गी। तच्चिंतं जिणवयणं, अमिअसित्तो वि पज्जलई ॥४॥"

इति श्रुत्वा सूरिः पापान्निवृत्तः । चतुश्चत्वारिंशदधिकचतुर्दशशतग्रन्थान् हरिभद्रसूरिः प्रायश्चित्तपदे चकार ।

कंठ्यः। नवरं कविर्द्विधा। सद्भूतार्थकविरसद्भूतार्थकविश्चेति। तत्र प्रथमो जिनमतरहस्याभिज्ञतया सद्भूतार्थशास्त्रसंदर्भकः। यथा श्रीहेमचन्द्रसूरिस्त्रिषष्टिशलाकानरचरित्रव्याकरणादित्रिकोटिग्रन्थकृत्। तथोमास्वातिवाचकपुंगवस्तत्त्वार्थादिपञ्चशतप्रकरणप्रणेता। तथा वादिदेवसूरिश्चतुरशीतिसहस्रश्लोकमितस्याद्वादरत्नाकरकृत्। चतुश्चत्वारिंशदधिकचतुर्दशशतमितग्रन्थप्रणेता च श्रीहरिभद्रसूरिः। तज्ज्ञातं चेदम्—

चित्रकूटे हरिभद्रो विप्रो धृतोदरायःपट्टश्चतुर्दशविद्याविशारदः सर्वशास्त्रार्थं वेत्ति। यत्पठितमहं न जानामि तच्छिष्योऽहं भवामीति तस्य प्रतिज्ञा। एकदा पुरमध्ये व्रजन् याकिनीनामसाध्वीमुखत इमां गाथामशृणोत्—

“चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की। केसव चक्की केसव दुचक्की केसी अ चक्की अ ॥१॥”

तच्छ्रुत्वा साध्व्या अग्रे गत्वा तेनोक्तं—‘मातः किमिदं चिकचिकायते?’। तयोक्तम्—‘ननु नवीनं चिकचिकायते’। तच्छ्रुत्वा तेन चिन्तितं—‘अहो! अहमनयोत्तरेण जितः’। ततः स प्राह—‘मातर्गाथार्थं ब्रूहि’। साऽवक्—‘मम गुरवः कथयिष्यन्ति’। तेनोक्तं—‘क्व ते सन्ति’। ततस्तया स चैत्यं नीतः। तत्र देवमवेक्ष्य सोऽब्रवीत्—

“वपुरेव तवाचष्टे भगवन्! वीतरागताम्। न हि कोटरसंस्थेऽग्नौ तरुर्भवति शाड्वलः ॥ १ ॥”

इति स्तुत्वा सूरिपार्श्वे गतः। सूरिं नत्वा गाथार्थं पप्रच्छ। गुरुराह—तदर्थम्। तच्छ्रुत्वा पूर्वप्रतिज्ञाबद्धः स दीक्षां ललौ। जैनग्रन्थाभ्यासे तु दृढतरदर्शनोऽभूत्। ततो गुरुभिः सूरिपदे स्थापितः स स्वयमावश्यकनिर्युक्तिबृहद्वृत्तौ चक्कीत्यादिगाथां व्यवृणोत्।

"ता गंजयंति वाइंदगयघडा मयजरेण डुप्पिछा । जाव न पायलित्तयं पंचवयणनाऊँ समुल्लसई ॥१॥"

तच्छ्रुत्वा राज्ञा स्वप्रधानं प्रेष्य सूरय आकारिताः । इतस्तत्पुरीविद्भिः सर्वैः संभूयैकं स्थालं घृतभृतं सूरीणां संमुखं प्रेषितम् । आचार्यैस्तु घृतमध्ये सूच्येका क्षिप्त्वा तथैव प्रतिप्रेषितम् । नृपः पण्डितान् तद्भावं पप्रछ । तदा तैरुक्तं—"एतन्नगरं विद्भिः पूर्णमस्ति, यथा घृतेन स्थालं इति भावो नः । अस्य चायं भावः—यथा तीक्ष्णतया सूची प्रविष्टा तथाहमपि प्रवेक्ष्यामि" । तच्छ्रुत्वा सहर्षो राजा पंडितैः सह महोत्सवेन मुनेः संमुखं गतः । ततो नगरमानीतो गुरुः । तत्र गुरुणा निर्वाणकलिकाप्रश्नप्रकाशादिशास्त्राणि निर्मितानि । राजा जैनो जातः । द्विजाः सर्वे स्वमदं त्यक्त्वा गुरुचरणांबुजे भृंगा इव जाताः । ततः सूरयः शासनं प्रभाव्य श्रीशत्रुञ्जये रदनसंख्योपवासानशनेन दिवं प्रापुः

पादलिप्तमुनिराजकथेयं श्रोत्रपात्रपरिपेयसुधाढ्या ।
अञ्जनादिकगुणैर्द्युतिमद्भिः, (गुणगोदशशत्या) शासनस्य महिमा विदधे यैः ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे त्रयस्त्रिंशत्तमं व्याख्यानम् ॥ ३३ ॥

॥ अथ चतुस्त्रिंशत्तमं व्याख्यानम् ॥ ३४ ॥

। अथ कविप्रभावकस्वरूपं प्रतन्यते ।

अत्यद्भुतकवित्वस्य कृतौ शक्तिर्भवेद्यदि । सम्यक्त्वे स कविर्नाम प्रोक्तोऽष्टमः प्रभावकः ॥ १ ॥

अमीषामोषधीनां त्वं षष्टितंडुलपायसा(से) । विधेहि लेपं चेद्व्योमन्युत्पित्सा तव वर्तते ॥ १ ॥

अनेन गुरूक्तेन प्रयोगेण पूर्णमनोरथः सोऽन्यदा बहुद्रव्येणोपार्जितस्वर्णसिद्धिकरसभृतकूपिकां स्वशिष्यहस्तेन गुरूणां प्राभृतीचक्रे । गुरवोऽपि तं प्राहुः—'वयं तृणस्वर्णसमस्पृहा अनर्थहेतुमेनं नेच्छामः' इत्युक्त्वा रक्षामानाय्य तद्रसं तत्र चिक्षिपुः । पुनस्तां कूपिकां निजप्रस्रवणेन भृत्वा तं प्रत्यर्पयत् । सोऽपि योगीन्द्रं नत्वा गुरुकृतवृत्तान्तं न्यवेदयत् । योगी रुषारुणो दध्यौ—'अहो ! अविवेकिनोऽमी' इत्युक्त्वा तां कूपिकां शिलातले स्फोटयामास । क्षणान्तरे सा शिला हिरण्मयी जाता । तद्दृष्ट्वा स सकौतुकं दध्यौ—

"मया क्लेशसहस्रेण रससिद्धिर्विधीयते । अमीषां तु स्वभावेन स्ववपुःस्थैव विद्यते ॥ १ ॥"

ततो नागार्जुनस्तान् श्रीगुरून् कल्पद्रुमानिव । चिरमाराधयामास वन्दनास्तवनादिभिः ॥ २ ॥

इतश्च शालिवाहननृपपर्षदि चत्वार ऋषयो लक्षलक्षश्लोकप्रमितं ग्रन्थचतुष्टयं करे कृत्वागत्य जगुः—'भो नृप ! अस्मद्ग्रन्थान् शृणु,' । राजाह—'बृहत्तरग्रन्थान् श्रोतुं नाहं क्षमः' । ततस्तेऽर्धग्रन्थान् कृत्वा प्रोचुः । तथापि श्रोतुमक्षमं नृपं ज्ञात्वाऽपसार्यापसार्यैकैकः श्लोकः कृतः । तमपि न शृणोति तदा आत्रेयर्षिणा चिकित्साशास्त्ररहस्यमयमेकं पदं कृतं । तच्चेदं—'जीर्णे भोजनमात्रेयः' । द्वितीयर्षिणा द्वितीयपादं प्रोक्तं—'कपिलः प्राणिनां दया' । तृतीयेन नीतिशास्त्ररहस्यं प्रोक्तं—'बृहस्पतिरविश्वासः' । चतुर्थेन कामतत्त्वं प्रोक्तं—'पञ्चालः स्त्रीषु मार्दवम् ॥ १ ॥" इति चतुर्लक्षश्लोकरहस्यमेकेनैव श्लोकेन कृतं । तच्छ्रुत्वा तान् संमान्य पुनः पुनः राजा प्राशंसत् । तदा नृपराज्ञ्या भोगवत्योक्तम्—

सुगमार्थः । भावार्थस्तु श्रीपादलिप्ताचार्यदृष्टान्तेन दृढीक्रियते—

अयोध्यायां नागहस्तिसूरिसमीपे प्रतिमाश्राविकापुत्रेणाष्टमवर्षे दीक्षा गृहीता । एकदा क्षुल्लकः कांजिकं श्राद्धगृहतो लात्वा गुरोः पुरः स्थितः । गुरुस्तं प्राह—'वत्स ! आलोचनां जानासि ?' । सोऽवदत्—"भगवन्—'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः' तथा तामहं वेद्मि यूयं श्रृणुत—

अंबंतंबच्छीए अपुप्फियं पुप्फदंतपंतीए । नवसालिकंजियं नववहूइ कुडएण मह दिन्नं ॥ १ ॥"

तच्छृंगारवाक्यतो रुष्टा गुरवः प्राहुः—'पलित्त ( प्रलिप्तः—प्रकर्षेण लिप्तः )

ततो सो गुरुचरणे, नमिउं विन्नवई देह पसिऊण । अहियं एगं मत्तं, जेणं हवेमि पालित्तं ॥ १ ॥"

तद्विज्ञानेन प्रसन्ना गुरवः क्रमात् पादलेपविद्यया सह तं पादलिप्तनामानं सूरिं चक्रुः । ततः स्वयं विहरन् खेटकपुर आगतः । तत्र तेन जीवाजीवोत्पत्तिप्राभृतं, निमित्तप्राभृतं, विद्याप्राभृतं, सिद्धिप्राभृतं, चेति चत्वारि लब्धानि। ततः सूरिः प्रत्यहं तीर्थपञ्चके तया विद्यया जिनान्नत्वा तदनु भोजनं वितेने ।

अथैकदा सूरीशा ढंकपुरे गताः । तत्र तैर्बहुजना वशीकृताः । तत्र नागार्जुननामा योगी विद्याम्नायं जिघृक्षुः श्रावकीभूय तद्गुरुपादानसेवत । नित्यं पादयोर्वन्दमानो गन्धेन सप्तोत्तरशतान्यौषधानि ज्ञातवान् । तानि संमील्य वारिणा पादयुग्मलेपं विधायाकाशे कियद्दूरं गत्वा यत्र तत्र भूम्यामपतत् । एकदा जातक्षतावलिं योगिनं गुरवः पप्रच्छुः—'भद्र ! तव देहे केयं क्षतावलिः ?' । सोऽपि यथाकृतमुवाच । तद्बुद्धिरञ्जितास्तं श्रावकं विधाय जग्मुः ।

अत्रोत्तरं सूरिराह—"भो नृप ! शीलपालन आहारनीहारौ कारणं न, किं तु मनोवृत्तिरेव । यतः—

सिंहो बली द्विरदसूकरमांसभोजी, संवत्सरेण रतिमेति किलैकवारम् ।
पारापतः खरशिलाकणमात्रभोजी, कामी भवत्यनुदिनं ननु कोऽत्र हेतुः ? ॥ १ ॥"

एतदाकर्ण्य कुवादिनः श्याममुखा जाताः । इत्याद्यनेके प्रबन्धाः कुमारनृपचरित्रतो ज्ञेयाः । सूरिरपि भुव्यनेकभव्यान् प्रबोध्य जिनमतं प्रभाव्य देवभूमिं जग्मिवान् ।

विद्यैककान्तिर्जि(र्न्ति जि)नधर्मविष्टपे, मार्तण्डकल्पं तिमिरप्रणाशकम् ।
चौलुक्यपंचाननभूपबोधिनं, श्रीहेमचन्द्राख्यगुरुं नमाम्यहम् ॥ १ ॥

॥ इत्युपदेशप्रासादे तृतीयस्तंभे द्वात्रिंशत्तमं व्याख्यानम् ॥ ३२ ॥

---

## ॥ अथ त्रयस्त्रिंशत्तमं व्याख्यानम् ॥ ३३ ॥

। अथ सप्तमं सिद्धप्रभावकं प्रकाशयति ।

अञ्जनचूर्णलेपादिसिद्धयोगैः (चूर्णाञ्जनविलेपादियोगसिद्ध्या) समन्वितः ।
जिनेन्द्रशासने ह्यत्र सप्तमः स्यात् प्रभावकः ॥ १ ॥

निशि दृष्टां देवीमुपलक्ष्य सूरीनाह—'पूज्य ! त्वंजवञ्चामिमां मुञ्च'। गुरुर्जगौ—'हे नृप ! कामप्यस्याः पार्श्वे याचनां कुरु'। नृपेणाष्टादशसु देशेषु जीवरक्षार्थं तलारक्षत्वं याचितं। तत्स्वीकृते गतबन्धना सा राजभुवनद्वारेऽस्थात्।

अथैकदा नृपसदसि सूरिः स्थूलभद्रवर्णनमकरोत्, यतः—

"वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं
सौधं (शुभ्रं) धाम मनोहरं वपुरहो नव्यो वयःसंगमः।
कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरात्
तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम्॥ १॥"

एतदाकर्ण्य मत्सरिणो नृपान्यर्णभाजो द्विजन्मानोऽभ्यधुः—

"विश्वामित्रपराशरप्रभृतयो ये चांबुपत्राशिन-
स्तेऽपि स्त्रीमुखपंकजं सुललितं दृष्ट्वैव मोहं गताः।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवाः ( ये मानवा भुञ्जते )
तेषामिन्द्रियनिग्रहः कथमहो दंभः समालोक्यताम्॥२॥"

कविंशति ( त्या ) स्वपूर्वजैः पूज्यमानान् दृष्ट्वाऽनमत्। तेऽप्यवदन्—"दयाधर्मं प्रपन्नस्त्वमेव विवेकी। अयं देवस्त्वद्गुरुः। तदुक्तमाराधयेति"। पूर्वजा अपि 'वत्स त्वया जिनधर्मादरणाद्वयं सुगतिभाज ईदृशीं महर्द्धिं भजामहे'। इत्युक्त्वा तिरोदधुः। ततो दोलायितमना नृपस्तत्त्वं सूरिमप्राक्षीत्। सूरयः प्रोचुः—"राजन्! पूर्वं तेन दर्शितं, इदं मद्दर्शितं चेन्द्रजालं व्योमरोमन्थप्रायं। तत्त्वं तु यत्त्वां सोमेश्वरेण गदितं तदेव"। ततस्त्यक्तमिथ्यात्वः स बभूव। क्रमाद्द्वादशव्रतानि ललौ।

अन्यदाश्विनमासे समायाते देव्या अर्चका भूपं प्रोचुः—"हे नरेन्द्र! कुलदेवीनां बलिहेतवे सप्तम्यां सप्तशती महिषानां हन्यते, अष्टम्यामष्टशती, नवम्यां नवशती च। नो चेत्ता विघ्नकारिण्यो भवन्ति"। ततो नृपेण गुरुपार्श्वे गत्वोक्तं। गुरुराह—"यस्मिन् दिने यावन्तो हन्यन्ते, तावन्तस्तदग्रे स्थाप्याः, प्रो(वा)च्यं च भो देव्यः शरणोज्झिता इमे पशवस्त्वदग्रे स्थापिताः, अतः परं यथातथ्यं देवीनां ( देवीभ्यः ) तदाद्रियन्ताम्"। राज्ञा गुरूक्तं कृतं। देवीभिरेकोऽपि न भक्षितः। ततो नवम्यां रात्रौ त्रिशूलहस्ता कंटेश्वरी साक्षाद्भूयावक्—'राजंस्त्वया क्रमागतं शीलं मुक्तं' राजा जगौ—'जीवन्नहं पिपीलिकामपि न हन्मि'। ततो रुष्टा देवी त्रिशूलेन भूपं मूर्ध्नि हत्वा तिरोऽभूत्। तद्दिव्यघातेन कुष्ठेन पीडां प्राप्तः। ततो 'वह्नौ प्रविशामि' इति वदन्तं भूपं निषिध्योदयनः सूरीणां ( सूरिभ्यः ) तत्स्वरूपं न्यरूपयत्। ततः सूरिदत्ताभिमंत्रितवारिच्छोटनेन हेमद्युतिर्नृपदेहोऽभूत्। ततः प्रातर्गुरुवन्दनाय गच्छन् शालाप्रवेशे स्त्रीकरुणस्वरं शुश्राव भूपः। ततस्तां

इति स्तुत्या चमत्कृतो नृपो गुरुं जगौ—'पूज्य ! अद्य मतं विमुच्य सम्यक् तत्त्वं प्रकाशय' । सूरिराह—'शास्त्रसं-
वादेनालम् । यदयं शिवस्तव पुरस्तत्त्वं वक्ति, तदुपास्यं' । ततो निशीथे मुनिध्यानतः शिवेन प्रत्यक्षीभूय नृपायोक्तं—
'जिनैरुक्तं स्याद्वादतत्त्वं तन्वंस्त्वं स्वेष्टमवाप्स्यसि' । ततो राजा सम्यक्त्वाभिमुखोऽभूत् ।

अथैकदा पवनक्रियापटुर्देवबोधिः कमलनालदंडयुगं तंतुबद्धकदलीपत्रमयासनं शिष्यस्कन्धन्यस्तमारुह्य राजसदस्या-
गात् । जातविस्मयेन नृपेण स सन्मानितः । ततः पूजावसरे जिनं पूजयन्तं नृपं वीक्ष्य देवबोधिरवादीत्—"राजन्नयुक्तं
तव कुलधर्मोल्लंघनम् । यतः—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ १ ॥"

नृपोऽवादीत्—"सर्वज्ञोक्तत्वात् सत्यो जैनधर्मः"। देवबोधिरुवाच—"यदि न प्रत्येषि, तदा महेश्वरादित्रिदेवान् स्वपू-
र्वजांश्च मूर्तिमतोऽत्रागतान् स्वमुखेन पृच्छ" । इति निगद्य विद्याशक्त्या तानदीदृशत् । देवैः पूर्वजैश्चोक्तम्—'भो वत्स!
त्वया देवबोधिवचः कार्यम्' । ततो विस्मितो भूपो जड इवाजनि । तदोदायनमंत्री प्राह—'राजन् ! हेमसूरिरपि अनेक-
विज्ञाने कुशली समस्ति' । ततो देवबोध्यादिपरिवृतो राजा प्रातः सूरिं ननाम । ततः सूरिः पञ्चापि मरुतो निरुध्यास-
नात् किञ्चिदुच्चस्य व्याख्यातुमारेभे । तावत्पूर्वसंकेतितशिष्योऽधस्तरासनमाकर्षत् । सर्वेऽपि विस्मयं प्रापुः । ततः सूरयो
'मम देवान् पश्य' इत्युदीर्य श्रीचौलुक्यमपवरक आनिन्युः । तत्र समवसरणस्थान् चतुर्विंशतिं जिनेन्द्रान् चौलुक्याद्ये-

सुगमार्थः । भावार्थस्तु श्रीहेमसूरिमाहात्म्येन ज्ञेयः । स चायम्—

धंधुकनगरे मोढज्ञातीयो(यश्च)ऽङ्गदेवो देवचन्द्रसूरिपार्श्वे दीक्षां लब्धौ । क्रमाद्धेमसूरिरिति नाम दत्तं गुरुभिः । इतश्च पत्तने कुमारपालभूपाले जाते हेमसूरिस्तत्रागत्योदयनमंत्रिणमपृच्छत्—'राजाऽस्माकं स्मरति न वेति' । उदयनेनोक्तं 'नेति'। ततः सूरिभिरूचे—"मंत्रिन् ! अत्र भूपं रहो ब्रूयाः अद्य त्वया नव्यराज्ञीगृहे न स्वपनीयं" । अमात्येन तथा कारिते निशि विद्युत्पातात्तस्मिन् गृहे दग्धे राज्ञ्यां मृतायां चमत्कृतो राजा तं जगाद—'कस्येदं ज्ञानं ?' । तेन याथातथ्यमुक्ते नृपो गत्वा सूरिं प्रणम्याह—'पूज्य ! राज्यमिदं गृहीत्वा मामनुगृहाणेति' । सूरिरुवाच—

"कृतज्ञत्वेन राजेन्द्र चेत्प्रत्युपचिकीर्षसि । आत्मनीने तदा जैनधर्मे धेहि निजं मनः ॥ १ ॥"

राजाऽऽह—'भगवदुक्तं करिष्येऽहम्' । ततोऽन्यदा नृपः सोमेश्वरयात्रायै सूरिं सहाकार्य गतः । तत्रेशं नत्वा 'जैना जिनादृते न नमन्ति' इति द्विजैर्व्युद्ग्राहितो राजा सूरिं प्राह—'भगवन् ! यूयं शिवं वन्दध्वं' । सूरिः प्राह—

"भवबीजांकुरजनना रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ १ ॥
यत्र तत्र समये यथा तथा, योऽसि सोऽस्यभिधया यया तया ।
वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोऽस्तु ते ॥ २ ॥

कृतसाध्वीवेषा सा राजादिबहुजने मिलिते विहारार्थमुद्यमिनः साधोरन्तिकमागत्य प्राह—"भगवन् ! भवदीयममुं गर्भमपर्याप्तं विमुच्य न युक्तं तव गमनं" इत्युक्त्वा मुनिं प्रति वस्त्राञ्चले व्यलगत् । ततो मुनिः प्राह—हे बाले किमर्थमलीकोक्त्यास्मान् प्रकोपयसि ?' । साऽऽह—'नालीकमेतत्' । ततः शासनोन्नतिलब्धिमान्मुनिरवोचत्—"यदि मत्कृतोऽयं गर्भो भवेत्तदा तिष्ठतु, यदि च मत्कृतोऽयं गर्भो न स्यात्तदा तव कुक्षिं भित्त्वा पततु" । इत्युक्ते गर्भो मह्यां पतितः । तदा संभ्रान्ता साह—"मया द्विजवचनैरिदं कृत्तमकार्यं तत्क्षाम्यतु" । द्विजा अपि वेपमाना मुनिपदौ प्रणेमुः । साधुना शापः संक्षिप्तः । सर्वेऽपि मुनिदेशनया धर्मं चक्रुः, जैनधर्मनिन्दां मुमुचुः । मुनिरपि उत्कृष्टतपोभिः कर्माणि क्षपयित्वा मुक्तिं प्राप ।

इत्यद्भुतं काष्ठमुनेश्चरित्रं, श्रुत्वा तपांसि विविधानि ( सीकृतमानि ) कृत्वा ।
कुर्वन्तु भव्या जिनधर्मशोभां, निर्वृत्तिसौख्ये यदि वः स्पृहा चेत् ॥ १ ॥

इत्युपदेशप्रासादे तृतीयस्तंभे एकत्रिंशत्तमं व्याख्यानम् ॥ ३१ ॥

---

## ॥ अथ द्वात्रिंशत्तमं व्याख्यानम् ॥ ३२ ॥

। अथ षष्ठं विद्याप्रभावकस्वरूपं वितन्यते ।

**मंत्रतंत्रादिविद्याभिर्युक्तो विद्याप्रभावकः । संघाद्यर्थे महाविद्यां प्रयुङ्क्त( योज )यति नान्यथा ॥ १ ॥**

न्तरतः श्रुतम् । ततो बटुर्वज्रां प्रति प्राह—'अस्य ताम्रचूडस्यावश्यं शिरो मह्यं देहि'। तयापि कथञ्चित् प्रतिपन्नं । ततस्तं
हत्वा पचनार्थमग्नावक्षिपत् । बटुकः स्नानाय गतः । इतः पुत्रो लेखशालात आगात्, भोजनं चायाचत । विस्मृत्या मात्रा
तस्मै तच्छिरो दत्तं । ततः स पठनाय गतः । बटुक आगत्याशनायोपविष्टः । शिरोविहीनं पलं दृष्ट्वा तां पृष्ट्वा निर्णये कृते सोऽ-
वक्—"पुत्रं हत्वा तच्छिरःपलं त्वं चेद्ददासि तर्हि आवयोः प्रेमभंगो न स्यात्" । तया स्वीकृतम् । एतत्तद्धात्र्या श्रुतं ।
ततो धात्री तं पुत्रं लेखशालातः कटौ कृत्वा नगरान्निर्गता पृष्ठचंपोद्याने क्रमात् प्राप । इतस्तत्पुरस्वामी निष्पुत्रो मृतः ।
ततोऽमात्यादिकृतपञ्चदिव्यैर्वनसुप्तस्स बालः प्रमाणीकृत्य राज्येऽभिषिक्तः ।

इतः काष्ठश्रेष्ठी गृह आगतः । चत्वारि वस्तून्यदृष्ट्वा शुकं पप्रच्छ । शुकः प्राह—'मां पञ्जरान्निष्कासय, तदनु निर्भयः
सर्वं वच्मि' । ततः श्रेष्ठिना मुक्तलीकृतः तरौ स्थितस्तं प्रति वटुवज्रयोः संबन्धमवोचत् । तच्छ्रुत्वा श्रेष्ठी वैराग्येण दीक्षां
जग्राह । नृपभयेन सविप्रा सा निर्गता दैवयोगात् पुत्रराज्यपुर आगता । काष्ठमुनिरपि विहरन् दैवयोगात्तत्रैव पुर आ-
गतः । अकस्माद्वज्रागृहे आहारार्थं गतः । वज्रा तं पतिमुपलक्ष्य दध्यौ—'एष मामुपलक्षयिष्यति, तदा मां हि (हे) लयि-
ष्यति' । ततो भिक्षामध्ये स्वाभरणं मुक्त्वा पूत्कारं चक्रे । स्तैन्यदोषे भाविते भटैर्नृपाग्रे नीतः । धात्र्या दृष्टः । तदनु
नृपाय प्रोक्तं—'तवायं पिता' । ततो राज्ञा माता पितृहंत्रीति ज्ञात्वा कर्षिता । राजा श्राद्धो जातः । पितृगुरुमाग्रहेण
स्वपुरे ररक्ष । ततो राजा सर्वर्द्ध्या गुरुवन्दनाय प्रत्यहमायाति । एवं प्रवचनोद्भावनया प्रद्वेषमापन्ना द्विजास्तस्य छिद्रा-
ण्येवान्वेषयन्ति । तैरापन्नसत्त्वामेकां दासीं दृष्ट्वा प्रोक्तं—'त्वमेतस्य साधोः कलंकं प्रयच्छ' । द्विजैर्द्रव्येण लोभिता सती

॥ ६६ ॥

## ॥ तृतीयः स्तंभः ॥

। अथ पञ्चमतपःप्रभावकः प्रोच्यते ।

**विविधाभिस्तपस्याभिर्जैनधर्मप्रकाशकः (प्रभावकः) । विज्ञेयः पञ्चमो भव्यैः स तपस्वी प्रभावकः ॥१॥**

कंठ्यः । अत्रार्थे काष्ठमुनेर्ज्ञातमिदम्—

राजगृहे काष्ठनामा इभ्यः । तस्य कुलटा वज्रा भार्या । सुतो देवप्रियो लेखशालायां पठति स्म । श्रेष्ठिनो गृहेऽपत्यानीव त्रयः शुकसारिककुर्कुटाः सन्ति, तथा एको ब्राह्मणपुत्रः स्वगृहे रक्षितः । स एकदा स्वगृहभारं स्त्रियाः शुकस्य च दत्वा लक्ष्मीहेतवे विदेशेऽचलत् । अथ द्विजे यौवनं प्राप्ते वज्रा तेन सह सौख्यं बुभुजे । तौ संपृक्तौ दृष्ट्वा सारिका शुकं प्राह—'पापपरावेतावावां निवारयावः' । शुक उवाच—

**"उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये । पयःपानं भुजंगानां, केवलं विषवर्द्धनम् ॥ १ ॥**

संप्रति समयो नास्ति" । साऽऽह—

**"तुम्हिय सुण सभाव वरं मरणं मम अकाले वि। मे तायस्स घरे न खमं अकज्जमेयारिसं दट्ठुं ॥ १ ॥"**

एवं वदन्ती सा सारिका वज्रयाऽग्नौ क्षिप्ता । ततः शुको मौनं चकार । एकदा तस्य गृहे तपस्वियुगं भिक्षार्थमागात् । एकेन वृद्धेन लघोरग्रे एतदुक्तं—'अस्य कुर्कुटस्य समञ्जरि शिरो योऽत्ति, स राजा स्यात्' । तद्वचनं तेन चटुकेन कटका-

अथैकदा राज्ञा पृष्टौ सूरिद्विजौ—"अद्य किं भविष्यति ?"। वराहेणोक्तं—"अद्य पश्चात्प्रहरेऽमुकस्थाने सहसा जलदे वर्षति मंडलमध्ये द्विपञ्चाशत्पलमितो मत्स्यः पतिष्यति"। सूरिणोक्तं—"एकपञ्चाशत्पलमितो मंडलात्तस्माद्बहिः पूर्वदिशि च"। ततः प्रदोषे गुरूक्तस्थाने पतितः। ततो राजा जिनधर्मं प्रपेदे। वराहस्त्वपमानाद्दीक्षां लात्वाऽज्ञानकष्टं कृत्वा व्यन्तरो जातः। साधुषु न प्रबभूव द्वेषवानपि। श्रावकेषु रोगानुत्पादयामास। श्राद्धैर्गुरुर्विज्ञप्तः। गुरुभिरुपसर्गहरं स्तोत्रं पठनाय श्राद्धेभ्यो दत्तं। तेन स व्यन्तरो मनागपि न प्रभवितुं क्षमः। तत्स्तोत्रमद्यापि स्मृतं विघ्नाद्युपहन्ति। ततः पञ्चमश्रुतकेवली बहुजीवान् प्रबोध्य स्वर्गं गतः।

भद्रबाहुगुरुणा नृपबोधो, निर्मितः शुभनिमित्तबलेन।
शासनोन्नतिकृते च भवद्भिः, स्वोद्यमः सपदि तेषु विधेयः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ द्वितीयस्तंभे त्रिंशं व्याख्यानम् ॥ ३० ॥

## ॥ समाप्तोऽयं द्वितीयः स्तंभः ॥

मपश्यं । तथापि निर्भयीभूय सिंहाधो हस्तं क्षिप्त्वा यावल्लग्नमपसारयामि तावत्सूर्यः प्रत्यक्षीभूयावक्—'वत्स ! वरं वृणीष्व' । मयोक्तं—"यदि प्रसन्नोऽसि, तदा मां निजविमानेऽवस्थाप्य सकलं ज्योतिश्चक्रं दर्शय"। तदा सूर्येण दर्शितं चारमानादि च प्रोक्तं । ततः कृतकृत्योऽहं जनोपकृतये भ्रमन्नस्मि" । इति प्रशस्तिं श्रुत्वा जितशत्रुणा पुरोहितः कृतः ।

अथ स वराहः श्वेतांबरान्निन्दति । तदनेकैर्गुरुभक्तैः श्राद्धैः श्रुत्वा गुरूनाकार्य प्रवेशमहोत्सवः पुरे कृतः । गुरोरागमनं श्रुत्वा स वाढं मम्लौ । अत्रान्तरे भूपगृहे पुत्र उत्पन्नः । तस्य वराहमिहिरेण जन्मपत्र्यां वर्षशतायुः राजसमक्षं प्रख्यापितं । ततः प्रसन्नीभूते नृपे तेनोक्तं—"सर्वे जनाः सहर्षं युष्मद्गृहे भद्रबाहुं विना समायाताः । विद्वेषस्य भद्रबाहोर्देशत्याग एव दण्डो योग्यः" । ततो राज्ञा मंत्रिपार्श्वाज्ज्ञापितं । श्रीसूरिभिरादिष्टं—"द्वौ क्लेशौ कथं कारणीयौ ? सप्तमे दिने बिडालिकास्यादेतत्पुत्रस्य मरणं भावि" । मंत्रिणा भूपाय प्रोक्तं । तन्निशम्य राज्ञा सर्वा बिडालिकाः पुराद्बहिः कर्षिताः । सप्तमे दिने धात्री स्तन्यं पाययितुं द्वारशाखाग्र उपविष्टा । इतोऽकस्मादर्गला बालस्य शिरस्यपतत्, मृतश्च सः । ततो राज्ञा वराहस्तिरस्कृतः । गुरुं भद्रबाहुं नृपः प्राह—'भवतैतदायुः कथं ज्ञातं ? ओतुमुखान्मरणं नाभूत्, तत्किं ?' । गुरुणोक्तं—"अर्गलामुखे तद्रूपमस्ति, अस्माभिः पुत्रजन्मसमये पूर्वाम्नायेनायुर्निर्णीतं, अनेन तु पुत्रजननानन्तरं दास्या तुंगपादपीठोपरि पादौ धृत्वा घटिकाताडनं कृतं, पश्चाज्ज्ञातं" । ततो वराहः खिन्नः पुस्तकानि जले क्षेप्तुं लग्नः गुरुणा निषिद्धः—"शास्त्राणि सर्वज्ञोक्तत्वाच्छुद्धान्येव । यतः—

अमंत्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अनाथा पृथिवी नास्ति आम्नायाः खलु दुर्लभाः ॥ १ ॥

पश्चाद्भट्टेन सम्यगुक्तम् ।

श्रीवृद्धवादिगुरुसिद्धसेनयोः, श्रुत्वाभिधां तर्कविदोऽपि वादिनोः ।
मुञ्चन्त्यवश्यं वरदंत्यरातित, आकर्ण्य शब्दं करिणो यथा मदम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ द्वितीयस्तंभे एकोनत्रिंशं व्याख्यानम् ॥ २९ ॥

## ॥ अथ त्रिंशं व्याख्यानम् ॥ ३० ॥

अथ निमित्तस्वरूपं लिख्यते—

**यो ह्यष्टांगनिमित्तानि शासनोन्नतिहेतवे। प्रोच्यते (वक्ति) प्रयुज्यमानश्च(श्च च)तुर्थोऽयं प्रभावकः॥१॥**

सुगमः । अत्रार्थे भद्रबाहुस्वामिज्ञातम् । तच्चेदम्—

दक्षिणापथे प्रतिष्ठानपुरे भद्रबाहुवराहमिहिरौ द्वौ बान्धवौ प्राज्ञौ यशोभद्रगणभृत्पार्श्वे प्रवव्रजतुः । क्रमादग्रजश्चतुर्दशपूर्वी सूरिरासीत् । दशवैकालिकावश्यकादिदशग्रन्थानां स निर्युक्तिमकरोत् । वराहस्तु ज्ञानगर्वेणाग्रजपार्श्वे सूरिपदं याचते । गुरुणोक्तं—'विदुषोऽपि सदर्पस्य सूरिपदं न देयं' । एतत्तस्मै न सस्वदे । ततो द्विजवेषं पुनर्जग्राह । लोकेषु स्वां ख्यातिं प्रथयामास—"अहमा बाल्यात्सदा लग्नविचारे एव तिष्ठामि । मयैकदा पुराद्बहिः शिलायां लग्नं न्यासीकृतं । तत्तथास्थं मुक्त्वाहं स्वस्थाने गतः । यावत् स्वपिमि तावत्तत्स्मृतं । ततो मार्ष्टुं तत्र यामि स्म । तत्र लग्नस्थाने पञ्चास्य-

ततो मध्ये गतः सूरिर्दत्तासने स्थितः श्लोकचतुष्टयं चतुर्दिक्षु पपाठ—

"अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः । मार्गणौघः समभ्येति गुणो याति दिगन्तरम् ॥ १ ॥
सरस्वती स्थिता वक्त्रे लक्ष्मीः करसरोरुहे । कीर्तिः किं कुपिता राजन् येन देशान्तरं गता ॥ २ ॥
सर्वदा सर्वदोऽसीति मिथ्या त्वं स्तूयसे बुधैः । नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥ ३ ॥
कीर्तिस्ते जातजाड्येव चतुरम्भोधिमज्जनात् । आतपाय धरानाथ गता मार्तण्डमण्डलम् ॥ ४ ॥"

श्रुत्वा राजा तुष्टो जगौ—'चतुर्दिग्राज्यं गृहाण' । गुरुः प्राह—'अस्माकं निर्ग्रन्थानां राज्येन किं कार्यं ? ।' ततो नृपोऽवक्—'तर्हि किमिच्छसि ?' । गुरुराचष्ट—"ओंकारपुरे चतुर्द्वारं जिनप्रासादं शिवप्रासादादुच्चं कारय । तत्र पार्श्व-प्रतिमां प्रतिष्ठापय" । ततो राजा सिद्धसेनप्रोक्तमचीकरत् ।

ततः सूरीन्द्रो दक्षिणस्यां प्रतिष्ठाने प्राप्तः । स्वायुरन्तं ज्ञात्वाऽनशनेन स्वर्गलोकमलंचक्रे । संघेन तद्गच्छस्य तं वृत्तान्तं ज्ञापयितुं वाग्मी भट्टश्चित्रकूटे प्रस्थापितः । तद्गच्छे पुनः पुनः श्लोकपूर्वार्धं पठति स्म । यथा—

"इदानीं वादिखद्योता द्योतन्ते दक्षिणापथे ।"

तदा सिद्धसारस्वतया सूरिभगिन्या भणितं—

"नूनमस्तंगतो वादी सिद्धसेनदिवाकरः ॥ १ ॥"

यनं श्रुत्वा जातजातिस्मृतिर्गुरुपार्श्वे गत्वा पृष्टवान्—'किं यूयं तद्विमानादिहागताः' । तैरूचे—'तत्स्वरूपं सर्वज्ञवाचा जानीमः' । स प्राह—'तत्केन प्राप्यते ?' । 'चारित्रेण' इति श्रुत्वा दीक्षां जग्राह । ततः सदा तपसोऽक्षमः प्रौढस्मशा- नेऽनशनेन तस्थौ । तदा प्राग्भवापमानिता पत्नी शिशुयुता शृगाल्यागता । त्रिभिर्यामैर्भक्ष्यमाणः तुर्ये यामे तद्विमाने गतः । तद्वैराग्येण भद्रा एकां गुर्विणीं वधूं मुक्त्वा शेषाभिः सार्धं प्रव्रजिता । गुर्व्याः सुतेन स्वपितृमृत्युस्थानेऽयं प्रासादः कृतः । तन्मध्य इदं बिंबं न्यासीकृतं । क्रमाद्विप्रैरत्र लिंगं स्थापितं । तन्मद्युक्तां स्तुतिं कथं सहते ?" ।

एवं निशम्य तत्पूजार्थं ग्रामशतान्यदत्त विक्रमार्कः । ततो महर्षिं स्माह—"को नाम त्वत्समानो महर्षिः ? । यतः—

**अहयो बहवः सन्ति भेकभक्षणदक्षिणाः । एकः स एव शेषः स्याद्धरित्रीधरणक्षमः ॥ १ ॥"**

इति स्तुत्वा सम्राड् निजं धाम जगाम । तत्प्रभावनया तुष्टेन संघेन शेषपंचवर्षाणि प्रसादपदे मुक्त्वा सूरीन्द्रश्चक्रे । ततः कुवादितिमिरदिवाकर ओंकारपुरं प्राप्तः । तत्र श्राद्धैः स विज्ञप्तः—'स्वामिन्नत्र मिथ्यात्विनोऽर्हच्चैत्यं कारयितुं न ददन्ते' । ततो वादीन्द्रो हस्तन्यस्तचतुःश्लोको विक्रमार्कराजद्वारे गतः । प्रतिहारः सूरिदत्तश्लोकं नृपाय ददौ—

**"भिक्षुर्दिदृक्षुरायातस्तिष्ठति द्वारि वारितः । हस्तन्यस्तचतुःश्लोकः किं वागच्छति गच्छति ? ॥ १ ॥**

ततो राजा प्रतिश्लोकं प्रेषितवान्—

**"दीयते दश लक्षाणि शासनानि चतुर्दश । हस्तन्यस्तचतुःश्लोको यद्वागच्छतु गच्छतु ॥ १ ॥"**

दोषाच्च गर्वितः सन् सिद्धसेनः संघं प्रत्याह—'संघानुमत्या सिद्धान्तं संस्कृतं कुर्वे'। संघोऽप्यनवद्यं जगौ—

"बालस्त्रीमन्दमूर्खाणां नृणां चारित्रकांक्षिणाम्। अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥ १ ॥

प्रज्ञावद्योग्यानि तु चतुर्दशापि पूर्वाणि संस्कृतान्येव श्रूयन्ते। तदेवं जिनाद्याशातनया प्रौढप्रायश्चित्तमापन्नं" तच्छ्रुत्वा गुप्तीकृतसाधुलिंगः कृतावधूतरूपः कृतमौनः संयमयुक्तः संघानुज्ञया जनाज्ञात एव विहरन् सप्तवर्षान्ते उज्जयिन्यां महाकालेशप्रासादमधितस्थौ। धूर्जटौ पादं दत्वा न प्रणमति न वन्दते। ततः कौतुकाक्रान्तः क्ष्माकान्तस्तत्रागत्य तं प्रोचे—'महेश्वरं कथं न वन्दसे'। सूरिरूचिवान्—'अयं देवोऽस्मत्स्तवनादिकं ज्वरार्दितो मोदकमिव न सहते'। नृपोऽवक्—'भो जटिल! किमिदं भाषसे? कुरुष्व स्तुतिं'। ततस्तेन—

स्वयंभुवं भूतसहस्रनेत्रमनेकमेकाक्षरभावलिंगम्।

अव्यक्तमव्याहतविश्वलोकमनादिमध्यान्तमपुण्यपापम् ॥ १ ॥"

इत्यादिवीरद्वात्रिंशद्द्वात्रिंशिका कृता। ततः समहिमां श्रीवामेयस्तुतिं विदधे। तत्र कल्याणमन्दिरैकादशवृत्तविधानावसरे स्मरारिचिह्नं द्विधा भूत्वा झात्कारपूर्वमवन्तिपार्श्वबिंबं प्रकटीबभूव। विस्मितो विक्रमार्कः पृच्छति स्म—'केनायं निर्मितो देवः?'। गुरुराह—

अवन्त्यां भद्राभ्यां जातोऽवन्तिसुकुमालो द्वात्रिंशत्पत्नीश एकदा गवाक्षस्थ आर्यसुहस्तिनो नलिनीगुल्मवर्णनाध्य-

दृष्टे। एका सर्षपविद्या यथात्रोत्पन्ने कार्ये मांत्रिकोऽभिमंत्र्य यावतः सर्षपान् जलाशये क्षिपति, तावन्तोऽश्ववारा निःसृत्य परसैन्यं विजित्यादृशीभवन्ति । द्वितीया चूर्णयोगाद्धेमकोटी निष्पद्यते । अग्रे वाचयन्तं तं निषिध्य देव्या पुस्तिकाऽपजह्रे, स्तंभोऽपि मिलितः ।

ततः कुमारपुरे सूरिर्ययौ । तत्र देवपालनृपो गुरुं नत्वा प्राह—"मम सीमभूपा राज्यं जिघृक्षव आगच्छन्ति, यदि यूयं कृपां मयि कुरुथ तर्हि राज्यं स्थिरं स्यात्" । ओमित्युक्त्वा विद्ययाचार्येणाहवे वैरिबलं भग्नं । ततो राजा जैनी जातः, सूरिष्वेकान्तभक्तश्च । ततः प्रत्यहं नृपाग्रहेणाचार्याः सुखासनासीना बन्दिभिः स्तूयमाना राजकुले व्रजन्ति । तत्प्रमाद-परं तं वृद्धवादी निशम्य वेषं परावर्त्य तत्र प्राप्तः । राजकुले व्रजन्तं तं दृष्ट्वा एकत्र सुखासनदंडे स्वस्कन्धं ददौ । तदा मदभृतचेताः श्लोकद्विपदीमगदीत्—

'भूरिभारभराक्रान्तः स्कन्धोऽयं तव बाधति ।

वृद्धवाद्याह—

'न तथा बाधते स्कन्धो यथा बाधति बाधते ॥ १ ॥'

ततः शंकितेन तेनाचिन्ति—'मद्गुरुं विना मदुक्ते को नामावद्यं वदति ?' इति ध्यात्वासनादुत्तीर्य तस्य पादयोः पपात । स्वप्रमादमालोच्य राजानमापृच्छ्य तैः सह विजह्रे ।

ततो वृद्धवादिनि स्वर्गं गतेऽन्यदा मग्गदयाणमित्यादिप्राकृतपाठे लोकोपहासलज्जित आबाल्यात्संस्कृताभ्यासात् कर्म-

तच्छन्दसा दोधकशब्देन नृत्यद्भिर्गोपैः प्रोचे—'अनेन सूरिणाऽसौ द्विजो जितः'। इति तैर्निन्दितः स्माह—'भगवन्! मां प्रव्राजय'। गुरुराह—'आवां राजसभायां गच्छावो वादहेतवे'। ततस्तत्र गतौ। तत्रापि जितः स सत्यप्रतिज्ञो दीक्षां जग्राह। क्रमेण सिद्धसेनदिवाकर इति बिरुदं दत्वा सूरिभिः स्वपदे स्थापितः।

भव्यांबुजानि प्रबोधयन्तमवन्त्यां समागच्छन्तं वादीन्द्रसूरिं विक्रमार्को वीक्ष्य सर्वज्ञपुत्रपरीक्षार्थं मनसैव नमश्चक्रे। सूरिस्तु तस्मै धर्मलाभं बभाण। तदा मेदिनीपतिः प्राह—'हंहो सूरीन्द्राः! अनमद्भ्योऽप्यस्मभ्यं धर्मलाभः कथं दीयते?' सूरिणाऽभाणि—"चिन्तामणिकोटिभिरपि दुर्लभोऽयं, त्वं चास्मान्मनसैवानमः, तेन तुभ्यं धर्मलाभः प्रादायि।

**दीर्घायुर्भव वर्ण्यते यदि पुनस्तन्नारकाणामपि, सन्तानाय च पुत्रवान् यदि पुनस्तत्कुर्कुटानामपि।**
**(अर्थो म्लेच्छकुलाश्रिते नरपतौ संपूर्ण उद्वीक्ष्यते,) तस्मात्सर्वसुखप्रदोऽस्तु भवतां श्रीधर्मलाभः श्रिये॥१"**

ततस्तुष्टो राजा—

**धर्मलाभ इति प्रोक्ते दूरादुच्छ्रितपाणये। सूरये सिद्धसेनाय ददौ कोटिं धराधिपः॥ १॥**

निःसंगिभिस्तद्द्रव्याग्रहणे संघैर्जीर्णोद्धारादौ उपयोगः कृतः।

अथ सूरिश्चित्रकूटे गतः। तत्रैकः स्तंभः। तन्मध्ये पूर्वाम्नायपुस्तकं गुप्तीकृतं। तं जलादिभिरभेद्यौषधमयं वीक्ष्य सूरिस्तस्य गन्धं गृहीत्वा प्रत्यौषधैराछोटनेनाम्बुजवद्विकसितं कृतवान्। तत्रैकां पुस्तिकामुन्मुद्र्य वाचयताद्ये पत्रे द्वे विद्ये

इतिमंत्रेण पत्रपुष्पफलान्वितं चकार। तदा तन्नाम्नैव वादिनो विदुद्रुवुः वैनतेयनाम्ना नागा इव। ततोगुरुभिःस्वपदे स्थापितः। इतश्च विक्रमार्कमान्यो देवर्षिर्द्विजः। तत्पत्नी देवश्रीः। तयोः सूनुः सिद्धसेनाभिधानः प्रज्ञानिधानतया जगदपि तृणवद्गणयति मिथ्यात्वित्वात्। यतः—

वृश्चिको विषमात्रेणाप्यूर्ध्वं वहति कंटकम्। विषभारसहस्रेऽपि वासुकिर्नैव गर्वितः ॥ १ ॥

यो मां वादे जयति तस्याहं शिष्यो भवामीति प्रतिज्ञां वहन् क्रमाद्वृद्धवादिनः कीर्तिं श्रुत्वा तामसहिष्णुस्तत्संमुखं सुखासनासीनोऽनेकछात्रवृतो भृगुपुरासन्नं गतः। तत्र मार्गे वृद्धवादी मिलितः। परस्परमालापे प्रवृत्ते सिद्धसेनोऽवादीत्—'वादं देहि'। सूरिणोचे—"एवमस्तु। परमत्र केऽपि न सभ्याः। तान् विना वादे कथं जयपराजयव्यवस्था?"। गर्वो(तदो)च्छृंखलेन तेन प्रोक्तं—'इतो गोपालका भवन्तु'। गुरुराह—'तर्हि ब्रूहि यथेष्टं'। तत उच्चैःस्वरं तर्ककर्कशसंस्कृतेऽनल्पजल्पं चक्रे। क्रमाद्गोपैरुक्तं—"अहो! असौ वाचाटः किमपि न वेत्ति, केवलं कासर इव पूत्कारं कुर्वाणः कर्णौ पीडयति। तेनेमं धिक्। हे वृद्ध त्वं ब्रूहि कर्णसुखदं"। अथावसरज्ञः सूरिर्गणछन्दसा नृत्तनिमित्तमुत्तालतालदानपूर्वकमेवमवादीत्—

"न वि मारिइं न वि चोरिइं, परदारगमण निवारिइं। थोवाथोवं दाइइं, सग्गिं टगटगजाइयइं ॥ १ ॥
गहु गोरस गोरडी, गज गुणिजणनि गान। छ गग्गा जो इहां मिले, तो सग्गह श्युं काम ॥ २ ॥
चूडो चमरी चूंदडी, चोलि चरणो चीर। छहुं चच्चे सोहे सदा, सोहव तणुं सरीर ॥ ३ ॥"

वादीभकंठीरवदेवसूरयः, स्याद्वादरत्नाकरग्रन्थदेशकाः ।
कौमुदचन्द्रं कुमतिं दिगंबरं ( दिगम्बरं कौमुदचन्द्रमाहवे, ) जित्वेह प्रापुर्जिनशासनश्रियम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ द्वितीयस्तंभेऽष्टाविंशं व्याख्यानम् ॥ २८ ॥

---

## ॥ अथैकोनत्रिंशं व्याख्यानम् ॥ २९ ॥

अथ वादयोग्यनरस्वरूपं प्रकाश्यते—

नयन्यायप्रमाणानि प्रोक्तानि यानि शासने । तानि तथैव जानाति स वादे कुशलीभवेत् ॥ १ ॥

अत्रार्थे वृद्धवादिसूरिज्ञातम्—

विद्याधरगच्छे श्रीपादलिप्तसूरिसन्ताने स्कन्दिलाचार्यपार्श्वे गृहीतदीक्षो वृद्धो मुकुन्दनामा विप्रो बाढस्वरेण रात्रौ पठन् गुरुणेति निषिद्धः—'हे वत्स! रात्रौ बाढस्वरेणाध्ययनं नोचितं'। अथ स दिवसेऽपि बाढशब्देन पठन् श्रावकैः भाणि—'किमसौ मुशलं पुष्पायिष्यति?'। ततो भृशं खिन्नो विद्यार्थी ब्राह्मीदेव्यग्रे एकविंशतिमुपवासांश्चक्रे। संतुष्टा साह—'सर्वविद्यासिद्धो भव, तपसाहं तुष्टा तुभ्यं'। ततश्चतुष्पथे मुशलं प्रासुकजलैरभिषिच्याह—

"अस्मादृशा अपि जडा भारति त्वत्प्रसादतः। भवेयुर्वादिनः प्राज्ञा मुशलं पुष्प्यतां तदा ॥ १ ॥"

"खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालयच्छायामाश्रयते शशी मशकतामायान्ति यत्राद्रयः ।
इत्थं वर्णयतो नभस्तव यशो जातं स्मृतेर्गोचरं तत्तस्मिन् भ्रमरायते नरपते वाचस्ततो मुद्रिताः ? ॥ १ ॥"

इति नृपं प्रत्याशिषं ददौ । 'वाचस्ततो मुद्रिता' इति तदीयापशब्देन सन्यास्तं स्वहस्तबन्धनमिति विमृशंतो मुमुदिरे । अथ देवाचार्याः—

"नारीणां विदधाति निर्वृतिपदं श्वेतांबरप्रोल्लसत्
कीर्तिस्फातिमनोहरं नयपथो विस्तारभंगीगृहम् ।
यस्मिन् केवलिनो विनिर्मितपरोत्सेकाः सदा दन्तिनो
राज्यं तज्जिनशासनं च भवतश्चौलुक्य जीयाच्चिरम् ॥ १ ॥"

नृपं प्रतीमामाशिषं ददौ । अथ वादिना स्खलितगिरा कियत्स्वपक्षोपन्यासप्रान्ते पृष्टः श्रीदेवपादो वृहदुत्तराध्ययनवृत्तेश्चतुरशीतिविकल्पानुच्चचार । तद्वचनान्यवधारयितुमक्षमः काष्ठावसनी भूयस्तमेवोपन्यासं समभ्यर्थितवान् । ततः श्रीदेवाचार्येणानेकयुक्तिभिस्तिरस्कृतो निर्जितोऽहमिति स्वयमुच्चरन् सिद्धराजेन पराजितव्यवहारपदापद्वारेणापसार्यमाणः आर्तध्यानं प्राप्य क्रमाद्विपेदे । नृपेण सूरयो महामहपूर्वकं श्लाघिता जैनशासनं प्रभावयामासुः ।

"केवलि हुउं न भुंजइ, चीवरसहिअस्स नत्थि निव्वाणं। इत्थी हुवा न सिज्झइ, एयमयं कुसुमचंदस्स॥१॥"

अथ सितांबराणामुत्तरः—

"केवलि हुउं वि भुंजइ, चीवरसहिअस्स अत्थि निव्वाणं।
इत्थि हुवा वि सिज्झइ, मयमेयं देवसूरीणं ॥ २ ॥"[1]

इति। निर्णयवादस्थलवासरे श्रीसिद्धराजाभ्यर्णे षड्दर्शनप्रमाणवेदिषु सभ्येषु समुपस्थितेषु कुमुदचन्द्रवादी पुरोवाद्यमान-डिंडिमो राजसभायां नृपप्रसादीकृतसिंहासने निषसाद। प्रभुश्रीदेवेन्द्रसूरयश्च हेमचन्द्रमुनीन्द्रसहिताः सभायां सिंहासनमेकमेवालंचक्रुः। अथ दिग्वस्त्रवादी स्वयं ज्यायान् किंचिद्व्यतिक्रान्तशैशवं श्रीहेमहिमरश्मिं प्रति 'पीतं तक्रं भवता' इत्यभिहिते श्रीहेमाचार्यस्तं प्रति—'हे जराजलमते! किं ब्रवीष्यसमञ्जसं? श्वेतं तक्रं, पीता तु हरिद्रा'। इतिवाक्येनाधःकृतो 'युवयोः को वादी?' इत्यपृच्छत्। श्रीदेवेन तत्तिरस्करणाय 'अयं भवतः प्रतिवादी' इत्यभिहिते स प्राह—'मम वृद्धस्यानेन शिशुना सह को वादः?'। इत्याकर्ण्याहमेव ज्यायान्, भवानेव शिशुः, योऽद्यापि कटीदोरकमपि नादत्से, निर्वसनश्च। इत्थं राज्ञा तयोर्वितण्डायां निषिद्धायां पणबन्धो मिथः समजनि—"पराजितैः श्वेतांबरैर्दिगंबरत्वमंगीकार्यं, दिगंबरैस्तु देशत्यागः"। इतिपणबन्धादनु स्वदेशकलंकभीरुभिर्देवाचार्यैः सर्वानुवादपरिहारपरैर्देशानुवादपरायणैस्तं प्रति प्रथममूचे—'भवान् कक्षीकरोतु पक्षं'। ततः सः—

---

१ 'इयमयं सियवयस्स' इति चतुर्थपादः क्वचित्.

प्राहिणोत् । क्षपामुखे गुप्तवेषतया तत्र गतः । तेन कस्त्वमित्यभिहिते अहं देवः । देवः कः ? अहं । अहं कः ? त्वं श्वा । श्वा कः ? त्वं । त्वं कः ? अहं देवः । इति चक्रभ्रमं भ्रमयन्नात्मानं देवं दिगंबरं च श्वानं संस्थाप्य यथागतं जगाम । तेन चक्रदोषप्रादुष्करणेन विषादसंपर्कात्—

"हंहो श्वेतपटाः किमेष विकटाटोपोक्तिसंटंकितैः, संसारावटकोटरेऽतिविकटे मुग्धो जनः पात्यते ।
तत्त्वातत्त्वविचारणासु यदि वा हेवाकलेशस्तदा, सत्यं कौमुदचन्द्रमंघ्रियुगलं रात्रिंदिवं ध्यायत ॥१॥"

इति तदुचितां कवितां निर्माय स सूरीन् प्रति प्राहिणोत् । तदनु तच्चरणपरमाणुबुद्धिवैभवावगणितचाणाक्यः पंडितमाणिक्यः

कः कंठीरवकंठकेसरसटाभारं स्पृशत्यंघ्रिणा, कः कुन्तेन शितेन नेत्रकुहरे कंडूयनं कांक्षति ।
कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये, यः श्वेतांबरशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥१॥

अथ रत्नाकरः—

"नग्नैर्निरुद्धा युवतीजनस्य, यन्मुक्तिरत्नं प्रकटं हि तत्त्वम् ।
तत्किं वृथा कर्कशतर्ककेलौ, तवाभिलाषोऽयमनर्थमूलः ॥ २ ॥"

इति तं प्रति सोपहासं प्राहिणोत् । अथ नृपराज्ञी कक्षीकृतनग्नपक्षा सन्यान् तज्जयाय नित्यमुपरोधयन्ती तत्पक्षपातमुज्ज्वलं चकार । ततः कुमुदशशीति भाषां प्रेषयामास—

विरक्ता सपुत्रा दीक्षां जग्राह । ततो मल्लेन नयचक्रग्रन्थः कथंचित्प्राप्य बौद्धान् विजित्य शिलादित्यः स्वशिष्यीकृतः ।

श्रीमल्लवादिचरितं जिनशासनीयतेजःसमुन्नतिपवित्रमिदं निशम्य ।
भव्याः कवित्ववचनादिविचित्रलब्ध्या प्रोद्भावयन्तु जिनशासनमार्हतं भोः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादस्य वृत्तौ सप्तविंशं व्याख्यानम् ॥ २७ ॥

## ॥ अथाष्टाविंशं व्याख्यानम् ॥ २८ ॥

अत्रार्थेऽन्योऽपि प्रबन्ध आविष्क्रियते—

तर्ककर्कशवाक्येन बुद्धिशालिमहात्मना । जेतव्या वादिनः सद्यः शासनोन्नतिहेतवे ॥ १ ॥

स्पष्टः । भावार्थस्तु ज्ञातेनानेन चिन्त्यः—

पत्तने श्रीसिद्धराजसंसदि आशावसनः कुमुदचन्द्रवादी समागात् । नृपेण मातामहगुरुरित्यादिना सत्कृतो भूपदत्ता-
वासे तस्थौ । नृपेण हेमचन्द्रसूरयो वादार्थं पृष्टास्ते वादिविद्याविदं वादीभकंठीरवं प्राहुः । अथ राज्ञा प्रणिधिभिः श्रीदे-
वसूरय आहूताः।ते पत्तनं प्राप्य नृपोपरोधाद्वाग्देवीमाराधयामासुः । तया तूक्तं "वादिवैतालीयश्रीशान्तिसूरिकृतोत्तरा-
ध्ययनवृत्तौ दिगंबरवादस्थले चतुरशीतिविकल्पजालोपन्यासे भवद्भिः प्रतन्यमाने दिग्वाससो मुखं मुद्रितं भविष्यतीति"।
ततो देवसूरिः रत्नप्रभाख्यं प्रथमं विनेयं गुप्तवृत्त्या कुमुदचन्द्रसन्निधौ प्रैषीत् । कस्मिन् शास्त्रे कुशलोऽयमिति ज्ञानाय

प्रत्युक्ते तद्धारणातुष्टया 'वरं वृणु' इत्युक्तो मल्लः प्राह—'नयचक्रपुस्तकं देहि' । तया दत्तं लब्ध्वाऽधिकं शुशुभे । ततो गुरुभिर्मल्लः सूरिपदे स्थापितः । तेन चतुर्विंशतिसहस्रमितं पद्मचरित्रं चक्रे ।

ततो भृगुकच्छे शिलादित्यनृपोपान्ते बुद्धानन्देन सार्धं वादश्चक्रे षण्मासीं यावत् ( क्वचिद्ग्रन्थे तु षड्दिनीं ) नयचक्राभिप्रायेण पूर्वपक्षे कृते तदवधारणाक्षमो बौद्धो यायुक्तं स्मृत्यै खटीहस्तोऽलिखत्, तद्विस्मृत्या खिन्नो हृत्स्फोटेन मृतः । प्रातः शासनसुर्या तत्स्वरूपं ज्ञापयित्वा मल्लाचार्यमुपर्युपरि पुष्पवृष्ट्यादि चक्रे । राज्ञा च वादिमदभंजकविरुदं ददे । तेन राज्ञा तद्देशान्निर्वासिताः सौगताः पुनर्नागताः ।

एष संबन्धोऽन्यत्र राजशेखरसूरिकृते ग्रन्थे त्वेवम्—

खेटकपुरे देवादित्यद्विजपुत्री विधवाभूत् । कस्मादपि गुरोः सौरं मंत्रं प्राप्य तया ध्यातः । ततः सूर्योऽभ्येत्य तां भुक्तवान् । तेन सा सगर्भाभूत् दिव्यशक्तेः । आपन्नसत्त्वा पित्रोपालब्धा । सम्यक्स्वरूपकथने ह्रिया वलभ्यां प्रेषिता । तत्र तया पुत्रीपुत्रौ जनितौ । पठन्तौ लेखशालिकैरपितृक इति प्रोक्ते मातरं पप्रच्छ सुतः—'को मे पितेति' पृष्टे 'न वेद्मीति' मात्रोक्ते पुत्रः खेदान्मर्तुमिच्छन् साक्षाद्भूय सूर्येणोचे—"वत्स ! अहं ते पिता । यस्त्वां पराभवति स कर्करेणानेन वध्यः, पश्चात्कर्करस्तवान्तिकं समेष्यति" । ततः स सर्वाॅंस्तथा घ्नन् वलभीशेन तर्जितः । तमपि तेन हत्वा स्वयं राजा जज्ञे शिलादित्यो जैनः शत्रुञ्जयोद्धारकारी स्वस्वसारं भृगुपुरेशाय ददौ । तस्याः सुतो मल्लः । अन्यदा देशत्यागप्रतिज्ञापूर्वं वलभ्यां वादे दैवाद्बौद्धैर्जिते सर्वे जैनर्षयो विदेशेऽगुः । नृपो बौद्धोऽभवत् । तत्स्वसा पत्युर्मृत्या

चार्वाकोऽध्यक्षमेकं सुगतकणभुजौ सानुमानं सशाब्दं,
तद्वैतं पारमर्षः सहितमुपमया तत्त्रयं चाक्षपादः।
अर्थापत्त्या प्रभाकृद्वदति तदखिलं मन्यते भट्ट एतत्
स्वाभाव्ये द्वे प्रमाणे जिनपतिगदिते स्पष्टतोऽस्पष्टतश्च ॥ १ ॥

तदुक्ता ये ग्रन्थास्तेषां बलात्प्रतिवादी जेय इत्यर्थः। भावार्थस्तु मल्लवादिचरित्रादवसेयः। तच्चेदम्—

भृगुकच्छे राजसमक्षं वादे कृते जितानन्दसूरिर्वितण्डया बौद्धेन जितो ह्रिया वलभ्यां गतः स्वभगिनीं दुर्लभदेवीमजितयशोयक्षमल्लाख्यपुत्रत्रयान्वितां प्रतिबोध्य प्राव्राजयत्। तैर्नयचक्रवालं विना सर्वाणि शास्त्राण्यधीतानि। त्रिषु मध्ये विशेषेण मल्लः प्राज्ञो जातः। "पञ्चमपूर्वोद्धृतसाधिष्ठायकद्वादशारनयचक्रग्रन्थः प्रत्यारं महामहेन पठनार्हः कोशस्थः कस्यापि न दर्शनीय" इति स्वसारं साध्वीं सम्यग् भलापयित्वा गुरवोऽन्यत्र विजहुः। मल्लः कौतुकाद्धस्तत्पुस्तकमुन्मुद्र्य यावत्—

"विधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकमवोचत्। जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम्॥१॥"

इति प्रथमामार्यामवाचयत्तावच्छ्रुतदेव्या पुस्तके हृतेऽतिविषण्णो मात्रा संघेन चोपलब्धो ग्रन्थप्राप्तिं यावद्विकृतिनिषेधमकरोत्। तदेवं केवलवल्लपारणस्तपस्तेपे। चतुर्मास्याः पारणे संघेनात्याग्रह्य विकृतिं ग्राहितः। ततः संघाराद्धश्रुतदेव्या परीक्षार्थं निशि 'के मिष्टा' इत्युक्ते मल्लेनोक्तं 'वल्लाः'। षण्मास्यन्ते पुनः 'के न' इति तयोक्ते 'गुडघृते न' इति तेन

यित्वा मया भोक्तव्यं' इत्यभिग्रहं दधौ। मुक्तर्षिलिङ्गः स तया सह भोगान् भुञ्जानो दिनं दिनं प्रति दश दश जनान् प्रबोध्य दीक्षां ग्राहयामास। अन्यदा द्वादशाब्दान्ते भोजनवेलायां जातायामपि यदा दशमः स्वर्णकारनरो नाबुधत्, तदा द्वित्रिवारं सिद्धान्ने विरसीभूते मुहुर्वेश्यया स आहूयते।

तेनोक्तं दशमो नाद्य प्रबुद्धः साह सस्मितम्। भव त्वमेव दशमः स्वामिन्नोमित्युवाच सः ॥ १ ॥

आग्रहं कुर्वतीं तां तृणमिव त्यक्त्वा जिनपार्श्वे पुनर्दीक्षां तपस्यां चाददे। स्वदुश्चरितमालोच्य त्रिदिवालयं जगाम।

इत्थं जनानागमवाक्यतो ये, विबोधयन्त्यङ्गभवाज्जिनन्दिनः।
ते नन्दिषेणादिवदाप्य भोगान्, क्रमेण सिद्धिश्रियमाप्नुवन्ति ॥ १ ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे षड्विंशतितमं व्याख्यानम् ॥ २६ ॥

---

## ॥ अथ सप्तविंशतितमं व्याख्यानम् ॥ २७ ॥

। अथ तृतीयप्रभावकलक्षणमाविष्क्रियते।

बलात्प्रमाणग्रन्थानां सिद्धान्तानां बलेन वा। यः स्यात्परमतोच्छेदी स वादिप्रतिभावकः ॥ १ ॥

सुगमम्। नवरं प्रमाणानि सौगताद्युक्तानि। यदुक्तम्—

अत्रान्तरे वैभारगिरौ श्रीवीरजिनः समवसृतः । श्रेणिकाभयनन्दिषेणादयो वन्दनार्थं गताः । देशनान्ते श्रेणिकेन स्वामिनां पुरो हस्त्युपशान्तिविषयः प्रश्नः पृष्टः । कथितश्च जिनेन पूर्वभवब्राह्मणभोजनसाधुदानादिव्यतिकरः । पुनरागामिभवप्रश्ने कृते जिनः प्राह—“राजन् ! न्यायागतवित्तस्य सुपात्रदानविनियोगेन नन्दिषेणकुमारोऽनेकान् दिव्यभोगान् भुक्त्वा संयमं प्रपाल्य देवभूयं प्राप्य क्रमेण सिद्धिसुखमवाप्स्यति । गजजीवस्तु पात्रापात्राविवेकतया दानात् भोगान् प्राप्तवान्, परं प्रेत्य प्रथमनरकगामी”। इति श्रुत्वा प्रबुद्धो नन्दिषेणकुमारः श्रावकधर्मं प्रपन्नः। क्रमेण दीक्षां गृह्णन् देवतया ‘तवाद्यापि भोगकर्म बह्वस्ति’ इति वाचा निषिद्धोऽपि प्रव्रज्यां जग्राह । प्रभुणा निषिद्धोऽपि आग्रहान्न विरराम । ततो मुदा दीक्षां कक्षीकृत्य प्रभुणा सह दुष्करतपोभिर्विजहार । क्रमेणानेकसूत्रार्थज्ञोऽभवत् । अथोत्पन्नभोगेच्छां निरुत्सुर्विशेषातापनां चक्रे । तथापि विकारप्रबलमिन्द्रियं ज्ञात्वा चारित्रं रक्षितुं पर्वतमारुह्य झंपापाततत्परं तं करे धृत्वाऽन्यत्र मुक्त्वा देव्युवाच—‘मुधा मर्तुं यतसे, भोगमभुक्त्वा न मृतिं यास्यसि’ । ततोऽन्यदा षष्ठपारणकेऽनाभोगतया एकाकी गणिकागृहे विवेश, धर्मलाभं चोच्चचार । वेश्यया हास्यपूर्वमूचे—

“ धर्मलाभैर्न नः कार्यं द्रव्यलाभोऽस्तु केवलम् ।”

तत ‘एषापि मामुपहसति?’ इत्येवंगर्वभरान्मुनिर्नीव्रतस्तृणमाकृष्य लब्ध्या दशमितां रत्नकोटिमपातयत् । तदा वेश्यापि तत्पदोर्भृंगीव लग्नाऽब्रवीत्—“हे प्राणप्रिय ! अनाथाया अनुरक्ताया मम त्यजनं तव नार्हम्” । महात्मापि तद्वचःपै रक्तो भोगफलं मत्वा तां वेश्यामङ्गीचक्रे । ततस्तत्र “धर्मोपदेशेन प्रतिदिनं दश नवविटान् प्रबोध्य दीक्षां ग्राह-

महाव्रतिसहस्रेषु वरमेको हि तात्त्विकः । तात्त्विकेन समं पात्रं न भूतं न भविष्यति ॥ २॥"

कालेनायुःपरिसमाप्तौ सत्पात्रदानमहिम्ना प्रथमकल्पे सुरः समजनि । ततश्च्युत्वा राजगृहे श्रेणिकसुतो नन्दिषेणनामा जातः । यौवने पञ्चशतराजकन्यापाणिग्रहणं कृत्वा दोगुन्दकदेववत् मनोरमविषयसुखोदधिमग्न आस्ते ।

इतश्च स लक्षभोजनकारी विप्रः पापानुबन्धिपुण्यपोषकस्ताहग्निर्विवेकदानाद्बहुभवेषु किञ्चिद्भोगादिसुखं भुक्त्वा क्वाप्यरण्ये हस्ती जातः । पूर्वयूथेशविनाशितानेकहस्तिषु तया करिण्या यूथेशं वञ्चयित्वा तापसाश्रमे स सूतो मुक्तश्च । तत्र तापसकुमारैः सह वृक्षसेचनात्तापसैः कृतसेचनकनामाभूत् । अन्यदा पितरं यूथेशं हत्वा हस्तिनीयूथं गृहीतवान् । मातुश्च प्रपञ्चं ज्ञात्वा तापसाश्रमं बभञ्ज, 'तापसाश्रमे भग्ने गुप्तवृत्त्यापि नूतनयूथेशः कोऽप्युत्पद्यते न हि' इति मत्वा । ततस्तापसैः खेदार्तैः श्रेणिकस्य गजो दर्शितः । स चैवंभूतः । यथा—

"चत्वारिंशत्समधिकचतुःशतसुलक्षणः । स द्विपो भद्रजातीयः सप्ताङ्गं सुप्रतिष्ठितः ॥ १ ॥"

श्रेणिकेनापि स कथञ्चिद्धृत्वा पट्टहस्ती कृतः । राजयोग्याहाराच्छादनादिभिः परिषेव्यमाणः सुखी जातः । अन्यदा तापसैः 'अस्मदाश्रमभञ्जनफलमेतत्' इति स्मारितमर्मा स्तंभमुन्मूल्य निर्गतः, पुनस्तापसाश्रमं बभञ्ज । तं नियन्तुं पृष्ठे श्रेणिकः सपरिकरो बभ्राम, परं स दुर्मत्तो हस्ती केनापि वशीकर्तुं न शक्यते ततो नृपादेशेन नन्दिषेणकुमारेण स शिक्षितः—'अप्पा चेव दमेअव्वो' इत्यादिना हक्कितः सन् तं कुमारं दृष्ट्वा 'ममैष क्वापि संबन्धी' इति ऊहापोहवशाज्जातजातिस्मृतिः शान्त एव तस्थौ । ततः कुमारेणानीयालानस्तंभे निबद्धः । तद्दृष्ट्वा श्रेणिकादीनां विस्मयो जातः ।

नास्तिकोऽपि कमलः कृतविज्ञः, (लो विहितोज्ञः) शास्त्रयुक्तिकथनेन मुनीन्द्रैः ।
ईदृशा गुरुवरा भविकानां, जाड्यनाशनकृते प्रभवेयुः ॥ १ ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे नास्तिकप्रबोधकसर्वज्ञसूरिप्रबन्धः ॥ २५ ॥

## व्याख्यानं ॥ २६ ॥

अथोपदेशलब्धिगुणवन्नन्दिषेणमुनिप्रबन्धः कथ्यते—

क्वापि सन्निवेशे कोऽपि ब्राह्मणो धनौघैर्धनदस्पर्धी यज्ञमारब्धवान् । लक्षब्राह्मणभोजनसामग्रीं सज्जयामास । तत्र सहायार्थं कमपि जैनदानरुचिं निःस्वं ब्राह्मणं 'लक्षभोजनसमाप्ताववशिष्टान्नाज्यादि तुभ्यं दास्यामि' इति प्रतिज्ञाय स्थापितवान् । क्रमेण विप्रलक्षभोजनसंपूर्तौ शेषतंदुलादिकं न्यायागतं प्रासुकं मत्वा निःस्वद्विजेन चिन्तितम्—'यदुचितमेतत् क्वापि सत्पात्राय दीयते, तदा बहुफलं जायते । यदुक्तं कृपावद्भिः—"नायागयाणं कप्पणिज्जाणं अन्नपाणाइ दव्वाणं पराए भत्तीए अप्पाणुग्गहबुद्धीए संजयाणं अतिहिसंविभागो मुक्खफलो" । तदनु तेन दयाब्रह्मचर्यादिगुणवन्तः कियन्तः साधर्मिका भोजनार्थं निमंत्रिताः । तद्भोजनावसरे च कश्चिन्महाव्रती मासक्षपणपारणे समागमत् । तेन ब्राह्मणेन सत्कारश्रद्धापूर्वकं तदन्नपानादि तस्मै दत्तं 'एतेभ्योऽप्ययं यतिर्विशेषपात्रं' इति निश्चित्य । उक्तं च—

"मिथ्यादृष्टिसहस्रेषु वरमेको ह्यणुव्रती । अणुव्रतिसहस्रेषु वरमेको महाव्रती ॥ १ ॥

एवं कदाचिच्छृंगारवर्णनेन कदाचिच्चेन्द्रजालेन श्रीपूज्यैः स रागवान् कृतः। मासान्ते विहारावसरे सूरयस्तमाहुः— 'हे कमल! कञ्चिन्नियमं कुरु'। हास्यरुचिना तेनोचे—"भूयांसोऽपि मम नियमाः सन्ति। तद्यथा—निजवाञ्छया न मर्तव्यं, पक्वान्ने केलुकादि न भक्ष्यं, क्षीरेषु स्नुह्याः क्षीराणि न पेयानि, अहुतं श्रीफलं मुखे न प्रक्षेप्यं, गृहीत्वा परधनं नार्पणीयं, स्वयंभूरमणात्परतो न गन्तव्यं, अन्त्यजां स्त्रियं न गच्छामि इत्यादि"। तच्छ्रुत्वा गुरुभिः प्रोक्तम्—"अस्माभिरपि सह हास्यमनेकभवनिदानं, यथा कलादेन स्वर्णं कुंभलाद्याकारेणानेकीकृतं, तथा गुर्वाशातनापि जीवं गोत्वनरकत्वांबुत्वभूत्वाद्यनेकदुःखभाजं करोति, अतो नायं हास्यावसरः, कमपि नियमं गृहाण"। कमलोऽपि लज्जयोवाच— "अहं प्रातिवेश्मिकस्य जरतः कुलालस्य खल्वाटीं वीक्ष्य भोक्ष्यामि, नान्यथा"। गुरवस्ततोऽपि धर्मावाप्तिं विज्ञायैवं भवत्वित्युक्त्वाऽन्यत्र गताः। सोऽपि लोकलज्जया पालयति। अन्यदा स राजकुले रुद्धो गृहे चत्सूरेऽगात्। भोक्तुं यावदुपविशति तावन्मात्रा नियमः स्मारितः। तदा स कुलालं गृहेऽदृष्ट्वा खनीं प्रत्यगमत्। नीचैः खनतः प्राप्तनिधेः कुलालस्य दूरतः टट्टिं दृष्ट्वा 'दृष्टा दृष्टा' इति जल्पन् मुष्टिं बद्ध्वा पश्चाद्धावितः शंकितेन कुलालेन 'अर्धं सर्वं वा तव, परं मा गाढं वद' इत्युक्त्वाकारितः स निधिं प्राप। तस्मै पुनर्दयया किंचिद्ददौ। ततो गृह आगत्य दध्यौ—'अहो! जिनधर्म एव भुवि श्रेष्ठः, अलं मिथ्यात्वेन'। ततो हृदि शुद्धभक्त्या गुरवो विज्ञप्तिपूर्वं निमन्त्रिताः धर्मं द्वादशव्रतरूपं गुर्वन्त्यर्णे गृहीत्वाराध्य च स्वर्गमवाप।

व्रजति मृदु सलीलं राजहंसीव तन्वी, त्रिवलिवलितमध्या हंसवाणी सुवेषा ।
मृदु शुचि लघु भुंक्ते मानिनी गाढलज्जा, धवलकुसुमवासा वल्लभा पद्मिनी स्यात् ॥१॥"

इति श्रुत्वा पंडितोऽयमिति ध्यायन् स गृहं ययौ । द्वितीयेऽह्नि स्वयमागत्य स्थितः । सूरयश्चित्रिणीस्वरूपं जगुः—

मदनसदनमस्या वर्तुलोद्भूतमंतर्मृदुमदनजलाढ्यं लोमभिर्नातिसान्द्रम् ॥

प्रकृतिचपलदृष्टिर्बाह्यसंभोगरक्ता, रमयति मधुरोक्तिश्चित्रिणी चित्ररक्ता ॥ १ ॥

एवं तृतीयदिने शंखिनीस्वरूपं प्रोक्तं, चतुर्थदिने हस्तिनीस्वरूपम्। ततः—"हे कमल! स्त्रीणामङ्गेषु स्मरावस्थितिं शृणु—

अंगुष्ठे पदगुल्फजानुजघने नाभौ च वक्षःस्थले, कक्षाकंठकपोलदन्तवसने नेत्रेऽलके मूर्धनि ।

शुक्लाशुक्लविभागतो मृगदृशामंगेष्वनङ्गस्थितिमूर्ध्वाधोगमनेन वामपदगां पक्षद्वये लक्षयेत् ॥ १ ॥

स्मरस्थाने मर्दिता सद्यो वश्या स्यात्। तथा च—

सापि लोचनयुगं नमयन्ती, रुन्धती दयितवक्षसि पातम् ।

सुभ्रुवोर्जनयति स्म विभूषां, संगतावुपरराम च लज्जा ॥ १ ॥"

तच्छ्रुत्वा कमठः प्राह—"हे तात! क्व जीवः? क्व नाकः? क्वापवर्गः? सर्वमेतद्गगनालिंगनप्रायं तुरंगशृंगवत्, तपःसंयमानुष्ठानं पूज्यैः प्रशंसितं तदज्ञजीवविप्रतारणाय" इति रटन् नगरान्तश्चचार। एकदा पित्रा शंकरसूरीणामन्त्यर्णे नीतः। तदा गुरुभिः 'अस्मदभिमुखमेवावलोक्यं' इत्यभिधाय धर्मकथानन्तरं स पृष्टः—'वत्स! किञ्चित्त्वया ज्ञातम्'?। स जगौ —'भगवन्! किञ्चित् ज्ञातं, किञ्चिच्च न'। 'किं कारणं' इति गुरुणा पृष्टे स उवाच—"मया भवतां धर्मं कथयतां चलन्ती गलघंटिकाऽष्टोत्तरशतवारं गणिता। केऽपि गलबलायमानाः शब्दाः शीघ्रं शीघ्रं पतितास्तत्रान्तरे कंठमणिचलनसंख्या नाज्ञायि"। इति श्रुत्वा जना जहृषुः—'अहो! अयं वर्यः श्रोता'। पूज्यैरयोग्योऽयमित्युपेक्षितः अन्यदा पुनरपि अन्यसूरीणां समीपे नीतः। श्रुतपूर्वोदन्तैर्गुरुभिः—'अधः पश्यता त्वयाऽस्मद्व्याख्यानं चिन्तनीयम्'। इत्युक्त्वा व्याख्यानान्ते तथैवोदाहृतः सोऽवोचत्—'इतो विवरादष्टोत्तरशतं कीटिका निर्गताः'। इति हास्यपरं वीक्ष्यान्यश्राद्धैः स हक्कितः। तत एकदोपदेशलब्धियुक्ताः सर्वज्ञसूरय आजग्मुः। पूर्वोदन्तमाकर्ण्य तत्प्रतिबोधाय तमाकारयामासुः। तत्र प्राप्तः मन् गुरुणा ध्यातम्—'अयं साम्ना बोध्यः'। इति विमृश्योचुः—'भद्र! किमपि कामरहस्यं जानासि'। स उवाच—'किमहं वेद्मि? पूज्याः कंचित् सारमादिशन्तु'। गुरव ऊचुः—"हे कमठ! प्रथममिमे स्त्रीभेदा ज्ञेयाः—

पद्मिनीं तदनु चित्रिणीं ततः, शंखिनीं तदनु हस्तिनीं विदुः।
उत्तमा प्रथमभाषिता ततो, हीयते युवतिरुत्तरोत्तरम्॥ १॥

श्रीवज्रसूरेरिति सच्चरित्रं, हृत्पंकजे भृंगसमं विधाय ।
सिद्धान्तपाठे सुगुणैकसारे, कुर्वन्तु भव्याः सततं प्रयत्नम् ॥ १ ॥
॥ इत्युपदेशप्रासादे द्वितीयस्तंभे प्रभावाधिकारे वज्रस्वामिप्रबन्धः ॥ २४ ॥

॥ अथ व्याख्यानम् ॥ २५ ॥

। अथ धर्मकथास्वरूपं लिख्यते ।

व्याख्यानावसरे लब्धिं, यः प्रयुज्योपदेशकः । स धर्मकथको नाम, द्वितीयोऽपि प्रभावकः ॥ १ ॥

व्यम् । नवरं अनुयोगसमये स्वशक्तिं प्रकटीकृत्य हेतुयुक्तिदृष्टान्तैः परं प्रतिबोधयति, स एव धर्मकथानुयोगार्हः, न पुनर्घटप्रदीपवत् स्वस्यैव प्रबोधक इति ।

अत्रार्थे सर्वज्ञसूरेर्ज्ञातमिदम्—श्रीपुरे श्रीपतिः श्रेष्ठी परमदर्शनधरः । तस्य कमलः सुतः, परं धर्मपराङ्मुखो व्यसनी गुरुदेवनिरीक्षणं दुरितमिति मन्यते । स चैकदा जनकेन शिक्षितः—

"बोहत्तरीकलापण्डिया वि, पुरिसा अपंडिया चेव ।
सव्वकलाण वि पवरं, जे धम्मकलं न याणंति ॥ १ ॥"

नाथः कार्यः । एकदा स्वामिसमागमनं श्रुत्वा धनश्रेष्ठी 'द्रव्यकोटिभिः सह मत्सुतामुद्वह' इति गुरुं नत्वा व्यजिज्ञपत् । 'नो चेत्सा निमीलनं प्राप्स्यति'। ततो वज्रो भाषते स्म—'वयं मलक्लिन्नगात्रां स्त्रियं न वाञ्छामः' इत्यादिना कन्यां प्रबोध्य दीक्षयामास । ततश्चैकदा द्वादशवार्षिके दुर्भिक्षे जाते संघं व्याकुलं दृष्ट्वा वज्रो संघं पटे संस्थाप्य सुभिक्षां पुरीमानीतवान् । तत्रान्यदा पर्यूषणापर्वणि समायाते बौद्धेन राज्ञा जिनचैत्येषु पुष्पनिषेधः कृतः । तदनु पर्युषणायां श्राद्धैः स विज्ञप्तो व्योमविद्यया माहेश्वर्यां पुर्यां स्वपितुर्मित्रमारामिकं गत्वा पर्वोत्सवं प्राह। तदा मालिक एकविंशतिं कोटिं पुष्पाणि ददौ । ततो हेमवद्गौ गतः । तत्र श्रीदेव्या महापद्मं दत्तं। ततो हुताशनयक्षवनात् पुष्पाणि लात्वा जृम्भकामरकृतविमानस्थ आगत्य महोत्सवं चकार । जिनधर्मं प्रभावयन् बौद्धनृपतिं श्रावकं चक्रे ।

अन्यदा स्वामिना ( गुरुणा ) कफामये जाते भोजनादनु भक्षणाय कर्णे स्थापिता सा शुंठी प्रतिक्रमणे भूमौ पपात । तत्प्रमादेन स्वमृत्युमासन्नं विचिन्त्य स्वशिष्याय गच्छं दत्वा रथावर्तगिरौ गृहीतानशनो दिवं प्राप। तदनु च श्रीवज्रसेनः सोपारके जिनदत्तश्राद्धगृह आययौ । तदा श्रेष्ठी मुनिं प्राह—"लक्षद्रव्येणैकधान्यमानीतमस्ति, अस्य मध्ये विषं प्रक्षिप्य भुक्त्वा च सकुटुंबेन मया दीर्घनिद्रा करिष्यते" । गुरुणोक्तम्—'कल्ये बहूनि धान्यपूर्णानि यानानि समेष्यन्ति, तेनेदं न कर्तव्यम्'। ततः प्रभाते सर्वत्र सुभिक्षे प्रसृते तेन प्रव्रज्या गृहीता । सूरिर्गणचतुष्टयं संस्थाप्य जिनशासनप्रभावकः समजनि। विशेषतोऽयं प्रबन्ध आवश्यकबृहद्वृत्तितो ज्ञेयः ।

दीक्षां श्रुत्वा जातजातिस्मृतिर्मातुरुद्वेगाय सततं रुदन्नेवास्ते । तद्दुःखार्ता दध्यौ—'यद्यस्य पितायाति, तदा तस्मै दत्वा सुखेनाहं तिष्ठामि' ।

इतो धनगिरियुतः सिंहगुरुस्तत्रागात् । ततो मध्याह्ने आहारार्थं गच्छन्तं धनगिरिं गुरुर्जगौ—'भवताद्य सचित्ता-चित्त ग्रहणे विमर्शो न कार्यः' तच्छ्रुत्वा स क्रमात् सुनन्दागृहेऽगमत् । तं दृष्ट्वा सा प्राह—'पूज्य ! त्वदीयं सूनुं त्वं गृहाण' इत्युक्त्वा तं बालं पात्रे मुमोच । स धर्मलाभं दत्वा गुरुपार्श्वे जगाम । गुरुणा दूरतो महाभारं वीक्ष्य ततोऽङ्के लात्वा वज्रकुमारनाम दत्तं । ततः साध्वीशालायां पालनस्थः श्राविकाभिः पाठ्यमानः शिशुः साध्वीभिर्गण्यमानामेकाद-शाङ्गीं पपाठ । इतस्तत्र वज्रस्त्रिहायनोऽभूत् । साधवोऽप्याजग्मुः । एकदा तेषां पार्श्वे सा पुत्रमयाचत । तैर्न दत्तः । ततः श्रीसंघः सा च भूपपार्श्वे ईयतुः । राज्ञोक्तं—"आलापितो यस्य पार्श्वे संसत्समक्षं बालो गच्छति, तस्यायं पुत्रो ज्ञेयः" ततस्तया भक्ष्यशर्करादिकं गृहीत्वोक्तं—'नन्दन ! एह्येहि, गृहाणेदमिदं' । इति प्रलोभ्यमानो दध्यौ—"माता तीर्थ-मिह लोके सुखदं भवति, गुरवस्तु भवे भवे सुखदाः" इति ध्यात्वोत्प्लुत्य रजोहरणमग्रहीत् । ततः सोऽपि प्रवव्राज । त्रिवार्षिको दीक्षां गृहीतवान् । क्रमादष्टसु वर्षेसु व्यतीतेषु साधुभ्यो वाचनां भिक्षार्थं गतेषु सूरिषु स्वयं ददौ । ततो वज्रं महाविज्ञं विज्ञाय गुरवस्तमशेषशास्त्राण्यपाठयन् । ततो योग्याय तस्मै गुरुभिः सूरिपदं दत्तं । पंचशतयतयो वाण्या प्रबुद्धाः । अनेके भव्या व्रतानि प्रतिपेदिरे ।

इतश्च पाटलीपुत्रे धनश्रेष्ठिसुता रुक्मिणी साध्वीभ्योऽनेकान् वज्रगुणान् श्रुत्वा प्राह—मयात्र भवे वज्र एव प्राण-

ऽन्यतः परिचयेऽपि भावतः, पापसंगतिनिवारणस्पृहः ।
जैनधर्मिधनपालसत्कविः, सर्वदोषगतदर्शनं दधौ ॥ १ ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे पञ्चमदोषत्यागे धनपालकविकथानकं ॥ २३ ॥

## ॥ अथ व्याख्यानम् २४ ॥

अथ षष्ठं प्रभावकाधिकारं प्रकाशयति, तत्रादौ प्रवचनप्रभावकस्वरूपमिदम्—

कालोचितं विजानाति यो जिनोदितमागमम् । स प्रावचनिको ज्ञेयः, शुभे तीर्थप्रवर्तकः ॥ १ ॥

काले सुषमदुःषमादिके उचितं योग्यं जिनप्रणीतं सिद्धान्तं गौतमादिवत् यः सूरिर्विजानाति, स तीर्थस्य चतुर्विधसंघस्य शुभे पथि धर्ममार्गे प्रवर्तकः प्रवचनवान् ज्ञेयः ॥ १ ॥

भावार्थस्तु वज्रस्वामिचरित्रेणैव प्रतन्यते—

यः पालनस्थः श्रुतमध्यगीष्ट, षाण्मासिको यश्चरिताभिलाषी ।
त्रिवार्षिकः संघममानयच्च, श्रीवज्रनेता न कथं नमस्यः ( स नव्यः ) ॥ १ ॥

तुंबवनग्रामे सुनन्दां भार्यां सगर्भां मुक्त्वा धनगिरिश्रेष्ठिना दीक्षा गृहीता । सुनन्दासुतस्तु स्वजन्मसमय एव पितु-

वध्यते'। ततः पूर्णे जाते राजा चरितं शृण्वन् दध्यौ—'अस्यार्थरसो भूमौ मा पततु'। इति धिया पुस्तकस्याधो हेमपात्रममंडयत्। सुधेव तदर्थरसं पिबन् दिनं निशामपि व्यतीतां नैव जानाति स्म। पूर्णे श्रुत्वा राजा जगौ—"यदि विनीतास्थानेऽवंतिः स्थाप्यते, भरतस्थानेऽहं स्थाप्ये, आदिदेवस्थाने चेश्वरः स्थाप्यते, तदायं ग्रंथो वर्यः स्यात्, स्वर्णे सुरभिवत्। एवं चेत्त्वं कुरु, तदा तुभ्यं कोटिद्रव्यं दीयते"। इति श्रुत्वा धनपो जगौ—

"मेरुसर्षपयोर्हंसकाकयोः खरतार्क्ष्ययोः। अस्त्यन्तरमवन्त्यादेरयोध्यादेश्च भूपते ॥ १ ॥"

"अहो! एवं वदतस्तव जिह्वा शतखंडं कथं नाभूत्?"। ततो रोषेण पुनः प्राह पंडितः—

"हे दोमुह य निरक्खर लोहमइ य नाराय किंत्ति भणिमो। गुंजाहि समं कणयं तुल्लं न गओसि पायालं १"

इति निजनिन्दां श्रुत्वा क्रुद्धो राजा तं मूलग्रन्थं भस्मीचकार। अथासौ द्विधा निर्वेदभाक् सशोको गृह आगतः। ततः पुत्र्या तिलकमञ्जर्या पृष्टम्—'तात! किं दुःखम्?'। तेन सर्वं प्रोक्तं। पुत्री प्राह—'लिख्यतां ग्रन्थः, मम मुखे समेति'। ततो हृष्टः पुनः पुस्तकं लिखित्वा तस्य तिलकमञ्जरीति नाम दत्तम्। ततोऽन्यदाऽन्यग्रामे गतो धनपालः। एकदा भोजसभायां केनचित् पंडितेन सर्वेऽपि विद्वांसस्तिरस्कृताः। भूपो विखिन्नः स्वयं गत्वा धनपालं संमान्य समानीतवान्। तमागतं श्रुत्वा स विद्वान् रात्रौ नंष्ट्वा गतः। ततो जैनधर्मस्य प्रशंसा जाता। ततो धनपालोऽपि सुखेन तस्थौ। क्रमाद्धर्ममाराध्य स्वर्भुवं गतः।

अन्यः प्राह—

" जरायष्टिप्रहारेण कुब्जीभूता हि वामना। गतं तारुण्यमाणिक्यं निरीक्षते पदे पदे ॥ १ ॥"

राज्ञोक्तं—' हे वक्रमते धनप! किं पृच्छतीयं बालिका जरतीम् ?'। ततो नृपक्रोधत्यागाय स उवाच—"स्वामिन्! इमां कन्यां प्रति जरती प्रश्नोत्तरं ददाति। तद्यथा—

> किं नन्दी किं मुरारिः किमु रतिरमणः किं नलः किं कुबेरः
>
> किं वा विद्याधरोऽसौ किमु च सुरपतिः किं विधुः किं विधाता।
>
> नायं नायं न चायं न खलु न हि न वा नापि नासौ न वैष
>
> क्रीडां कर्तुं प्रवृत्तः स्वयमिह हि हले! भूपतिर्भोजदेवः ॥ १ ॥"

इदं काव्यं श्रुत्वा भोजः प्रसन्नः प्राह—' मार्गय पण्डित '। धनपालोऽवक्—'हृष्ट्यादिकं मामकीनमपहृतं मह्यं देहि '। राजावक्—' मया तु तव किमपि न गृहीतम् ' स प्राह—" स्वामिन्! त्वया हरिणीवधे सरोवर्णनादिके चैकादिनेत्रकर्षणं ध्यातं, अतो भावतो गृहीतम्"। ततो राजा हृष्टः कोटिदानं ददौ, प्राह च ज्ञानेन त्वं सर्वज्ञपुत्रो जातः श्राद्धभवनात्।

एकदा भोजेन स पृष्टः—' तवाधुना किं व्यग्रमानसं विद्यते ?'। पण्डित आचष्ट—' मयाऽधुना श्रीयुगादिचरितं

किं च हे देव! मांसलुब्धै राक्षसनिभैर्विप्रैरीदृशयज्ञप्रशंसां कृत्वा त्वं कुमार्गे नीतोऽसि। ईदृक्पशुवधे नैव कश्चन धर्मोऽस्ति, प्रत्युत केवलं महापापमेव। शास्त्रेष्वपि सत्ययज्ञ ईदृशो भणितः—

सत्यं यूपं तपो ह्यग्निः कर्माणि समिधो मम। अहिंसामाहुतिं दद्यादेवं यज्ञः सतां मतः ॥ १ ॥
स्वर्गः कर्तृक्रियाद्रव्यविनाशे यदि यज्विनाम्। तदा दवाग्निदग्धानां फलं स्याद्भूरि भूरुहाम् ॥ २ ॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते। स्वपिता यजमानेन किं न तस्मिन्निहन्यते ॥ ३ ॥"

तच्छ्रुत्वा क्रुद्धो नृपस्तं सपरिकरं हन्तुं ध्यातवान्। धनपेन तन्मनोगतं सर्वं विज्ञातं, परं स्वनियमं न तत्याज। ततो नृप ईश्वरप्रासादे गतः। धनपंक्तिं विना सर्वेऽपि शिवं प्रणेमुः। तदा नृपस्तं प्राह—'त्वं शिवस्य कथं प्रणामं न करोषि?' स प्राह—

"जिनेन्द्रचन्द्रप्रणिपातलालसं, मया शिरोऽन्यस्य न नाम नाम्यते।
गजेन्द्रगण्डस्थलदानलोलुपं, शुनो मुखे नालिकुलं निलीयते ॥ १ ॥"

तच्छ्रुत्वा राजा विशेषतः क्रोधारुणनेत्रो यावत् पुरद्वारे समागच्छति, तावदेका वृद्धा नारी बालिकाहस्तविलग्ना कंपमाना संमुखी आगता। तां वीक्ष्य नृपः पंडितान् प्राह—'एषा शिरःकरादिकं कथं धूनयति?' तदा विज्ञोऽवक्—

" कर कंपावइ सिर धुणे बुड्ढी काहू कहेइ। हंकारं ता यम भणइ, नंनंकार करेइ ॥ १ ॥"

ततो नृपाज्ञया सम्यग्धर्मी प्राह—

एषा तटाकमिषतो वरदानशाला, मत्स्यादयो रसवती प्रगुणा बभूव ।
पात्राणि यत्र बकसारसचक्रवाकाः, पुण्यं कियद्भवति तत्र वयं न विद्मः ॥ १ ॥

तत्रापि नृपो द्वितीयदृष्टौ दृष्टिं ददौ । ततो यज्ञे हन्तुमानीतस्य छागस्य दीनां गिरमाकर्ण्य 'किं पशुरसौ व्याहरतीति' नृपेण पृष्टः । कविराजः प्राह—

अस्मान् हन्तु पदे पदे बलिकृते दग्धांश्च(ग्धा च)जग्धैस्तृणैरस्मत्कुक्षिरर्द्धदग्धमनुजैर्नामोच्यते पश्चिति ।
आवां जामिकलत्रभेदविकलाः सत्क्षुत्पिपासा वयं, तेनास्मान्नय देव देवसदनं प्रार्थन्त्यजास्त्वामिति॥२॥

ततो राजा धनपालमवक्—'पंडित ! अयं किं कथयति ?' । सोऽवक्—

"नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बांधवैः॥१॥"

तच्छ्रुत्वा क्रोधेन राजा धनपालमवक्—'अरे ! किं वदसि ?' स उवाच—"स्वामिन् ! सत्यं वच्मि—

यूपं कृत्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥ १ ॥

ततो राजा धनपालं प्राह—'त्वं ममाखेटकं वर्णय'। स आह—

"रसातलं यातु यदत्र पौरुषं, कुनीतिरेषाऽशरणो ह्यदोषवान्।
निहन्यते यद्बलिनातिदुर्बलो, हहा महाकष्टमराजकं जगत्॥ १॥
पदे पदे सन्ति भटा रणोत्कटा, न तेषु हिंसारस एष पूर्यते।
धिगीदृशं तन्नृपतेः कुविक्रमं, कृपाश्रये यः कृपणो मृगे मयि॥ २॥"

इति निर्भर्त्सनात् क्रुद्धो नृपो धनपालस्य दृष्टौ दृष्टिं दत्वा प्राह—'किमेतत्?' इत्युक्ते धनपालः प्राह—

"वैरिणोऽपि हि मुच्यन्ते प्राणान्ते तृणभक्षणात्। तृणाहाराः सदैवैते हन्यन्ते पशवः कथम्?॥ १॥"

इति श्रुत्वा संजातकृपेण तेन धनुर्बाणभङ्गं विधाय मृगयाकरणसंधानं विधाय स्वकारितसरसि गतवान्। तत्रापि नृपवाक्यतः कविराजेन सरोवर्णनं कृतम्। तद्यथा—

"हंसैर्युक्तः प्रशस्तैस्तरलितकमलैः प्रासरंगैस्तरंगैर्नीरैरन्तर्गभीरैश्चटुलबककुलग्रासलीनैश्च मीनैः।
पालीरूढद्रुमालीतलसुतशयितस्त्रीप्रणीतैश्च गीतैर्भाति प्रक्रीडनाभिः क्षितिप तव चलच्चक्रवाकस्तटाकः"

तस्मिन्नेवाहनि केनापि वैरिणा मोदके विषं क्षिप्तमासीत्, तद्दीयमाने मुनिनो-
तेन मुनिः स्मृतः, अशनायाकारितश्च । तस्मिन्नेवाहनि केनापि वैरिणा मोदके विषं क्षिप्तमासीत्, तद्दीयमाने मुनिनो-
क्तम्—'न कल्पतेऽयम्' । सोऽवक्—'किमन्तर्विषमस्ति ?' साधुनोक्तम्—'एवमेव' । ततो धनपालेन परंपरया वैरिक्षिप्तं
विषं विज्ञाय स्वजीवितरक्षकं मुनिं प्राह—'भवद्भिः कथं ज्ञातं' । मुनिना प्रोक्तम्—" पूर्वसूरिवचसा ज्ञातम् । तथा हि—

दृष्ट्वान्नं सविषं चकोरविहगो धत्ते विरागं दृशोर्हंसः कूजति सारिका च वमति क्रोशत्यजस्रं शुकः ।
विष्टां मुञ्चति मर्कटः परभृतः प्राप्नोति मृत्युं क्षणात्, क्रौञ्चो माद्यति हर्षवांश्च नकुलः प्रीतिं च धत्ते द्विकः॥

तेनेमं मोदकं वीक्ष्य पञ्जरस्थोऽयं चकोरो नयने न्यमीलयत्, इत्यादिना मया ज्ञातम्" । तन्निशम्य विस्मितो धन-
पालः । पुनर्दध्यानीतम् । साधुः प्राह—'त्रिदिनीयमिदमपि न कल्पते' । बुधोऽवक्—'किमत्र जीवाः सन्ति ?' । 'एवमेव'
इत्युक्त्वा साधुना दध्नि यावकरसं मुक्त्वा जीवा दर्शिताः । ततः प्रासुकं ददौ । ततो मुनिं प्रत्याह—'भगवन् ! युष्मान्
दृष्ट्वा भूयो भूयो मम भ्राता स्मरति' । साधुरवक्—'हे सखे ! तव समीपे त्वद्भ्रातैवास्ति' । इति वाक्येन सप्रत्ययः स
मुमुदे । ततः शोभनस्तं निश्चलं श्रावकं कृत्वाऽन्यत्र विजहार । धनपालः पञ्चशतपंक्तिषु मुख्योऽजनि ।

अन्यदा भोजः पञ्चशतीपंक्तियुतः पापर्ध्यै गतः । तत्रैकं हरिणमेकेन बाणेन हतवान् । ततः पलायमानान् श्वाप-
दान् वीक्ष्य राजा कविराजं प्राह—

किं कारणं तु कविराज मृगा यदेते, व्योम्न्युत्पतन्ति विलिखंति भुवं वराहाः ।
देव ! त्वदस्त्रचकिताः श्रयितुं प्रयान्ति, एके मृगाङ्कमृगमादिवराहमन्ये ॥ १ ॥

मन्दबुद्धेः पुरुषस्य, न तु संपूर्णस्याद्वादशानां महतामिति । यथा कुविकल्पानां परिचयेऽपि केचित् गुणज्ञाः प्रत्युत तेषां सम्यग्दर्शनं स्फुटतरं कुर्वन्ति ।

अत्रार्थे धनपालकविप्रबन्धः । स चायम्—

धारानगर्यां लक्ष्मीधरविप्रस्य द्वौ तनुजन्मानौ धनपालशोभनाह्वौ जातौ । एकदा तस्य गृहे न्यस्तो निधिर्बहु विलोकितोऽपि न लभ्यते । अन्यदा वेदानामपि ज्ञातारस्तत्रागता जिनेश्वरसूरयो लक्ष्मीधरेण पृष्टा ऊचुः—"यद्येकं पुत्रमस्माकं ददासि तदा तव निधिं दर्शयामः" । तेनापि प्रतिपन्ने गुरुपादैरद्विवलयचक्राम्नायेन निधिर्दर्शितः । क्रमादन्त्यावसरे तेन स्वप्रतिज्ञा पुत्राभ्यां ज्ञापिता । सखेदं पितरं वीक्ष्य शोभनः प्राह—"अहं त्वामनृणं करिष्यामि" । ततस्तन्मृते स्वजनमनापृच्छयैव गुरुपार्श्वे दीक्षां जग्राह । ततो धनपालभयेन गुरुभिर्मालवे विहारो निषिद्धः । शोभनो महाविद्वान् जिनस्तुतिकरणव्यग्रमना विहरणाय गतः । घृतपात्रमोचनसमये दृषत्पात्रमादायागतो गुर्वभ्यर्णे । तत् दृष्ट्वा तत्स्पर्धाकारिभिर्हसितः—'अहो ! अस्य महालाभोदयो जातः' । ततः शोभनेन गुरुं प्रति यथास्थितं प्रोक्तम् । तच्छ्रुत्वा काव्यानि दृष्ट्वा गुरुर्जहर्ष । अन्यदा गुरुराह—"भोः शिष्य ! त्वं तत्र गत्वा जैनद्वेषिणं धनपालं बोधय" । तदङ्गीकृत्य शोभनस्तत्र गतः । अवन्त्या द्वारे प्रविशन् धनपालेन दृष्टः । तेन हास्यात्प्रोक्तम्—'गर्दभदन्त भदंत ! नमस्ते' । साधुः प्राह—'मर्कटकास्य वयस्य सुखं ते?' । इति मुनेर्वचश्चातुर्यान्निर्जितोऽस्मीति विचिन्त्यावक्—'कस्य गृहे वसतिस्तव साधो' । साधुराह—'यस्य रुचिस्तस्य गृहे मम वसतिः' । ततस्तं विद्वांसं मत्वा धनपालः स्वगृहे समुत्ततार । ततः स्वौकसि भोक्तुमुपविशता

त्पतन्ति । तान् शोधयित्वा ते वणिजो गोळिकाः गृह्णन्ति । हे गौतम स सुमतिः परमाधार्मिकतश्च्युत्वान्तरंडगोळिको नरो भविष्यति । पुनस्तदेव देवत्वं । इत्थं सप्त भवान् यावत् ज्ञेयम् । ततो व्यन्तरत्वं वृक्षत्वं पक्षित्वं स्त्रीत्वं षष्ठनरकत्वं कुष्ठिनरत्वं च । इत्थमनन्तं कालं परिभ्रम्य कर्मक्षये सार्वभौमपदं प्राप्य प्रव्रज्यां गृहीत्वा मुक्तौ गमिष्यति । नागिलस्तु द्वाविंशतितमजिनपार्श्वे दीक्षां प्राप्य मुक्तिं गतः" ।

विशेषतोऽयं प्रबन्धो महानिशीथचतुर्थाध्ययनतो ज्ञेयः ।

निशम्य वृत्तं सुमतेः सदास्तिकैः, कुशीलशंसां त्यजत सताऽमताम् ।
विशुद्धसम्यक्त्वविभूषितस्तथा, सुसंगतो नागिल आप मुक्तिम् ॥ १ ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे कुशीलशंसोपरि नागिलदृष्टान्तः ॥ २२ ॥

---

## ॥ अथ त्रयोविंशतितमं व्याख्यानम् ॥ २३ ॥

अथ पञ्चमो मिथ्यादृष्टिसंस्तवदोषो वितन्यते ।

मिथ्यात्विभिः सहालापो गोष्ठी परिचयस्तथा । दोषोऽयं संस्तवो नाम सम्यक्त्वं दूषयत्यसौ ॥ १ ॥

सुगमः । नवरं तैः सह परिचयो दोषाय स्यात् । तत्क्रियाश्रवणावलोकनाभ्यां दर्शनभेदः संभाव्यतेऽनेकान्ताज्ञ

पम्" । "हे गौतम ! तेनानन्तसंसारित्वमर्जितं, तथापि संक्षेपेण शृणु—लवणोदधौ गंगासिन्धू महानद्यौ प्रविष्टे स्तः । तत्प्रदेशाद्दक्षिणभागे वेदिकातः पञ्चपञ्चाशद्योजनान्यतिक्रम्य तत्र सार्धद्वादशयोजनप्रमाणो हस्तिकुंभाकारः सप्तार्धयोजनोन्नतो द्वीपोऽस्ति । तत्र तिरस्कृतकज्जलकेशकादंबिनीभ्रमराभाः सप्तचत्वारिंशत् कन्दराः सन्ति । भगन्दरामयानुकारा विद्यन्ते तासु जलचारिणो नराः प्रथमसंहनिनो मद्यमांसपा मषीकूर्चकाभा दुर्गन्धिनश्चान्तरंडगोलिकानामानश्च । तेभ्यो निःसृतान्तरंडगोलिकाश्चमरीपुच्छकेशैर्ग्रथनं कृत्वा कर्णयोर्निबध्य समुद्रे प्रविशन्ति । तेषां जन्तवो न प्रभवन्ति । तदा समुद्रान्तःस्थरत्नादि संगृह्य स्वस्थलं आगच्छन्ति" । तदा गौतमेन पृष्टम्—"भगवन् ! केनोपायेन गृह्णन्ति ?" । प्रभुराह—"गौतम । लवणोदधौ रत्नाह्वोऽन्तर्द्वीपोऽस्ति । तत्र वासिनो रत्नवणिजः यत्र समुद्रनिकटे वज्रशिलासंपुटानि घरट्टसंस्थानानि सन्ति तत्रागत्य तान्युद्घाट्य मध्ये चतस्रो महाविकृतीः प्रमुञ्चन्ति । ततस्ते यत्रान्तरंडगोलिकाः सन्ति, तत्र मांसादीन् गृहीत्वा वणिजः समागच्छन्ति । ततस्ते दूरतस्तान् वीक्ष्य हन्तुं प्रधावन्ति । वणिजोऽपि मांसादिभृतानि पात्राणि तेषां भक्षणाय पदे पदे निक्षिप्य झटिति प्रत्यावर्तन्ते । तेऽपि वणिजां पृष्ठे प्रधावन्ति यावत् वज्रशिलासंपुटं । तत्रागत्य च तन्मध्ये मांसादिभक्षणाय ते प्रविशन्ति । वणिजश्च स्वस्थाने गच्छन्ति । ततस्ते मांसादि परिभुञ्जानाः सप्ताष्ट दश पञ्च वा दिनानि यावत् गमयन्ति, तावत् ते वणिजः ससन्नाहखड्गा आगत्य सप्ताष्टमंडलैस्तानि परिवेष्टयन्ति, अन्ये पुनः पूर्वोद्घाटितानि मुद्रितानि कुर्वन्ति । कदाचिदेकोऽपि तन्मध्यान्निःसरति तदा तान् सर्वानभिहन्ति । ईदृशास्ते बलिनस्तन्मध्ये संवत्सरं यावदमृतास्तिष्ठन्ति । महावेदनयार्तानां तेषामवयवा बहिःप्रदेशे पिष्टव-

लाख्यौ द्वौ धनाढ्यौ भ्रातरौ स्तः। अन्यदा केनचित्कर्मणा ताभ्यां निर्धनं प्राप्ते परस्परं चिन्तितम्—"आवां विज्ञ-वाज्ञावेऽन्यजनपदे गच्छावः"। ततः शुभेऽह्नि निर्गतौ। एकदा मार्गे गच्छद्भ्यां ताभ्यामेकेन श्राद्धेन सह पञ्च साधवो गच्छन्तो दृष्टाः। सुसार्थं ज्ञात्वा तैः सह तौ गतिं चक्रतुः। एकदा तेषां चेष्टया भाषणेन च कुशीलत्वं चित्ते निधाय नागिलः सुमतिं स्माह—"आवयोरेभिः सह गमनं नार्हम्। यतः श्रीनेमिजिनमुखतः श्रुतं सूत्रं "जहा एवंविहे अण-गाररूवे भवंति, ते कुसीले, ते दिट्ठीए वि निरिक्खिउं न कप्पंति"। अत एतान् कुदृष्टीन् मुक्त्वाऽग्रे व्रजावः। ततः सुमतिः वक्रदृष्ट्या प्राह—"इमे साधवो गुणिनो दृश्यन्ते, अत एभिः सह आलापगमनादिकं युक्तमेव"। ततो नागिलः प्राह—"अहं मनसापि साधुदोषग्रहणं न करोमि किं तु—"मए भगवउ तित्थयरसगासे एरिसमवधारियं, जहा कुसीले अदट्ठव्वे"। ताहे भणियं सुमइणा—"जारिसो तुमं निब्बुद्धिउ तारिसो सोवि तित्थयरो, जेण तुम्हमेवं वायरि-यति"। एवं वदतस्तस्य नागिलेन स्वहस्तेन मुखं स्थगितं, ऊचे च—"अरे बन्धो! अनन्तसंसारनिदानं मैवं वद। अहमेषु मध्ये बालतपस्वित्वं जानामि, अनेकगुप्तिविषयादिदोषदूषितत्वात्। अतः संगं मुक्त्वा गच्छामि"। सुमतिः प्राह—"अहं त्वेषां संगं प्राणं यावन्न त्यजामि"। ततः सुमतिना तत्पार्श्वे दीक्षा गृहीता। अथ तेषु मध्ये चत्वारः संसारं भ्रान्त्वा मुक्तिं गमिष्यन्ति। तेषु पञ्चमोऽभव्योऽस्ति। अथ गौतमो जिनं प्राह—"स्वामिन्! सुमतिर्भव्योऽभ-व्यो वा?"। भगवानाह—"हे इन्द्रभूते! सुमतिर्भव्योऽस्ति"। गौतमः प्राह—"तदा स क्व गतौ गतः?"। "हे गौतम! परमाधार्मिकदेवत्वेनोत्पन्नः कुशीलप्रशंसया जिनात्याशातनया च"। गौतमः प्राह—"भगवन्! अग्रेऽस्य किं स्वरू-

कुलं स्वकृत्यैरकुलप्रसूतः, सन्मानितोऽपि प्रकटीकरोति ।
श्रीश्रेणिकांसे निदधे यदंघ्रिर्दुर्गन्धया पण्यवधूद्भवत्वात् ॥ १ ॥

ततः स्मृतवीरवचनो नृपः स्मितमकरोत् । सापि तत्कालं पृष्ठादुत्तीयाकांरुहास्यकारणमप्राक्षीत् । तदा तत् पूर्वभवादारभ्य हास्यपर्यन्तं स्वामिनाख्यातं तच्छ्रुत्वा जातवैराग्या सा वीरान्तिके प्राव्राजीत् ।

श्रीश्रेणिकस्त्रीचरितं निधाय, चित्ते जुगुप्सा यतिसंयतीनाम् ।
कुर्वन्ति जीवा न कदापि कष्टे, तेऽनुत्तरां सिद्धिगतिं लभन्ते ॥ १ ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे तृतीयविचिकित्सादोषत्यागे दुर्गन्धाज्ञातम् ॥ २१ ॥

## ॥ अथ द्वाविंशं व्याख्यानम् ॥ २२ ॥

॥ अथ सम्यक्त्वतूर्यदूषणम् ॥

अतीतानागता ये च सन्ति वा येऽन्यलिंगिनः । तेषां प्रशंसनाशंसाविधो दोषश्चतुर्थकः ॥ १ ॥

सुगमम् । नवरमसौ द्विधा—सर्वविषयो देशविषयश्च । तत्र सर्वाण्यपि दर्शनानि सत्यानीति माध्यस्थ्येन स्तुतिः, स सर्वविषयः । देशविषयश्चायं इदमेव बुद्धवचनं सांख्यवचनं वा सत्यमिति । उभयथापि सम्यक्त्वदोषौ वर्जनीयाविति विशेषार्थः । अत्रार्थे महानिशीथसूत्रानुसारेण सुमतिनागिलप्रबन्धं कुर्वे—मगधदेशे कुशस्थलपुरे जीवाजीवादितत्त्वज्ञौ सुमतिनागि-

दानोपार्जितभोगफलैषा मृगमदकर्पूरादिभ्योऽप्यधिकसुगन्धिदेहाऽष्टवर्षा तवाग्रमहिषी भविष्यति । तदभिज्ञानं चाष्ट-क्रीडायां जितस्य तव पृष्ठेऽधिरोहणं विधास्यति"। इति निशम्य सविस्मयो राजा श्रीजिनं नत्वा गृहमगमत् ।

इतश्च निर्जरितदौर्गन्ध्यकर्मा साऽनपत्यया गोपस्त्रिया गृहीता । क्रमेण यौवनं प्रपेदे। एकदा संप्राप्तकौमुद्युत्सवे वनिताश्रेणिवर्णनायागतोऽभयेन सह नृपः । तदा—

श्यामा यौवनशालिनी सुवचना सौभाग्यभाग्योदया, कर्णान्तायतलोचना कृशकटी प्रागल्भ्यगर्वान्विता
रम्या हंससरालमन्थरगतिर्मत्तेभकुंभस्तनी, बिंबोष्ठी परिपूर्णचन्द्रवदना भृंगालिनीलालका ॥ १ ॥

एतादृशीं तां गोरसुतामवलोक्य संजातकामो नृपः स्वामूर्मिकां तदुत्तरीयाञ्चले निबध्य ततस्तदन्वेषणार्थं 'मम मुद्रिका पतिता केनापि हृता' इत्यभयं प्राह । सोऽपि पितुर्वचनमदंभं विदन् सर्वाण्यपि वनद्वाराणि निरुद्ध्यैकेन द्वारेण निर्गच्छन्तीनां रमणीनां पाणिपटाञ्चलान्यवलोकयन् तस्या उत्तरीयाञ्चलतो निर्गतां तामूर्मिकां वीक्ष्यापृच्छत्—"त्वया राज्ञोऽङ्गुलीयकं कथं गृहीतम् ?"। तदा सा कर्णौ पिधाय 'नाहं किमपि जानामि' इत्यवदत् । तद्वचसेङ्गितेन चौदार्यपरां तां मत्वा मंत्री दध्यौ—"नूनमेषा न चौर्यकारिणी, किं तु जातरागस्य पितुः कर्तव्यम्"। ततस्तया सह मंत्री नृपोपान्तेऽभ्येत्योचे—"हे देव ! अनया भवतां चित्तमचोरि, तेन मुद्रिकाकथया पर्याप्तम्" । श्रेणिकोऽप्येवमेवेति निगद्य तामग्रमहिषीं चकार । अन्यदा जितस्य तस्य पृष्ठे निःशंकं साऽधिरूढा । यतः—

शंका हि सकलपदार्थज्ञाक्त्वेन द्रव्यगुणविषया, विचिकित्सा तु क्रियाविषयैव। यद्वा मुनिजने मलमलिनगात्रं वीक्ष्य जुगुप्सा सदाचारमुनिनिन्दा "यदीमे प्रासुकवारिणाङ्गप्रक्षालनं कुर्वते तदा को दोषः स्यादिति"। इयमपि भगवद्धर्मानाश्वासरूपत्वात् सम्यग्दर्शने दोष इति प्रदेशार्थः। अत्रार्थे दुर्गन्धाराज्ञीप्रबन्धो ज्ञेयः तथाहि—

राजगृहे श्रेणिकः पार्थिवः। एकदा तत्र समवसृतं श्रीवीरं नन्तुं सर्वर्द्ध्या गच्छन् स राजा दुर्गन्धपराभवाद्वस्त्राञ्चलैर्घ्राणानि पिदधानान् सैनिकानवलोक्य किमेतदिति कमपि स्वं सेवकमप्राक्षीत् अस्य दुर्गन्धस्य निदानम्। तदा "अध्वनि जातमात्रैका बालिका पतितास्ति" इति तेनोक्ते राजा 'पुद्गलानां परिणाम एषः' इति प्रोच्य तां तथारूपां पतितां विलोक्य समवसरणे गत्वा श्रीवीरं प्रणम्य चावसरे तस्याः प्राक्चरितमपृच्छत्। भगवानाह—वाणिज्यशालिग्रामे धनमित्रस्य श्रेष्ठिनो धनश्रीः सुता। एकदा ग्रीष्मतौ तस्या विवाहे प्रारब्धे तदोकसि भिक्षार्थं साधवः समेताः। तदा पित्रादिष्टा सा प्रतिलाभयितुं प्रचक्रमे। तदा चाप्रतिकर्मितशरीराणां महात्मनां स्वेदमलदुर्गन्धेन मोटितमुखकमला जातयौवनवला सर्वाभरणशालिनी मनोहराङ्गरागतारुवहारिणी सा धनश्रीर्दध्यौ—"अहो! निष्पापे श्रीजिनमार्गे स्थिता अमी साधवो यदि प्रासुकेनापि वारिणा स्नान्ति तदा को दोषः" इति जुगुप्साभवं कर्मानालोच्य मृता साऽत्र राजगृहे गणिकोदरे सुतात्वेनोत्पन्ना। तेन दुष्कर्मणा गर्भस्थिता सा मातुर्भृशमरतिमकरोत्। तेन गर्भेणोद्विग्ना सा वेश्या गर्भपातनौपधीर्विदधानाऽपि समये सुतां तां दुर्गन्धां प्रसूतां विष्टामिव बहिरत्यजत्"। 'अथ काऽस्या गतिः?' इति राज्ञा पृष्टः प्रभुः प्राह—"हे राजन्! अनया स मुनिजुगुप्साभवः कर्मविपाकः सर्वोऽपि भुक्तः। अथ सुपात्र-

कुलदेव्यूचे—“रे दुष्ट! मदग्रतः शीघ्रमुत्तिष्ठ । यान् स्वगृहे पूजयसि ते दास्यन्ति”। ततस्ते देवाः स्मित्वा मिथः प्रोचुः । तत्र लंबोदरश्चंडिकां प्रोचे—“भद्रे ! भक्तेऽभीष्टप्रदा भव ।” चंडिकाप्युवाच—“यक्षोऽस्याभीष्टं दास्यति, यः प्रौढासने निवेशितो मत्पूर्वं पूज्यते”। यक्षोऽप्यभाषिष्ट—“एतस्याभीष्टं शासनदेवतैव दास्यति”। एवं सर्वैर्मिथः सोपहासमुपेक्षितोऽतीवखिन्नः किंकर्तव्यतामूढः शासनदेव्योक्तः—“निद्राविकथाहास्यपरानन्यान् मुक्त्वा श्रीसर्वज्ञं देवाधिदेवं क्षीणाष्टकर्माणं कृपावतारं त्रिकालज्ञमेवाराधय, यथा भवद्वयेऽपि सौभाग्यश्रीप्रदः स्यात्”। तच्छ्रुत्वा तेन तथा कृतम् । ततो दृढनिराकांक्षाय तस्मै सा तद्बलं ददौ । पुनरधिकां समृद्धिं प्राप । प्रेत्य पुनरासन्नसिद्धिको जातः ।

> कांक्षाख्यदोषं श्रुतगर्हितं तं, समाचरन् स्यादुपहासपात्रम् ।
> उपासकश्रीधरवत्तदत्र, कार्या नचैषा जिनशासनज्ञैः ॥ १ ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे द्वितीयदूषणत्यागे श्रीधरवणिग्ज्ञातम् ॥ २० ॥

## ॥ अथैकविंशतितमं व्याख्यानम् ॥ २१ ॥

। अथ तृतीयो विचिकित्सादोषः प्ररूप्यते ।

**देशतः सर्वतो वापि कृतक्रियाफलं प्रति । क्रियते हृदि सन्देहो विचिकित्साभिधस्स कः ॥ १ ॥**

विचिकित्साभिधः सामायिकादिक्रियाफलं प्रति सन्देहः कृषीवलादीनामिव । नन्वियं शंकातो न भिन्ना । उच्यते—

गुणदोषापरिज्ञानात् सर्वदेवेषु भक्तिमान् । यः स्याच्छ्रीधरवत् पूर्वं स तु नैवाश्नुते सुखम् ॥ १ ॥

गजपुरे श्रीधरवणिक् प्रकृत्या भद्रकः । सोऽन्यदा मुनिपार्श्वे धर्ममश्रौषीत् । ततः स त्रिसन्ध्यं परमात्मानमर्चयति स । एकदा जिनौकसि धूपमुत्क्षिपन्नभिग्रहं जग्राह 'एतावति धूपेऽनुत्क्षिप्ते इतः स्थानान्न चलामीति' । दैवात्तत्राहिर्निरगमत् । तथापि निश्चलं तं यावत्स दशति, तावत्तत्सत्त्वतुष्टा देवी दुष्टाहिं दूरमुत्सार्य तस्मै मणिं ददौ । तेन तस्य लक्ष्मीर्वर्षालतेव सर्वतोऽप्यवर्धिष्ट । अन्यदा स्वकुटुंबे किञ्चिन्मांद्योत्पत्तौ केनाप्युक्तं 'गोत्रदेवीपूजया गोत्रे कुशलं स्यात्' । ततस्तेन तथा कृतम् । कदाचित्स्वस्यामयोत्पत्तौ कस्यचिद्वचसा यक्षोऽर्चितः । एवं लोकोक्त्या शान्तिलाभार्थं भाविगदनिवृत्तये नित्यमानर्च । भावुकजीवः सदसत्संगत्या गुणदोषौ प्राप्नोति । यदुक्तम्—

एके ( काश्चित् ) भेजुर्यतिकरगतास्तुंबिकाः पात्रलीलां,<br>
गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः ।<br>
अन्ये केचिद् ( अन्याः काश्चिद् ) ग्रथितसुगुणा दुस्तरं तारयन्ते,<br>
तेषां मध्ये ज्वलितहृदया रक्तमन्ये ( मन्याः ) पिबन्ति ॥ १ ॥

अन्यदा तस्करैस्तस्य गृहसर्वस्वं मुषितम् । ततः क्षुब्धो भोजनस्यापि संदेहे पपात । ततोऽतिदुःखितस्तेषां देवानामग्रे कृताष्टमस्तस्थौ । तृतीयेऽह्नि ते देवा जगुः—"भोः किमर्थमस्मानस्मार्षीः?" । "संपत्तिं मे ददतु" इति सोऽवदत् । ततः

भवेपि सुखने युज्यन्ते । अयमपि धर्मः साधीयानित्येवं दर्शनं दूषयतीत्यर्थः । भावार्थस्तु जीतशत्रुनृपमंत्रिदृष्टान्ताज्ज्ञेयः । स चायम्—

अस्ति स्वस्तिमद्वसन्तपुरम् । तत्र जितशत्रुर्महीन्द्रोऽभूत् । तस्य मतिसागरनामा मंत्र्यभवत् । एकदा नृपो हिमकरकिरणधवलतुरंगयुगलं दृष्ट्वा प्रसन्नस्तस्य स्वामिनो मूल्यं दत्वा जग्राह । ततस्तत्परीक्षायै अमात्येन सह वाजिनमारुह्य मंडलीभ्रमादिगतिमकारयत् । तदा तिरस्कृतपवनजवाभ्यां कुशिष्यवद्विपरीतशिक्षिताभ्यां ताभ्यां भीमेऽरण्ये पातितौ श्रमार्तौ क्षुधितौ तत्र वर्तिफलकन्दाद्याहारयन्तौ वहुवासरान् गमयामासतुः । ततः कैश्चिद्दिनैर्मिलितेषु स्वसैन्येषु तौ स्वपत्तनमीयतुः । ततो राजा जरूतया सर्वधान्यादिपचनकृते सूपकारानाह । सूपकारा अपि पृथक् पृथक् सर्वान्नपाकं कृत्वा राज्ञः पुरो ढौकितवन्तः । सोऽपि क्षुत्क्षामकुक्षिर्वाडवाग्निर्जलमिव स्वैरमाहारयन्नसुर इव न तृप्तिमाप ।

ततो नृपतिः शूलेनात्याहारान्मृतवान्निशि । कृत्वा मंत्री पुनर्वान्तिविरेचादीनि पथ्यभुक् (सौख्यभाक्)

निराकांक्षपथ्यान्नेन सुखभागभूव । अत्रोपनयः—यथा राजामात्यौ तथा जीवाः । तत्र ये किमपि तपश्चरणादिकं वाह्यगुणमालोक्यान्यान्यदर्शनकांक्षिणस्ते हि नृपवदप्राप्ततृप्तयो दुर्गतिभाजनं भवेयुः । ये च स्याद्वादसुपक्षे सुनिश्चलास्ते मंत्रिवत् सुखं प्राप्नुयुः ।

। इत्याकांक्षायां नृपमंत्रिप्रवन्धः ।

। अत्रार्थेऽन्योऽपि वृत्तान्तोऽयम् ।

यत्रापि मतिदौर्बल्यादिभिर्मोहवशात् क्वचित् । संशयो भवति तत्राप्यप्रतिहतेयमर्गला ॥ १ ॥

यथा—

कत्थ य मइदुब्बलेण तव्विहायरियविरहओ वावि । नेयगहणत्तणेण य नाणावरणोदएण च ॥ १ ॥
हेऊदाहरणासंभवे य सइ सुट्ठु जं न बुज्झिज्जा । सव्वन्नुमयमवितहं तहावि तं चिंतए मइमं ॥ २ ॥

केवलागमगम्या ये पदार्थास्ते अस्मदादिप्रमाणपरीक्षानिरपेक्षा आत्मप्रमाणेन कृत्वा न संदेग्धुं योग्याः ।

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे सम्यक्त्वप्रथमदूषणोच्चाररूपमेकोनविंशतितमं व्याख्यानम् ॥ १९ ॥

---

## ॥ अथ विंशं व्याख्यानम् ॥ २० ॥

। अथ द्वितीयमाकांक्षादोषं स्पष्टीकरोति ।

देशतः सर्वतो वाप्यभिलाषः परदर्शने । स आकांक्षाभिधो दोषः सम्यक्त्वे गदितो जिनैः ॥ १ ॥

सुगमम् । परं क्वापि कमपि जीवदयादिकं गुणमवलोक्य तदेव दर्शनमाकांक्षति । तत्र देशत एकदर्शनाभिलाषः सर्वतश्च सर्वपाखंडिधर्माभिलाषः। यथा सौगतेनाक्लेशको धर्मः प्रोक्तः । तथा कापिलद्विजादयोऽपि विषयानुपभुञ्जाना एव पर-

पटव्यपदेशो लभ्यते, न पुनरेकस्मिन् तन्तौ समस्तपटो भवति" । इत्यादिना गुरुभिः प्रज्ञापितो यावन्न किञ्चित् प्रतिपद्यते, ततः स गच्छाद्बहिष्कृतः। स च विहरन्नामलकल्पां नगरीं गत्वा वने स्थितः। तत्र मित्रश्रीश्रावकेण निह्नवोऽयमिति ज्ञात्वा तत्प्रतिबोधनार्थं गत्वा निमंत्रितः । यन्मदीयगृहेऽद्याहारार्थं भवता स्वयमागन्तव्यम् । ततो गतः स तद्गृहे । तेन च तत्र तमुपवेश्य महान्तं संभ्रममुपदर्शयता तत्पुरतो भक्ष्यभोज्यान्नपानव्यञ्जनवस्त्रादिवस्तुनिचया विस्तारिताः । तेषां मध्यादेकैकमन्त्यावयवमादाय प्रतिलाभितः । वस्त्रस्यैकं तन्तुमाकृष्य दत्वा तं ननाम ।

स्वजनानाह वन्दध्वं साधवः प्रतिलाभिताः । धन्योऽहं पुण्यवानागान्मद्गेहे यद्गुरुः स्वयम् ॥ १ ॥

ततस्त ऊचुः—"भोः श्राद्ध त्वयैवं धर्षिता वयं किम्?" स ऊचे—"स्वामिन् युष्माकं मतं चेत्प्रमाणं, तर्हि इदं सत्यमेव तंडुलान्त्यावयवस्तृप्तये भविष्यति, वस्त्रतन्तुः शीतत्राणाय च । अन्यथा यदि, सर्वमपि भवता भाषितं मिथ्या" । एवं श्रुत्वा स प्राह—"हे श्राद्ध! त्वया सुष्ठु संबोधिताः श्रीवीरवाक्ये निःशङ्कीकृता वयम्" ।

नतस्तानुद्धतभक्तिविधिना प्रत्यलाभयत् । तथालोच्य प्रतिक्रम्य व्यहरच्छ्रीजिनाज्ञया ॥ १ ॥

ततो गुरुपादमूलेभ्यः सम्यग्मार्गं प्रपन्नवान् । क्रमेण स्वर्गमवाप ।

श्रीतिष्यगुप्तस्य चरित्रमेतच्छ्रुत्वा सदैवं जिनसूत्रवाक्ये ।
शंका सुबुद्धिं मलिनीकरोति भव्यैर्विधेया न हि सा कदापि ॥ १ ॥

नार्याः कुत्रापि कस्याश्चिद्दारकौ द्वौ बभूवतुः । सपत्नीतनुभूरेको द्वितीयश्चात्मभूस्तयोः ॥ १ ॥ ग्रासयोर्लेखशालाया मापपेयामदत्त सा । अचिन्तयत्सपत्नीभूः पेयासौ मक्षिकान्विता ॥ २ ॥ इत्याशंकी वमन्नित्यं वल्गुलिव्याधिना मृतः । द्वितीयोऽचिन्तयन्माता न प्रयच्छति मक्षिकाम् ॥ ३ ॥ एवं निःशंकतया स सुखभोगी जातः, अत एव शंका परिहार्येति ।

अत्रार्थे श्रीवीरकेवलज्ञानोत्पत्तेः षोडशवर्षातिक्रान्ते उत्पन्नद्वितीयतिष्यगुप्तप्रबन्धः । स चायम्—

राजगृहे गुणशीलचैत्ये चतुर्दशपूर्विणो वसुनामान आचार्याः समागताः । तेषां तिष्यगुप्तः शिष्योऽस्ति । एकदात्मप्रवादपूर्वमधीयानस्य शिष्यस्यायं सूत्रालापः समायातः—"एगे भंते जीवप्पएसे जीवे त्ति वत्तव्वं सिया । नो इणमट्ठे समट्ठे । एवं दो तिन्नि संखिज्जा असंखिज्जा वा एगप्पएसुणं विणं जीवे नो जीवे त्ति वत्तव्वंसिया । कम्हा जम्हा कसिणे पडिपुण्णलोगागासपएसतुल्ले जीवे जीवे त्ति वत्तव्वंसिया" इत्यादि अधीयानस्य तस्य शंका जाता, यस्मादेकस्मिन्नन्त्यप्रदेशे जीवः, न शेषेषु, एतत्सूत्रालापकप्रमाणत्वात् । एवं प्ररूपयन्तं तं सुहृद्भूत्वा गुरुः स्माह—"हे शिष्य ! प्रथमादिप्रदेशेषु जीवत्वं नेष्यते तर्हि अन्त्यप्रदेशेऽपि तन्नेष्टव्यं, समानप्रदेशत्वात्, यथा सिकतासहस्रकणेषु तैलं नास्ति, तर्हि एकस्मिन्नन्त्यकणेऽपि कुतस्तैलं समायाति ? एवं सति जीवाभाव एव स्यात्, अनिष्टं चैतत्" । आह—"नन्वागमबाधितेयं प्रतिज्ञा, यतोऽनन्तरोक्तश्रुते प्रथमादिप्रदेशान् विना चरमे प्रदेशे जीवत्वानुज्ञानात्, अतः कथं जगद्बन्धुप्रणीतं निषिध्यते?" । गुरुराह—"हन्त यदि सूत्रं प्रमाणीकरोषि तदा तत्रैवोक्तं—"कसिणे पडिपुण्णे लोगागासपएसतुल्ले जीवे" अतः श्रुतप्रामाण्यमिच्छता विप्रतिपत्तिर्न कर्तव्या । किं तु सर्वेऽपि जीवप्रदेशाः समुदिता जीवः, यथा तन्तुसमुदायैः समस्तैः

स्वामिनो यूयं, अथेप्सितं कुरुत । ततो वज्रकर्णस्योज्जयिनीराज्यं दत्त्वा सिंहरथः सेवकीकृत्य मुक्तः । ततः सर्वे स्वस्थानं जग्मुः । वज्रकर्णोऽपि नियमं प्रपाल्य सर्वजीवान् क्षमयित्वा स्वर्गं गतः, मोक्षं च यास्यति ।

श्रीवज्रकर्णक्षितिपस्य वर्णनं, श्रुत्वा जिनेन्द्रं परिमुच्य नावुकैः ।
कार्या नतिर्नो तनुशुद्धिधारकैर्मुक्त्यङ्गनालिङ्गति येन शीघ्रतः ॥ १ ॥

॥ इति विग्रहशुद्धौ वज्रकर्णनृपोदन्तः ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभेऽष्टादशं व्याख्यानम् ॥ १८ ॥

---

## ॥ अथैकोनविंशतितमं व्याख्यानम् ॥

अथ पञ्चमं दोषपञ्चकपरिहारस्वरूपं लिख्यते—

शङ्का कांक्षा विचिकित्सा मिथ्यादृष्टिप्रशंसनम् । तत्संस्तवश्च पञ्चापि सम्यक्त्वं दूषयन्त्यमी ॥ १ ॥

तत्रादौ शंका । सा चेयम्—श्रीमदर्हद्धर्मे संदेहसहिता बुद्धिः शंका । सा द्विधा—देशतो सर्वतश्च । तत्र देशशंका एकैकपदार्थगोचरा । यथा—अस्ति जीवः, परं सर्वगतोऽसर्वगतो वा, सप्रदेशोऽप्रदेशो वा । सर्वपदार्थेष्वप्रत्ययरूपा द्वितीया । इयं द्विधापि सम्यक्त्वदूषिका । ज्ञातं चात्र पेयापायिन्या नार्याः । तच्चेदम्—

विषयसुखं च भुक्तम् । एकदा सा राज्ञ्या भूषणानि दृष्ट्वात्मनो भूषणानि निन्दन्ती रुरोद "यदि त्वं सत्यो भर्ता, तदा राज्ञीभूषणानि देहि" । मयाप्यङ्गीकृतं । ततो रात्रौ स्तेयार्थं राज्ञो वासमन्दिरेऽहं गतः । तत्र च श्रुतो दम्पत्योरालापः । राज्ञी तं पप्रच्छ—"स्वामिन्नद्य तव का चिन्तास्ति ?" । राज्ञोक्तम्—"प्रिये ! प्रभाते वज्रकर्णो महाबन्धनं मत्करासिना प्राप्स्यति, तदा मच्चित्ते सौख्यं भविष्यति" । ततोऽहं तद्वाक्यतस्तव दार्ढ्यं श्रुत्वाऽत्रागतो निवृत्तस्त्वरितं तत्कथनार्थं समागतोऽस्मि । अथेप्सितं कुरु" । ततस्तं द्रव्यादिना सन्मान्य स्वयं ( वज्रकर्णः ) सज्जीभूय बहिःस्थोपपुरादि भंक्त्वा पुरमध्ये स्थितः । ततः प्रभाते सिंहरथेन नगरं वेष्टितं । मुक्तश्च दूतः । तेनागत्य प्रोक्तम्—"हे वज्रकर्ण ! असच्चरणनमस्कारेण राज्यं भुंक्ष्व । अन्यथा त्वां मारयिष्यामि" । तेनाप्युक्तम्—"रे रे दूत मम नास्ति राज्येन प्रयोजनं । परं त्वं धर्मद्वारं देहि, यथाहमन्यत्र गत्वा स्वनियमं पालयामि" । इत्युक्ते दूतेन तत् सिंहरथस्य कथितं । ततो दूतवाक्येन क्रुद्धः स तत्पुरं रुद्ध्वा स्थितोऽस्ति । इति देशोद्ध्वंसनकारणमुक्तम्" । ततो रामेण लक्ष्मण उक्तः—"वत्स ! गच्छाम तत्राश्चर्यं च प्रेक्षामहै । वज्रकर्णस्य साधर्मिकवात्सल्यं क्रियते" । ततो दशपुराद्बहिरग्रजं मुक्त्वा लक्ष्मणो मध्ये गतः । वज्रकर्णेन भोजनार्थं निमंत्रितः । ततो लक्ष्मणः प्राह—"मद्भ्राता सभार्यो बहिर्देवगृहेऽस्ति" । ततस्तं निमन्त्र्य सर्वेऽपि भोजिताः । ततो रामेण लक्ष्मणः सिंहरथपार्श्वे मुक्तः । तत्र गत्वा तं नृपं प्राह—"अहं दाशरथिना मुक्तोऽस्मि । त्वं वज्रकर्णेन समं मा युद्धं कार्षीः" । स प्राह—"अहं भरताज्ञां शिरसि वहामि" । लक्ष्मणः प्राह—"त्वं युद्धे सज्जो भव" । सोऽपि गजमारुह्य संग्रामाय समागतः । लक्ष्मणेन जित्वा स भुवि पातितः । ततः सिंहरथेनापि विज्ञप्तम्—"मयाऽज्ञेन न ज्ञाताः

ममाप्यात्महितं कथय"। ततो मुनिरुवाच—"सम्यग्दर्शनपूर्वकं हिंसादित्यजनमेवात्महितम्। तथा—

देवो जिणिंदो गयरागदोसो, गुरू वि चारित्तरहस्सकोसो।
जीवाइतत्ताण य सद्दहाणं, सम्मत्तमेवं भणियं पहाणं ॥ १ ॥
जस्सारिहंते मुणिसत्तमेसु, मुत्तुं न नामेइ सिरो परस्स।
निव्वाणसुक्खाणनिहाणठाणं, तस्सेव सम्मत्तमिणं विसुद्धं ॥ २ ॥

इत्यादिधर्मोपदेशेन प्रबुद्धः सम्यक्त्वमूलद्वादशव्रतानि ललौ। तत्रापि विशेषतो जिनं गुरुं च विना नान्यं नमामीत्येवं नियमं गृहीत्वा स्वनगरे समागतः। ततो निजचित्तेऽचिन्तयत्—"अहमवन्तीशस्य सिंहरथस्य सेवकः, अतोऽवश्यं प्रत्यहं प्रणामो विधेयः, तदा मन्नियमभङ्गः स्यात्" इत्यालोच्याङ्गुष्ठमुद्रिकोपरि श्रीमुनिसुव्रतबिम्बं कारितम्। तच्च पुरतः कृत्वा मनसा जिनप्रणामं बाह्यतो नृपप्रणतिं च विदधे। एकदा केनचित् खलेन राजानं सर्वोऽपि वृत्तान्तो विज्ञप्तः। ततो राज्ञा चिन्तितम्—"अहो! वज्रकर्णः कृतघ्नाधीशो यन्मदीयं राज्यं भुनक्ति, मम नतिमपि न करोति, तदा दुष्टस्य दण्ड एव न्याय्यः"। इत्यवधार्य संग्रामाय भेरीमदापयत्। तावतैकेन पुरुषेणागत्य प्रोक्तम्—"भो वज्रकर्ण! साधर्मिकश्रेष्ठ! तुभ्यं यद्रोचते तत्कुरु"। राज्ञा पृष्टं—"त्वं क्व वससि?"। ततः स प्राह—"हे देव! कुण्डनपुरवासी वृश्चिकनामाहं श्रावकः। एकदा बहुपण्यं लात्वोज्जयिन्यां प्राप्तः। तत्र वसन्तोत्सवेऽनङ्गलतां गणिकां दृष्ट्वा मोहितस्तस्याः सर्वस्वं ददौ।

## ॥ अथाष्टादशं व्याख्यानम् ॥ १८ ॥

। अथान्त्या कायशुद्धिः प्रकाश्यते ।

**खड्गादिभिश्छिद्यमानः पीड्यमानोऽपि बन्धनैः । जिनं विनान्यदेवेभ्यो न नमेत्तस्य सा भवेत् ॥ १ ॥**

करवालादिभिश्छिद्यमानो रज्ज्वादिनिगडादिबन्धनैः पीड्यमानः । अपिशब्दान्महासंकटे पतितोऽपि जिनं विनान्यदेवेभ्यः शाक्यशंकरस्कन्दादिसुरेभ्यो न नमति, तस्य सम्यक्त्ववतः प्राणिनः सा तृतीया कायशुद्धिर्भवेदित्यर्थः ।

भावार्थस्तु वज्रकर्णप्रबन्धेन वितन्यते—अयोध्यायामिक्ष्वाकुवंशोद्भवो दशरथो नाम राजा । तेन च कैकेयीप्रियतमाया वरो दत्तस्तेन द्वादशवार्षिको वनवासः कारितो रामलक्ष्मणसीतानाम् । अनुक्रमेण ते पञ्चवटीमार्गेण प्राप्ता अवन्त्युद्देशम् । तत्र परिपूर्णपण्या हट्टाः, धनकाञ्चनपूर्णानि गृहाणि अगृहीतधान्यवृषभादीनि दृश्यन्ते, परं कोऽपि नरो न दृश्यते । ततो रामेण लक्ष्मणः पृष्टः—"इदं शून्यं कथमस्ति ?" । तेनातिमहति वृक्षे आरुह्य चतुर्दिक्षु प्रेक्षितम् । तावता दृष्ट एकः पुमान् । सोऽप्यागत्य प्रणनाम । ततस्तं गृहीत्वाऽग्रजपार्श्वे आनीतवान् । रामेण पृष्टः स उवाच—"स्वामिन् दशपुरे वज्रकर्णो राजा सत्त्ववान् । परं मृगयाव्यसनदूषितश्चन्द्र इव लोके ख्यातः । स चान्यदा लुब्धकसहायो वने शरेण सगर्भां मृगीं मारितवान् । तदा तद्गर्भो मह्यामपतत् । तं गृहगोधाछिन्नपुच्छमिवार्तं दृष्ट्वा संजातकरुण आत्मानं निन्दति—"हा ! मया नरकपापमर्जितम्" । एवं त्यक्तनैर्घृण्यो भूपः परिभ्रमन्नेकत्र शिलातलासीनं शान्तं दान्तं साधुं वीक्ष्य प्रणतिमकरोत् । नत्वा च प्राह—"किमत्रारण्ये त्वं करोषि ?" । यतिनोक्तम्—"आत्महितम्" । "स्वामिन् !

भट्टकोटीभिरावृतः षट् दिनान्यगमयत्। इतो जितशत्रुभूपभक्तैर्जनैर्नृपो राज्यदानार्थं प्रकटीचक्रे। इतो रक्ष्यमाणेषु राजमार्गेषु अपसार्यमाणेषु अशुचिषु सप्तमे दिने दत्तो राजा हृष्टस्तुरंगाधिरूढोऽष्टमदिनभ्रान्त्या राजमार्गे निस्ससार। इतो मालिकः पुष्पपूर्णकरण्डकयुतो राजमार्गे समागात्। भेर्यादिनिनादैः श्रुतमात्रैरकस्मात्तस्यात्यन्तं मलोत्सर्गचिन्ताऽभूत् मालिकस्य। लोकबाहुल्यादन्यत्र गन्तुमशक्नुवन् लब्धलक्ष्यतया त्वरितं मलोत्सर्गं तत्रैव कृत्वा तस्योपरि पुष्पपुञ्जं मुक्त्वा मालिकोऽग्रतो गतः। तदा राज्ञो दत्तस्य तस्मिन्मार्गे गच्छतस्तुरंगमखुरोत्पाटितो विड्लेशो वदनेऽविशत्। स राजा दत्तस्तेन प्रत्ययेन पश्चाद्यावद्गृहाभिमुखं समायाति, तावन्मंत्रिनियुक्तैः सेवकैर्बद्धा स जितशत्रवे समर्पितः। तेन दुष्टेन कुम्भीपाकेन पाचितः।

मृत्वा नरकदुःखानामतिथित्वमयं ययौ। आयुःक्षयेण सुरीन्द्रोऽप्यभूत्त्रिदिवभूषणम् ॥ १ ॥

इत्थं परैरपि यथास्थितमेव वाक्यं, वाच्यं मृतेरवगणय्य भयं विदूरात्।

यातीह जन्मनि जनाधिपमानताढ्यं, स्युः संपदः परभवे सुरसौख्यमुख्याः ॥ १ ॥

॥ इति वाक्शुद्ध्यां कालिकाचार्यप्रबन्धः ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे सप्तदशं व्याख्यानम् ॥ १७ ॥

परः क्रमेण सेवको जितशत्रुनृपस्य जातः। सेवया प्रसन्नीकृतनृपस्तस्मै प्रधानपदं ददौ। क्रमात्सर्वराजवर्गं वशीकृत्य राज्याद्भूपं निर्वास्य स्वयं राज्याधिपो जातः। निःशंकः परलोकादभीरुराश्रवकर्मसु द्रव्यव्ययं व्यधात्।

इतश्च बहुश्रुतो भूत्वा कालिककुमारेण गुरुतः सूरिपदं प्राप्तम्। स दत्तो यागं कारयन् भूरिजीवान् हन्ति। यागे हन्यमानान् पशून् वीक्ष्य राजा जहर्ष। अन्यदा कालिकाचार्यस्तत्रागात्। ततः स मातुरुपरोधेन दुष्टधीर्वन्दितुं गुरुं जगाम। मातुलं सूरिं प्रणम्य दत्तोऽग्रे निषसाद। दत्तो गुरुं प्रत्युवाच—"भो मातुल! ब्रूहि, यज्ञफलं किं भवेत्?" इति पृष्टे गुरुर्जन्तुरक्षाधर्ममवोचत्। स प्राह—"प्रभो! नाहं धर्मं पृच्छामि, किं तु फलम्"। इति पुनः पुनः पृष्टो गुरुर्जगौ—"दत्त! किं त्वं न वेत्सि? यज्ञफलं महानरक एव। तव च श्वभ्रगतिर्भविष्यति। यतः—

अस्थिन वसति रुद्रश्च मांसे चास्ति जनार्दनः। शुक्रे वसति ब्रह्मा च तस्मान्मांसं न भक्षयेत् ॥ १ ॥

तिलसर्षपमात्रं तु मांसं यो भक्षयेन्नरः। स नरो नरकं गच्छेत् यावच्चन्द्रदिवाकरौ ॥ २ ॥

भो राजन् दिनादस्मात्सप्तमेऽह्नि कुंभीपाकेन त्वं नरकमेष्यसि—

कः प्रत्ययोऽत्र तेनोक्ते सूरिराह मुखे तव। क्षणे मृत्युक्षणात्पूर्वं नृपुरीषं प्रवेक्ष्यति ॥ १ ॥

"भो मातुल! तव का गतिः?" गुरुराचष्ट—"अहं स्वर्गं यास्यामि"। इति श्रुत्वा तमसिना जिघांसन्नचिन्तयत् "यद्यहं सप्तदिनेभ्यः परतो जीविष्यामि, तदैनं हनिष्यामि"। ततो दत्तः सूरिं यामिकयन्त्रितं कृत्वा सौधमाविश्य संनद्ध-

एवमानन्दचरितं निशम्यानन्दमेदुराः । श्रावका मनसः शुध्द्यै प्रत्यहं सन्तु सादराः ॥ १ ॥

॥ इत्यानन्दस्योदन्तः षोडशः ॥

॥ इत्युपदेशप्रासादे द्वितीयस्तंभे षोडशं व्याख्यानम् ॥ १६ ॥

---

॥ अथ द्वितीयं वचनशुद्धिस्वरूपं कथयति ॥

जीवाजीवादितत्त्वानां प्ररूपकं सदागमम् । विपरीतं वदेन्नाथ सा शुद्धिर्मध्यगा भवेत् ॥१॥

स्पष्टम् । अथेमां स्तौति—

सदानेन गृहारंभो विवेकेन गुणव्रतः । दर्शनं मोक्षसौख्याङ्गं वचःशुध्द्यैव लभ्यते ॥ १ ॥

अत्रार्थे कालिकसूरिप्रबन्धः संप्रदायागतश्चायम्—

संकटेऽपि न महान्मृषा वदेद्दत्तमातुलसुकालिकार्यवत् ।

चंदनः सुरभिरश्मघर्षणेऽपीक्षुरद्भुतरसोऽपि पीलने ॥ १ ॥

तुरमण्यां पुरि कालिको भूदेवो बभूव । तस्य भद्राह्वा सहोदरा । तस्य स्वस्रीयो दत्त इति नामाऽभूत् । कालिकः क्रमाद्गुरूपान्ते धर्मोपदेशमाकर्ण्य वैराग्यात्संयमं जग्राह । तं शास्तारं विना दत्तोऽत्यन्तं निरर्गलोऽभूत् । स सप्तव्यसन-

सचित्तवर्जनं चकार । अष्टम्यां त्वष्ट मासान् स्वयमारम्भमत्यजत् । ततो नवम्यां भृतकप्रेष्यारम्भवर्जनं नव मासान् यावदकरोत् । दशम्यां तु स्वार्थनिष्पन्नं न बुभुजे । एकादशमीस्वरूपं चैतत्—गाथा—

**खुरमुंडो लोएण वा रयहरणं उग्गहं च घेत्तूणं । समणब्भूओ विहरइ धम्मं काएण फासंतो ॥ १ ॥**

एवमेकादश मासान् यावत् कुर्यात् । एवमेकादशाप्येताः प्रतिमाः कुर्वन् स पञ्चमासाग्रैः पञ्चवर्षैर्विहरन्तः कृशोऽभवत् । ततो दुर्बलत्वं ज्ञात्वा चतुःशरणपूर्वकमनशनमादाय तस्थौ । तावत्तस्य मनःशुद्ध्यावधिज्ञानमुत्पेदे । तदा तत्र समवसृतं जिनं नत्वापृच्छ्य गौतमो भिक्षार्थमाजगाम वाणिज्यग्रामे । तत्रैषणीयमाहारमादाय प्रत्यागच्छन् बहुजनत आनन्दोदन्तं श्रुत्वा तं सुखं प्रश्नयितुं प्राप्तः तत्रैव, सोऽपि तत्र प्राप्तं स्वामिपदयुग्मं प्रणम्य तं पृष्टवान्—"भगवन् ! श्रावकस्यापि अवधिज्ञानं भवति ?" । गौतमः प्राह—"सुश्राद्धे भवति" । इति श्रुत्वा सोऽवदत्—"प्रभो ! मे ज्ञानमस्ति, येनोर्ध्वं सौधर्मं, अधः लोलुकं च तिर्यग् लवणाम्भोधौ दिक्त्रये पञ्चपञ्चशतयोजनानि यावत्, उत्तरस्यां क्षुद्रहिमावद्भूधरादीकृत्य वस्तूनि पश्यामि" । इत्युक्ते गौतमः प्राह—"नैतादृशं गृहमेधिनां संभवेत्, ततो मिथ्यादुष्कृतं कुरु" । "भगवन् ! अलीकोक्ते मिथ्यादुष्कृतं स्यात्, ततो युष्माभिरेव तदाख्येयम्" । स शङ्कितस्तत्र गत्वा तीर्थेशं पप्रच्छ । तदा विभुनापि तथैवोक्तम् । तच्छ्रुत्वा तत्रागत्य मिथ्यादुष्कृतं दत्तम् । अथानन्दः पञ्चनमस्क्रियां स्मरन् सौधर्मकल्पेऽरुणाभविमाने चतुष्पल्यायुर्देवोऽभवत् । ततश्च्युत्वा महाविदेहे मोक्षपुरीं प्राप्स्यति । विशेषेणायं प्रबन्ध उपासकसूत्रत आनन्दसुन्दरतश्च ज्ञेयः ।

धूपेऽगुरुतुरुष्कौ । पेये आहारप्रकारे काष्ठपेयाख्यमुद्गादियुतो यद्वा घृततलिततंडुलास्तन्निबन्धात् जातपेयम् । पक्वान्ने घृतपूराणि खण्डखाद्यानि च । ओदनेषु कमलशालिनिष्पन्नः । द्विदलेषु मुद्गा माषाः कृष्णचणकाकारा मम सन्तु । घृतेषु शरद्भूतं गोघृतमेव । शाकेषु चूचूसौवस्तिकमंडूकिकाश्च । मधुरेषु पल्यंको मेऽस्तु । अन्नेषु (तीमनेषु) वटकानि, फलेषु च क्षीरामलकं, जलेष्वाकाशोदकमेवास्तु । मुखवासकृते जातिफललविंगैलाककोलकर्पूरलक्षणैः पञ्चभिः संस्कृतं तांबूलं ममास्तु । एतद्व्रतं जिनसमीपेऽङ्गीकृतम् । एवमन्तिमव्रतं यावत् स्वीचकार । व्रतस्वरूपमग्रे वक्ष्यते । ततस्तत्त्वज्ञः स्वभवने समागत्य शिवानन्दां प्राह—"मया परमार्हतधर्मः प्रपन्नः । त्वमपि जिनान्ते सम्यग्धर्ममङ्गीकुरु" । श्रुत्वेति सखीभिर्वृता तत्र गत्वा प्रभुं नत्वा जिनोदितधर्मं सा प्रापत् । ततो देशचारित्रपरयोस्तयोश्चतुर्दश वर्षाणि व्यतीयुः । सोऽन्यदोन्निद्रो निशीथे धर्मचिन्तां कर्तुं प्रचक्रमे—"अहो ममायुष्कं रागद्वेषेणातिगतम् । यतः—

लोकः पृच्छति मे वार्तां शरीरे कुशलं तव । कुतः कुशलमस्माकमायुर्याति दिने दिने ॥ १ ॥

तस्मात्प्रमादमुत्सृज्योपासकप्रतिमा अङ्गीकृत्य जिनासक्त्या पालयामि" । ततः प्रभाते निजज्ञातिकुलं वसनाशनादिना संतोष्य ज्येष्ठपुत्रे गृहभारमारोप्य स्वयं प्रतिमावहनमकरोत् । तत्र प्रथमं षड्भिराकारैरुज्झितः ग्रस्तशङ्काद्यतिचारः सम्यक्त्वप्रतिमां मासं यावदाचरत् । ततः 'पूर्वक्रियायुक्त' इति सर्वत्र योज्यम् । द्वादशव्रतपालनं मासद्वयं यावत्ततान । ततो मासत्रयं सामायिकप्रतिमायां सोऽस्थात् । ततश्चतुरो मासांश्चतुष्पर्व्यां पौषधमपालयत् । ततः पौषधेनैव निशायां चतुर्याम्यां मासपञ्चकं कायोत्सर्गं कृतवान् । ततः पूर्वक्रियापरः षष्ठ्यां षण्मासं यावद्ब्रह्मचर्यपालनमकरोत् । सप्तम्यां

## ॥ अथ द्वितीयः स्तंभः ॥

### ॥ मनःशुद्धिरेव वर्ण्यते ॥

मनःशुद्धिमबिभ्राणा ये तपस्यन्ति मुक्तये । हित्वा नावं भुजाभ्यां ते तितीर्षन्ति महार्णवम् ॥ १ ॥
तदवश्यं मनःशुद्धिः कर्तव्या सिद्धिमिच्छता । बह्वारंभेऽपि शुद्धेन मनसा मोक्षमाप्नुते ॥ २ ॥

स्पष्टौ । अत्राग्रे आनन्दश्रमणोपासकप्रबन्धो ज्ञेयः । स चायम्—राजगृह आनन्दनामा कौटुम्बिको गुणशीलचैत्येऽन्यदा समवसृतं जिनं श्रुत्वा स्वजनैः सह पद्भ्यां गच्छन् केवलिनं नत्वानेकान्तव्यवस्थापिकां वाणीं श्रुत्वा प्रबुद्धः सम्यक्त्वपूर्वकं देशसंयमं जग्राह । तत्र प्रथमं द्विविधत्रिविधेन स्थूलप्राणातिपातादिपञ्चाणुव्रतानि गृहीतानि । चतुर्थव्रते स्वदारां विना विरतिं प्रपन्नवान् । पञ्चमे स्वेच्छाऽव्ययमानमसृजत् । चतस्रः स्वर्णकोटयो निधौ रक्षणार्थे । चतस्रश्च व्याजार्थे । चलन्त्यश्च वाणिज्ये । तदधिकस्य नियमः । तथा दशसहस्रैर्धेनुभिरेकं गोकुलम् । एवंविधानि चत्वारि गोकुलानि, सहस्राणि शकटानि, कृषिकृते हलानि पञ्च शतानि, चत्वारि वाहनानि । तदधिकस्य विरतिं चकार । दिग्व्रतवर्णनं व्रताधिकारे करिष्यते । सप्तमव्रतेऽनन्तकायाभक्ष्यपञ्चदशकर्मादानविरतिं जग्राह । तथा यष्टिमधुकस्य दन्तधावनं च । तैलं सहस्रशतपाकाभ्यां नान्यत्तैलं मर्दने । गोधूमकृष्टपिष्टान्यत् पिष्टं नोद्वर्तने च । उष्णोदकस्याष्टौ मृत्कलशान् स्नाने । ऊर्ध्वाधःपरिधाने पट्टकूलद्वयं च । विलेपने चन्दनागुरुकर्पूरकुङ्कुमादिभ्यो नान्यत् । पुष्पेषु पुण्डरीकं मालतीभवं च । भूषणे नामाङ्कुलीयकं कर्णाभरणे च । तथा

देवकीरोहिण्यौ तु आगामिकाले जिनत्वं प्राप्स्यतः । सुकोशलर्षिर्व्याघ्रीकृतोपसर्गेण पंगुलगिरौ सिद्धः । इत्याद्यनन्तसाधवोऽत्र सिद्धाः सेत्स्यन्ति च । तथा श्रीचैत्रपूर्णिमादिनेऽत्र गिरौ श्रीपुंडरीकगणभृत् पञ्चकोटिमुनिभिः सह सिद्धः । अतो हे नृप ! समस्ततीर्थयात्राफलं सकृत् शत्रुञ्जयतीर्थे दृष्टे स्यात् "। इति श्रुत्वा नृपादयः सर्वेऽपि श्रीजिनशासनधर्मं श्रीसिद्धाचलं तीर्थं च स्वीचक्रुः । ततो राज्ञा सा समहं गृहे प्रेषिता । क्रमेण प्रव्रज्यां संगृह्य सा वर्णनीयपदमवाप ।

स्याद्वादराद्धान्तविचारचेताः, कुदर्शनाशंसनमुक्तरागा ।
जयादिसेना मनसः प्रशस्त्या, क्रमेण सानन्तसुखं समाप ॥ १ ॥

॥ इत्युपदेशप्रासादग्रन्थस्य वृत्तौ प्रथमस्तंभे पञ्चदशं व्याख्यानम् ॥ १ ॥

॥ इति प्रथमः स्तंभः ॥ १

प्रेर्यमाणो योगी नगरमध्ये वदन् राजसंसदि सहसा स्वकीयं रौद्ररूपं प्रकटीकृत्य प्राह—'निष्कलंकां मुक्त्वा समत्सरा गुणसुन्दरी मया निहता 'इत्युक्त्वा सर्वं स्वरूपं प्रोक्तम्। देवतया सा पुष्पादिभिः पूजिता। बन्धुश्रीर्नगरान्निर्घाटिता। ततो राज्ञा जयसेनां प्रत्युक्तं—'भोः साध्वि! वद,जगत्सु को धर्मः श्रेष्ठः?' सा प्राह—"जैनादृते सर्वेऽप्येकान्तिनः स्याद्वाद-राद्धान्ताज्ञा न न्याय्याः, बहुदोषदूषितत्वात्"। इति श्रुत्वा पुनर्नृपः पप्रच्छ—'हे शीलसुगन्धे! गंगाप्रयागादितीर्थेषु मध्ये किं तीर्थं तारकं?' सा प्राह—'हे नृप! अष्टषष्टितीर्थानि लोके सन्ति, तानि न स्वात्मधर्मसमर्थकानि। तीर्थं त्वेकः सिद्धाचल एव। यत्र गिरौ कार्तिकशुक्लपूर्णिमादिने द्रविडवालिखिल्लौ दशकोटिमुनिभिः सह मुक्तिं गतौ। फाल्गुनशुक्ल-दशमीदिने नमिविनम्याख्यौ द्विकोटिमुनिभिः सह सिद्धौ। फाल्गुनशुक्लाष्टमीदिने श्रीयुगादिदेवः नवनवतिपूर्ववारान् यावदत्र समागात्। श्रीशान्तिजिनेनात्र चातुर्मासकं कृतं। तदा सप्तदशकोटिनरा मुनिलिंगेन तथा गृहिलिंगेन सिद्धाः। तथा च द्वितीयजिनहस्तदीक्षितसाधवः पञ्चनवतिसहस्रमिता अत्र वर्षाकाले स्थिताः। तेषु मध्ये कार्तिकशुक्लपूर्णिमादिने दश-सहस्रमिताः केवलं प्राप्य सिद्धाः आश्विनशुक्लराकायां पञ्च पाण्डवा विंशतिकोटिव्रतिभिः सह सिद्धाः। फाल्गुनशुक्लत्रयो-दशीदिने शाम्बप्रद्युम्नकुमारौ सार्धत्रिकोटिमुनिभिः सह सिद्धौ॥ श्रीकालस(कालिक)मुनिः सहस्रसंयमिभिः सह सिद्धः। श्रीसुभद्रमुनिः सप्तशतयतिभिः सह सिद्धः। श्रीरामचन्द्रः पञ्चकोटिभिः सह, श्रीरामभ्राता भरतस्त्रिकोटिभिः सह, श्री-वसुदेवस्य द्वासप्ततिसहस्रस्त्रीमध्ये पञ्चत्रिंशत्सहस्रस्त्रियः सिद्धगिरौ मुक्तिं गताः। सप्तत्रिंशत्सहस्रस्त्रियोऽन्यत्र सिद्धिं प्रापुः।

कार्यार्थी भजते लोको न कश्चित् कस्यचित् प्रियः। वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ १ ॥

सोऽपि नित्यं भिक्षार्थमेति। सा नवनवां भिक्षां ददाति। एकदा प्रत्युपकाराय तामाह—'हे मातर्यत्तव कार्यं स्यात्तत्कथय, यथाहं करोमि'। तया सगद्गदकंठं पुत्रीदुःखं कथितं। तच्छ्रुत्वाह योगी—"हे मातर्जयसेनां मंत्रेण हत्वा भगिनीं सुखिनीं न करोमि तदाग्निं प्रविशामि"। इति सन्धां कृत्वा स्वस्थाने गतः। ततश्चतुर्दश्यां प्रेतवने एकं मृतकमानीय पूजयित्वा वैतालीविद्याजापेन तेन तच्छवे वेताली प्रत्यक्षीकृता। सा तं प्रत्याह—'हे योगिन्! यत्कार्यं तत्समादिश'। तेनोक्तं—'हे महाविद्ये! जयसेनां मारय'। तथेति स्वीकृत्य तत्समीपे समागत्य यावद्विलोकयति तावत्तां सम्यक्त्वस्थिरचित्तां कायोत्सर्गस्थां दृष्ट्वा सा वेताली धर्ममहिम्ना विगतामर्षा तां प्रदक्षिणीकृत्य व्याघुट्य वने गता। तां विकरालां दृष्ट्वा योगी भयेन पलायितः। तेनान्येद्युः पुनर्द्वितीयवारं प्रेरितापि तस्यां विरूपं कर्तुमक्षमाऽऽगता। एवं वारत्रयमभूत्। चतुर्थवेलायां निजावसानभयेन योगिनोक्तं—'भो देवि! द्वयोर्मध्ये या दुष्टा तां शीघ्रं मारय'। ततो देवगुरुभक्तां जयसेनां विमुच्य कायचिन्तार्थमुत्थितां तां प्रमादिनीं गुणसुन्दरीं खड्गेन विनाश्य साधकाक्षया सा स्वस्थाने गता। ततो जयसेना कायोत्सर्गं समाप्य बहिरागता तां सपत्नीं तथाभूतां वीक्ष्य चिन्तयति स्म—'अहो पूर्वकर्मतो मे एष कलंकः समायातः'। एवं विचिन्त्योपद्रवक्षयार्थं पुनः स्मरणं चकार। इतः प्रत्यूषे रजन्यां किं वृत्तमिति गवेषणार्थमुत्सुका बन्धुश्रीः पुत्रीगृहे समागता। पुत्रीं कालकृतां दृष्ट्वा पूत्कारं कृत्वा नृपं प्रत्याह—'हे राजन्! मम सुता जयसेनया सपत्नीति मत्सरेण हता। ततो राज्ञा रुष्टेनाकारिता। पृष्टा सती यावन्न वदति तावच्छासनदेव्या

परं वन्ध्यत्वदोषान्विता । सा स्वामिनं प्रत्येकदा प्राह—"स्वामिन् सन्तानार्थं विवाहं कुरु । पुत्रं विना नो कुलं न शोभते । यदुक्तम्—

"यत्र नो स्वजनसंगतिरुच्चैर्यत्र नो लघुलघूनि शिशूनि।
यत्र नास्ति गुणगौरवचिन्ता, हन्त तान्यपि गृहाण्यगृहाणि ॥ १ ॥"

श्रेष्ठिना भणितं—"भो भद्रे ! त्वयोक्तं सत्यं, परं विषयादिसुखनिरपेक्षं मच्चित्तं वर्तते" । तयोक्तं—'स्वामिन ! सन्तानार्थं न दुष्टमिदं' । ततः श्रेष्ठी मौनं कृत्वा स्थितः । तया कस्यचिदिभ्यस्य कन्यां गुणसुन्दरीं याचयित्वा परिणायितः । ततः शनैर्जयसेना सपत्न्यां सर्वं गृहभारमारोप्य स्वयं धर्माभिमुखी जाता । क्रमेण गुणसुन्दर्याः पुत्रोऽभूत् । एकदा बन्धुश्रियया निजां सुतां प्रत्युक्तं—'भोः पुत्रि ! तव सुखमस्ति ?' गुणसुन्दर्या प्रोक्तं—"हे मातः ! सपत्न्युपरि मां दत्वा किं सौख्यं पृच्छसि ? प्रथमं मुंडनं कृत्वा पश्चान्नक्षत्रं पृच्छसि, जलं पीत्वा गृहं च । ममैतन्मात्रमपि सौख्यं नास्ति । मम प्रियोऽपि सपत्न्यां रक्तोऽस्ति" । बन्धुश्रियोक्तं—"हे वत्से ! रागेण कलया च तया यदि वृद्धोऽसौ वाह्यते तदाऽपरस्य किं ? । यदुक्तम्—

वायुना यत्र नीयन्ते कुञ्जराः षष्टिहायनाः । गावस्तत्र न गण्यन्ते मशकेषु च का कथा ॥ १ ॥

तथापि हे पुत्रि ! त्वं स्वस्था भव । त्वत्सपत्नीविनाशोपायं करिष्ये । त्वं भर्तुर्गृहे व्रज" । तत एकदा भिक्षार्थमागतं रुद्रमूर्तिमिव सातिशयं कापालिकं दृष्ट्वा स्वकार्यकरणायानेकरसयुतान्नं दत्तं तस्मै । यतः—

ततः कोणिकोऽपि स्वप्रतिज्ञामापूर्य चंपायां प्राविशत् । कूलवालकोऽपि देवगुर्वाशातनापरो मागधिकासंगोद्भवपापेनानेकदुर्गतिभाग् भविष्यति ।

इति भविकमनुष्याः कूलवालस्य साधोश्चरितमतिदुरन्तं सम्यगाकर्ण्य तूर्णम् ।
विषमविषसमानाशातनां सद्गुरूणां, न कुरुत यदि वाञ्छा विद्यते निर्वृतौ वः॥
( त्यजत मनसि वाञ्छा विद्यते निर्वृतेर्वः ) ॥ १ ॥

॥ इत्युपदेशप्रासादे प्रथमस्तंभे चतुर्दशं व्याख्यानम् ॥ १४ ॥

---

## ॥ अथ पञ्चदशं व्याख्यानम् ॥ १५ ॥

विनयकथनानन्तरमथ चतुर्थं त्रिशुद्धिद्वारमुच्यते—

मनोवाक्कायसंशुद्धिः सम्यक्त्वशोधनी भवेत् । तत्रादौ मनसः शुद्धिः सत्यं जिनमतं मुणेत् ॥ १ ॥

जिनमतमर्हत्प्रणीतं सकलभावाविर्भावकं द्वादशांगीरूपं शास्त्रमलिकेतरं । अन्यत्सर्वं लौकिकं परतीर्थिकशासनमसारं मुणेत् । तस्य मनःशुद्धिरित्यर्थः । अत्रार्थे जयसेनायाः प्रबन्धोऽभिधीयते—

उज्जयिन्यां संग्रामशूरो नृपोऽभूत् । तत्र वृषभश्रेष्ठी । तस्य कलत्रं जयसेना सम्यक्त्वगुणविशिष्टा पत्यनुगाऽभवत् ।

ति—"स्थाने स्थाने चैत्यानि साधूंश्च वन्दित्वा भोजनं कुर्वे। यूयमत्र श्रुतास्ततो वन्दनार्थमागता। अनुग्रहं कुरु। प्रासुकमेषणीयं भक्तं गृहाण"। इति भणित्वा मोदका नेपालगोटकचूर्णमिश्रा दत्ताः। ततोऽतिसारो जातः। ततस्तया लघ्वीभिरन्याभिः सह तस्य वैयावृत्त्यं तथा कृतं, यथा वशीस्यात्। पश्चात्तया स कोणिकान्ते नीतः। राजा तमाह—'तथा कुरु, यथा पुरी गृह्यते'। 'राजन् प्रमाणं' इत्युक्त्वा स पुरीमध्ये गतः। सर्वत्र भ्रमन् मुनिसुव्रतस्वामिस्तूपं दृष्ट्वाऽचिन्तयत्—"अस्य प्रभावेन परवलैरियं पुरी न भज्यते। तदमुष्य भंगे उपायं विदधामि"। ततो नागरैस्तं मुनिं वीक्ष्य पृष्टं—'कदा नगररोधोऽपगमिष्यति?'। तेनोक्तं—'यदैनं स्तूपं यूयमपातयिष्यत तदा'। तैस्तथा कृतं। स्तूपं भज्यमानमालोक्य स पापः प्रत्ययोत्पादनाय गत्वा द्विक्रोशीपरतः परवलमानाययत्। तत्प्रत्ययानुसारादाकूर्मशिलं यावत् पातितम्। एवं द्वादशवर्षान्ते लोकैर्गोपुराण्युद्घाटितानि। ततः सहसागत्य कोणिकस्तामभनक्। निवृत्तो रणः यदस्यामवसर्पिण्यां प्रागपीदृशो नासीत्। यतस्तस्मिन्नाहवे सर्वाग्रेण विपन्ना एका कोटीरशीतिलक्षाः सुभटानां। तत्र दश सहस्राण्येकस्या मत्सिकायाः कुक्षाववातरन्। एको देवलोके। एकः सुकुले। शेषास्तु तिर्यग्नरकगतौ। ततश्चेटकनृपः पुरीतो निर्गच्छंस्तेनाभाष्यत—'भोः पूज्य मातामह! ब्रूहि, कमादेशं करोम्यहं?'। स प्राह—'दौहित्र! क्षणमेकं विलम्बस्व, वाप्या जले स्नानं कृत्वा समेमि'। तेन प्रतिपन्ने चेटको गलेऽयःपुत्तलिकां बध्ध्वा समाधिपरो यावद्वाप्यन्तरे न्यपतत्, तावद्धरणेन्द्रेण पतन् करसंपुटाभ्यां विधृत्य स्वभुवनमानिन्ये। तत्र विहितानशनः सहस्रारकल्पे शक्रतुल्यो जातः।

दौहित्रस्तस्य सुज्येष्ठासूनुः सत्यकिखेचरः। निनाय नीलवन्ताद्रौ समग्रं नगरीजनम् ॥ १ ॥

गात् । ततो दर्भसंस्तारके निषद्याखोचितप्रतिक्रान्तः समाधिना मृत्वारुणाभविमाने चतुष्पल्यायुष्कः सुरोऽजनि, विदेहे मोक्षमेष्यति । विशेषेणायं वृत्तान्तः पञ्चमांगतो ज्ञेयः ।

ततश्चेटकमुक्तो बाणः कोणिकाग्रे शक्रेण वज्रकृतकवचे आस्फाल्य त्रुट्यपतत् । सत्यप्रतिज्ञः पुनर्नामुचत् द्वितीयं बाणं । द्वितीयेऽपि दिने बाणो मुधाऽभूत् । ततश्चेटको विशालायामविशत् । ततो हल्लविहल्लौ रात्रौ सेचनकारूढौ तद्बलं निहत्य सत्वरं प्रत्यागच्छतः । स्वबलं ताभ्यां बहु हन्यमानं वीक्ष्य तेन स्वसैन्यस्य परितः खादिरांगारपूर्णा खातिका रहः कारिता । ततस्तौ द्वावपि सिन्धुराधिरूढौ तदुपकंठं समीयतुः । स करी विभंगतश्छन्नां ज्वलत्खातिकां दृष्ट्वा मैतौ विनशतामिति मत्वा पुरः पदमपि नाधत्त । ताभ्यामंकुशेनाहत्य करी भाषितः—'रे दुरात्मन्! संप्रति प्रतिकूलतां धत्से तन्नार्हं' । तद्वाक्यानन्तरं तौ निजकुंभाद्उत्तार्यात्मानं खातिकायामपातयत् । तत्तापेन गजो विपेदे । प्रथमे स्वर्गे गतश्च ।

हस्तिनं मृतं वीक्ष्य विलक्षौ तौ चिन्तयतः स्म—"अहो! पशुतोऽप्यावामधन्यौ, ययोरीदृशी मतिः किं चानेकपापात् कथं छुटिष्यावः" । इति संवेगपरौ शासनदेव्या वीरपार्श्वे मुक्तौ संयमं जगृहतुः । तपस्तप्त्वा सर्वार्थसिद्धौ जग्मतुः ।

ततः कोणिको मनसीमां सन्धां व्यधात्—'यदि विशालां खरकलितशरैर्न खनामि, तदाग्नौ विशामि' । इति कृतप्रतिज्ञोऽपि पुरीमादातुमक्षमो विषसाद । तावद्दुर्वाक्यालोपाद्रुष्टा देवी व्योमस्था राजानं प्राह—

"समणे जइ कूलवालए मागहिया गणिअं गमिस्सए। राया य असोगचंदए वेसालिं नगरीं गहिस्सए१"

ततो मागधिकां वेश्यामाकार्य राज्ञा प्रोक्तं । तया च प्रतिपन्नं । पश्चात्सा कपटश्राविका भूत्वा वने तं प्रणम्य जग-

रुष्टः । तेन स्वपिता प्रपञ्चेन काष्ठपञ्जरे न्यस्तः । क्रमेण नृपे परलोकं गते कोणिकोऽशोको नवां चंपापुरीं निवेश्य कालादिदशभ्रातृयुतस्तत्र स्थितः । अन्यदा पद्मावतीराज्ञीनित्याग्रहान्नृपो हारादितुर्यकं ताभ्यामयाचत । बुद्धिमन्तौ तावशुभायेति मत्वा स्वसारं सर्वमादाय स्वमातामहचेटकमहाराजपार्श्वे निशि जग्मतुः । कोणिकेन दूतेन तौ याचितौ । राजाह—'दौहित्रौ शरणायातौ कथमर्पयामि ?' । दूतवाक्यश्रवणोद्भवरोषः कोणिकः सुभटत्रयकोटीयुतो निजबलतुल्यकालादिदशकुमारयुतश्च चेटकं प्रत्यचालीत् । चेटकोऽप्यष्टादशभूपालवृतोऽन्वचलत् । मिथो युद्धं जातं । प्रथमयुद्धे चेटकेन सुरार्पितशरेण कालः कालनिलयमनायि । तत उभावपि विरेमतुः । एवं दशभिर्दिनैर्दशभिः शरैर्दशापि कोणिकबान्धवा निहताः । नियमत्वादेकमेव बाणं प्रत्यहं युद्धे मुञ्चति विशालाधिपः । ततो बन्धुशोकांबुधिमग्नकोणिकेन तं दुर्जयं मत्वाऽष्टमतपसा सौधर्मेन्द्रचमरेन्द्राराधनं कृतं । तत्रागत्य ताभ्यामभाणि—'आवयोः संयतः साधर्मिकोऽस्त्यतस्तवावां देहरक्षां करिष्यावः' । तदनु चमरेण महाशिलाकंटकं रणमपरं च रथमुशलाख्यं दत्तं[1] । प्रथमयुद्धे कर्करोऽपि निक्षिप्तः शिलायते, कंटकश्च शस्त्रायते तदा चतुरशीतिलक्षवीराणां वधो जातः द्वितीयदिने षण्णवतिशतसहस्राणां च । त्रिभिरपि चेटकनृपेण समं समरं चक्रुः । ततो विहस्तश्चेटको[2] नागरथिपौत्रं श्राद्धधर्मकर्मठं षष्ठभक्तभोजिनं विक्रमिणं वरुणं सेनापतिं प्राह—'हे सुभट ! त्वमाजौ सज्जीभव' । स्वामिवचः प्रमाणमिति प्रोच्य स तद्बलेन सह समरं चकार । भवितव्यतया तत्सेनान्या पतत्रिणा प्रथमं तद्वचसा[3] स वरुणो मर्मणि विद्धः । तदनु द्विविक्रमं स्वरथं समाक्रम्य वरुणोऽपि तं हत्वा महाहवान्निर-

---

१ महाशिला, कंटकः, रथमुशलं चेति त्रयं. २ त्रस्तः. ३ कोणिकवचसा.

एनं सिंहासने उपवेश्य स्वयमञ्जलिं बध्ध्वा भुवि निविश' । नृपोऽपि तथा चक्रे । ततस्ते सपदि हृदि लिखिते इव स्थिते । विद्यागुरुत्वेन मंत्रिणा श्वपाको मोचितः। अतो विनय एव सर्वत्र फलदः । तस्माद्विनयपूर्वकं श्रुताध्ययनादि विधेयम्। इति।

॥ इत्युपदेशप्रासादे प्रथमस्तंभे त्रयोदशं व्याख्यानम् ॥ १३ ॥

## ॥ अथ चतुर्दशं व्याख्यानम् ॥ १४ ॥

अथान्वयतो विनयस्वरूपं प्रोच्य व्यतिरेकतो व्याख्यायते—

**प्रकृत्या दुर्विनीतात्मा गुरूक्ते प्रतिकूलधीः । संसारसागरे मग्नो विनेयः कूलवालकः ॥ १ ॥**

एकस्याचार्यस्य दुर्विनीतः शिष्यः । तमाचार्यस्ताडयति । शिक्षितोऽपि रुष्यति । अन्यदा सूरयस्तेन सहोज्जयन्तनगे तीर्थं नन्तुं जग्मुः । तत्र यात्रिकस्त्रीवर्गे चञ्चललोचनं कुशिष्यं दृष्ट्वा वारयामासुः । सोऽपि क्रुद्धः । ततोऽवरोहतां तेषां चूरणाय गंडशैलं मुमोच । स (गंडशैलः) गुरुचरणयोर्मध्येन निर्गतः । आचार्येण शापो दत्तः—'दुरात्मन् ! स्त्रीतो विनंक्ष्यसि' इति । तेन चिन्तितम्—'स्त्रियो न स्युस्तत्र स्थास्यामि । गुरुर्मिथ्यावादी भवतु' । इति कृत्वा नदीकूले आतापनां कुरुते । ततस्तत्प्रबन्ध्या सा कूलंकषान्यत्र व्यूढा । तेन तस्य कूलवालक इति नाम कृतं लोकैः ।

इतश्च देवार्पितदिव्यकुंडलाष्टादशचक्रहारवासोभिः सहितः सेचनकद्विपः श्रीश्रेणिकेन हल्लविहल्लयोर्दत्तः । कोणिको

'तत्पूर्वया त्वया मत्पार्श्वं आगम्यं' इति तनोक्ते सा तथेति स्वीकृत्य गृहे प्राप्ता। क्रमाच्चूढा प्रथमेऽहनि रहसि स्वां प्रतिज्ञां स्वपतेरवादीत्। 'अहो सत्यसन्धेयं' इति पत्याऽनुमता मणिमौक्तिकस्वर्णाभरणा वेश्मतो व्रजन्ती सा चौरै रुद्धा। तान् स्वप्रतिज्ञां जगौ। ततो 'हे भ्रातरस्ततो निवृत्ताहं भवदभिहितं विधास्यामि' इत्युक्त्वा तैर्मुक्ता पुरो यान्ती सा क्षुत्क्षामरक्षसा रुद्धा। सद्भाव उक्ते तथैव मुक्ता मालिकमुपेता 'अहमागतास्मि' इति तमारामिकमाह। 'अहो सत्यसन्धेयं' इति ध्यात्वा स्वभगिनीवत् वस्त्रादिभिः संमान्य तेन विसृष्टा। तथैव राक्षसाय तं व्यतिकरं जगौ। 'मालिकादपि मन्दसत्त्वोऽहं ?' इति मत्वा मालिकवद्रक्षसा मुक्ता। तद्दृत्पश्यतां तत्रैव तस्थुषां चौराणां मालिकराक्षसवृत्तान्तं वक्ति स्म। 'अहो ताभ्यामपि वयमधमाः ?' इति विचार्य तैरपि संमान्य मुक्ता। सा स्वपतेस्तेषां ज्ञातं निवेद्य सुखमन्वभवत्।

इति कथां कथयित्वाभयो जनान् पप्रच्छ—'हे जना एषु चतुर्षु दुष्करकारकः कः ?'। 'नवोढा स्वपत्यपि येनान्यपुरुषकृते प्रहिता स तत्पतिः दुष्करकारकः' इति तदीर्ष्यालुभिः प्रोचे। क्षुधातुरै राक्षसो वर्णितः। जारैर्मालिकः प्रशंसितः। इतः फलचौरेण चौराः संस्तुताः। स तदैवाभयेन धृत्वा पृष्टः सद्भावं प्रोचे। राज्ञा रुष्टेन वधादेशे दत्तेऽभयेनोक्तं—"एतस्माद्विद्याद्वयमपूर्वं गृह्यतां, तदनु यथार्हं कार्यम्। यतः—

"बालादपि हितं ग्राह्यममेध्यादपि काञ्चनम्। नीचादप्युत्तमा विद्या स्त्रीरत्नं दुष्कुलादपि ॥ १ ॥"

ततः सिंहासनस्थ एव मातङ्गं पुरत उपवेश्योन्नामिन्यवनामिनीविद्याद्वयं पठितुमारेभे। परं बहुवारं पाठेऽपि यदा हृदि कथमपि न तिष्ठति तदा क्रुद्धो धात्रीधवः 'किं रे मय्यपि कूटं कुरुषे ?' इति तमतर्जयत्। तदानीमभयोऽभ्यधात्—'देव !

आज्ञप्ताः । ते तद्योग्यविशिष्टकाष्ठार्थमटव्यां भ्रमन्तो महास्कन्धमेकं महाद्रुमं दृष्ट्वा हृष्टाश्चिन्तयाचक्रिरे—'नूनमयं सदैव-
तस्तरुः । तच्छेदे मास्मत्स्वामिनो विघ्नो भूत्' इति तदधिष्ठायकाराधनार्थमुपोष्य तद्दिने गन्धधूपमाल्यादिभिरधिवास्य
स्वस्थाने गताः । तद्वासी देवः स्वस्थानभ्रंशभीरुरभयमेत्येत्यभाणीत्—"अहं सर्वर्तुकपुष्पफलाद्भुतमंभितं नन्दनोपमानं
परितः प्राकारपरिवृतमेकस्तंभौकः करिष्यामि, मद्भवनोपरिस्थस्तरुरयं न छेद्यः" । अभयेन तथा प्रतिपन्ने व्यन्तरोऽप्यचि-
न्त्यशक्तिः सद्य एव यथोक्तं तं विदधे । ततस्तत्र नृपादिष्टा चेलणा पद्महृदपद्मे पद्मेव सदा लीलायते स्म ।
अन्यदा तत्रैव श्वपाकप्रेयसी गुर्विणी स्वभर्तुश्चूतफलास्वाददोहदमवादीत् । 'अकालश्चायमाम्राणां, सर्वर्तुकवने तानि
सन्ति, परं केनाप्युपायेनाप्यन्ते' इति ध्यात्वा श्वपाको वप्राद्बहिः स्थित एवावनामिन्या विद्यया शाखामाकृष्य चूतान्यु-
पाददे निशि, उन्नामिन्या च विद्यया शाखामुन्नमयांचकार। एवं कृत्वा पत्न्या दोहदं पूरयामास। अथारक्षकैर्लूनफलं सह-
कारं वीक्ष्य राज्ञे ज्ञापितं। राज्ञा चाभयाय भणितं—"यस्येदृशी शक्तिरस्ति, सोऽन्तःपुरेऽपि विप्लवं कुर्यात् । अतस्तं सप्ता-
हान्तः स्फुटीकुरु । नो चेत्तव चौरवद्दण्डः" । अभयस्तथेति प्रतिपद्य प्रतिदिनं पुरान्तर्भ्रमन्निश्येकत्र बहुद्यूतकारकपारदा-
रिकतस्करमांसलुब्धकजनैः कारिते संगीतके गत्वा नटागमं यावत्तेषां पुरस्तादेकां कथां कथयति । तद्यथा—
वसन्तपुरे निःस्वजीर्णश्रेष्ठिसुता बृहती कुमारी । सा वरार्थं कामदेवमपूजयत् । पुष्पाण्येकदा चोरयन्त्यारामिकेण
धृता । तद्रूपलुब्धेन प्रार्थिता प्राह—"कुमार्यस्म्यस्पृश्या । यतः—

अस्पृश्या गोत्रजा वर्षाधिका प्रव्रजिता तथा । नाष्टौ गम्याः कुमारी च मित्रराजगुरुस्त्रियः ॥ १ ॥"

भुवनतिलकसाधोरेवमेतच्चरित्रं, श्रवणयुगलपालीकुंभलत्वं प्रणीय ।
तनुत विनयसेवामर्हदादिष्वजस्रं, श्रयति लघु शिवश्रीरंकपालीं यथा वः ॥ १ ॥

इत्युपदेशप्रासादे प्रथमस्तंभे द्वादशं व्याख्यानम् ॥ १२ ॥

॥ अथ त्रयोदशं व्याख्यानम् ॥ १३ ॥

अथ विनयं स्तौति—

प्राप्नोति विनयाज्ज्ञानं ज्ञानाद्दर्शनसंभवः । ततश्चरणसंपत्तिश्चान्ते मोक्षसुखं लभेत् (भजेत्) ॥ १ ॥

सुबोधः । तत्र श्रुतज्ञानार्थिना विशिष्य गुर्वादिविनये प्रवर्तितव्यं । विनयपूर्वकं गृहीतं श्रुतं सद्यः सम्यक् फलप्रदं भवति । न त्वन्यथा । अत्र ज्ञातमिदम्—

मातंगसूनोर्वरविष्टरस्थाद्विद्या गृहीता फलति स्म शीघ्रम् ।
श्रीश्रेणिकस्येह यथा तथा स्यात्सप्रश्रयं शास्त्रमधीतमृध्यै ॥ १ ॥

राजगृहनगरे श्रेणिकनृपोऽन्यदा श्रीवीरमुखतो ज्ञातसतीत्वनिर्णयादिगुणतुष्टश्चेलणादेवीमाचष्ट—'त्वदर्थेऽन्यराज्ञीभ्यः कीदृशं विशिष्टं प्रासादं संपादयामि ?' । तयोक्तं—'एकस्तंभप्रासादं कारय' । राज्ञाभयकुमार आदिष्टः । तेन वर्धका

संवरफलं तपोबलमथ तपसो निर्जरा फलं दृष्टम्। तस्मात् क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥२॥
योगनिरोधाद्भवसंततिक्षयः संततिक्षयान्मोक्षः। तस्मात्कल्याणानां सर्वेषां भाजनं विनयः ॥ ३ ॥"

इत्थं वैनयिकी शिक्षा दत्तापि तस्मिन् प्रत्युत द्वेषाय संजज्ञे। गुरुर्निरुपेक्षितः। स क्रुद्धस्तालपुटं विषं प्रासुकजले तन्मृतयेऽक्षिपत्। स्वयं च भयात् पलायिष्ट। क्वाप्यरण्यान्तरे निशि सुप्तो दवाग्निना ज्वलितः रौद्रध्यानेन विपद्यान्तिमं नरकं ययौ। साधवस्तु तत्परिभोगाच्छासनदेव्या निवारिताः। ततो नरकाच्च्युत्वा मत्स्यादिषूत्पद्य भूरिभवभ्रमणं कृत्वा किञ्चित्कर्मलाघवात् क्षितिपस्य संप्रति नन्दनोऽजनि। ऋषिघातकुकर्मत इमां दुर्दशामाप्तवान्। मदुक्तवृत्तान्तं त्वन्मुखान्निशम्य स नीरुग् भावी"।

इति सूरिवचोऽङ्गीकृत्य मंत्रिमुख्यैस्तैः प्रत्युक्तं, तेन स चैतन्यं भेजे। भूपभूर्जातजातिस्मृतिः सूरिं नन्तुमगमत्। मुनिं प्रणम्य पूर्वकर्मक्षयार्थं मंत्रियुतनृपभूर्दीक्षां गुरुसन्निधौ जग्राह। यशोमत्यपि स्वभर्तुर्वृत्तान्तमधिगम्य क्षणिकमूर्गान्ते क्षणविनश्वरसुखनिरपेक्षतया पितरावापृच्छ्य प्रवव्राज। अन्ये चमूजनास्तज्ज्ञानकाय तच्चरितं जगुः।

अथो भुवनसाधुस्तीर्थेशादीनां दशानामपि अहर्निशं वैयावृत्त्यमकार्षीत्। गुरवोऽपि तं शशंसुः। स मुनिर्द्वासप्ततिमितान् पूर्वलक्षान् व्रतमपालयत्। अशीतिपूर्वलक्षं सर्वायुरात्मनः प्रपूर्य पर्यन्ते पादपोपगमनं व्यधात्। ततः केवलज्ञानभासाद्यानन्तानन्दसाम्राज्यप्रायं परमं पदं प्राप।

मरचन्द्रमहीपतेः प्रधानः सभायामागत्य नृपं विज्ञप्तवान्—"स्वामिन्नस्मदधिपस्य यशोमती सुता पुष्पारामे खेचरीभि-र्गीयमानं त्वत्कुमारस्य गुणग्राममश्रृणोत्। तदादि तमेव चित्ते ध्यायन्ती सुता कष्टेन दिनानि निर्गमयति। एकदा राज्ञा वियोगविधुरदुर्बलां सुतां वीक्ष्य पृष्टा सा यथास्थितं प्राह। तच्छ्रुत्वामरचन्द्रेण पाणिपीडनहेतवेऽहमत्र प्रेषितः"। नृपस्त-द्वाक्यं प्रमाणीकृत्य तं पुरुषं सममानयत्। अथ राज्ञा समादिष्टः मंत्रिसामन्तयुतो नृपात्मजः शुभेऽह्नि प्रतस्थे। अन्यदा सिद्धपुराद्बहिर्मूर्छामीलितलोचनो नृपपुत्रः सहसा रथोत्संगे पपात। मूकवन्नोत्तरं ददौ। हिमप्लुष्टांबुजम्लानाननैः सचि-वैरानीतानां मांत्रिकाणां प्रयोगा ऊषरे वृष्टय इव व्यर्था बभूवुः। तावत्तैः सचिवाद्यैः सौवर्णकमलदलनिषण्णः केवली देशनां ददातीति शुश्रुवे। ततस्तेऽपि ज्ञानिनोऽन्तिकं गत्वा प्रणम्य वाणीं शुश्रुवुः।

"भो भव्या भववारिधौ निरवधौ नक्रौघवत्संभ्रमात् भ्राम्यन्तः कथमप्यवाप्य सुकृतान्मानुष्यजन्माद्भुतम्
तत्साफल्यकृते विधत्त विनयेनाराधनं साधनं श्रीसिद्धेः परमेष्ठिनामतितरां शर्मद्रुमांभोधरम् ॥ १ ॥"

व्याख्यानावसाने कंठीरवाभिधो मंत्री पप्रच्छ—'भगवन्! कुमारस्यातर्कितदुःखाप्तिः केन हेतुनाऽभूत्' केवली स्माह—

"धातकीखंडभरते भुवनागारपुरे दूरीकृतपापौघः सूरिः सगच्छः समुपेयिवान्। तच्छिष्यो महात्मनां प्रत्यनीको वासवाख्यो दुर्विनयांभोधौ मग्न आसीत्। एकदा गणधरैः सोऽनुशिष्टः—"वत्स! विनयं कुरु। यत उक्तम्—

विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम्। ज्ञानस्य फलं विरतिर्विरतिफलं चाश्रवनिरोधः ॥ १ ॥

देवेसुं कोडिसयं कोडि बावन्न लक्ख चउणवई । सहसा चउआलीसं सत्त सया सट्ठी अग्गहिया ॥१॥

अंकतः १५२९४४४७६०

लक्खतिगं इगनवई सहस्स वीसा य हुन्ति तिन्नि सया । जोइस वज्जऊणं तिरियं जिणबिंबसंख इमा ॥२॥

अंकतः ३९१३२०

तेरस कोडिसयाइं गुणनवइ कोडि सट्ठि लक्खाइं । भुवणवईणं मज्झे जोइसियभुवणेसु य असंखा ॥ ३ ॥

अंकतः १३८९६००००००

कोडीसयाइं पन्नरस कोडिबायाल लक्ख अडवन्ना । बत्तीसं पुण सहसाइं असिइहिया उ सव्वग्गं ॥ ४ ॥

अंकतः १५४२५८३६०८०

अशाश्वतानि भरतादिकारितानि, श्रुतानि द्वादशांगानि च तेषु । तथा प्रवचनं चतुर्विधश्रमणसंघश्च, आचार्याश्च, उपाध्यायाः पाठकाश्च, दर्शनं श्रीमज्जिनशासनं च सम्यक्त्वं वा तेषु अनन्तरोक्तार्हदादिषु । पूजाप्रशंसनादिविनयो विधेयः । ग्रन्थान्तरे भूयांसः प्रोक्ता विनयभेदाः अत्र च दशैव स्वीकृता इति ।

अत्रार्थे भुवनतिलकमुनेः प्रबन्धः । स चायम्—

कुसुमपुरे धनदो नाम नृपः । तस्य पद्मावती प्रिया । तयोर्भुवनतिलकसूनुरभवत् । एकदा नृपाज्ञया रत्नस्थलपुरस्या-

चन्द्रसमुद्रस्वप्नचतुष्टयसूचितो रौहिणेयो जातः । देवक्यां च वासुदेवो जातः । विस्तरतोऽयं धर्मदासगणिकृतग्रन्थतो ज्ञेयः । ततो वसुदेवः स्वर्गसुखं प्राप ।

तृतीयलिंगे मनसः सुबुद्धि, श्रीनन्दिषेणो मुनिपुंगवो यः ।
नरेशवर्यां पदवीमवाप्य, मोक्षस्य सौख्यं च ततो चचार ॥ १ ॥

॥ इत्युपदेशप्रासादे प्रथमस्तंभे एकादशं व्याख्यानम् ॥ ११ ॥

॥ अथ द्वादशं व्याख्यानं ॥ १२ ॥

अथ तृतीयं विनयद्वारमुच्यते—

अर्हत्सिद्धमुनीन्द्रेषु धर्मचैत्यश्रुतेष्वपि । तथा प्रवचनाचार्योपाध्यायदर्शनेष्वपि ॥ १ ॥
पूजा प्रशंसनं भक्तिरवर्णवादनाशनम् । आशातनापरित्यागः सम्यक्त्वे विनया दश ॥ २ ॥

अर्हन्ति सुरासुरकृतपूजामित्यर्हन्तः—

उक्कोसं सत्तरिसयं जहन्न वीसाय दसय विहरंति । जम्मं पइ उक्कोसं वीसं दस हुंति हु जहन्ना ॥१॥

सिद्धाः कृतकृत्याश्च मुनयश्च तेषु । तथा धर्म एकादिदशान्तभेदश्च, चैत्यानि त्रिभुवनगतस्थिरास्थिरजिनभुवनानि । तत्र शाश्वतबिंबसंख्या चेयम्—

प्रान्ते कृतानशनं तं वन्दितुं सान्तःपुरश्चक्री प्राप । सालंकारास्तत्स्त्रियो वीक्ष्य स्वं कर्म स्मृत्वा 'अनेन तपसा स्त्रीवल्लभोऽहं भूयास' इति निदानं चक्रे । मृत्वा महाशुक्रे देवोऽभूत् । ततश्च्युत्वा सूर्यपुरेऽन्धकवृष्णेः सुभद्रापत्न्यां दशमो वसुदेवः पुत्रोऽभूत् । पूर्वकृतनिदानेन स्त्रीवल्लभो जातः । यत्र नगरे भ्रमति तत्र नगरनार्यो गृहकार्याणि मुक्त्वा तत्पृष्ठे परिभ्रमन्ति । तत उद्विग्नैर्नागरिकैः समुद्रविजयो राजा विज्ञप्तः । ततो नागरिकान् संतोष्य वसुदेवं प्राह—'त्वया राजलोक एव क्रीडा कर्तव्या' । तेन तद्वाक्यं स्वीकृतं । अन्यदा ग्रीष्मकाले शिवादेवीविलेपनार्थं चन्दनकच्चोलकं गृहीत्वा गच्छन्तीं दासीं दृष्ट्वा पृष्टवान्—'किं लात्वा यासि ? देहि मम' । सा न ददाति । तेन बलात् स्वदेहे विलेपितं । रुष्टया दास्या प्रोक्तं—'ईदृशोऽसि, ततो राज्ञा गृहकारागारे क्षिप्तोऽसि' । तेन पृष्टं—'कथं ?' । दास्या सर्वं स्वरूपं कथितं । ततो वसुदेवो रात्रौ मन्युना नगर्या निर्गत्य स्वां जंघां विदार्य तद्रक्तेन प्रतोल्यां लिलेख—'भ्रातुरपमानाद्वसुदेवश्चितायां प्रविष्टोऽस्ति' । ततस्तत्पुरश्चितामध्ये एकं मृतकं प्रज्वाल्यान्यदेशे गतः । प्रतिग्रामं भ्रमन् विद्याधरादीनां द्वासप्ततिसहस्रकन्यानां पाणिग्रहणं चक्रे । ततः शौरिपुरे प्रारब्धरोहिणीस्वयंवरमंडपेऽनेके राजन्या मिलिताः सन्ति । तेषु मध्ये वामनं कुब्जं च रूपं कृत्वा समागतः । तत्र रोहिणी तस्य मौलं स्वरूपं पश्यति । साऽन्यानवगणय्य वामनस्य कंठे वरमालां चिक्षेप । तदा समुद्रविजयादयो रुष्टास्तेन सह युद्धं चक्रुः । ततस्तेन ज्येष्ठभ्रात्रा समं युद्धमयोग्यं मत्वा स्वनामलांछितवाणः समुद्रविजयाय मुक्तः । तं लात्वा 'वसुदेवस्तुभ्यं प्रणमति' इति वर्णावलिं वाचयित्वा तेन ज्ञातं—'अयं मम लघुबान्धवः, परं केनापि हेतुनेदं रूपं कृतमस्ति' । ततः सर्वेऽपि मिलिताः । तेन सा परिणायिता । क्रमेण गजसिंह-

वने गतो भृगुपातं चिकीर्षुः कायोत्सर्गस्थमुनिना निवारितः। स च तं प्रणम्य स्वस्वरूपं जगौ। तच्छ्रुत्वा मुनिः प्राह—"मुग्ध! मलद्वारमलिनांगनासु मा मतिं कुरु। मरणे कृते कर्मणः क्षयो नास्ति। तस्माद्यावज्जीवं व्रतधर्मं कुरु। येनामुत्र भवे सुखी भवसि त्वम्"। तच्छ्रुत्वा तेन प्रव्रज्या गृहीता। विनयेन धर्मशास्त्रं पठन् गीतार्थोऽभूत्। स चाभिग्रहं ललौ–षष्ठपारणे साधूनां लघुवृद्धग्लानानां वैयावृत्त्यं कृत्वाचाम्लं कर्तव्यं। प्रत्यहमित्थं कुर्वाणः सुरेन्द्रेण वर्णितः संसदि। ततोऽश्रद्दधानौ द्वौ सुरौ परीक्षार्थं प्रवृत्तौ। तत्रैको देवोऽतिसारेण ग्लानसाधूभूय बहिरस्थात्। अन्यः साधुरूपेण नन्दिषेणपार्श्वे यावत्समागात्तावन्नन्दिषेणः षष्ठपारणे प्रत्याख्यानं परिसमाप्य भोक्तुमुपविशति। तदा भावसाधुं प्रति द्रव्यसाधुर्जजल्प—"भोः साधो! तवाभिग्रहः क्व गतः? यन्नगराद्बहिःस्थिततृषाक्रान्तग्लानसाधोर्वैयावृत्त्यमकृत्वा भोक्तुमुपविश्यते?"। ततो भावसाधुस्तदन्नपात्रं साधुनिश्रया मुक्त्वा प्रासुकं नीरं विहर्तुं गच्छन् सुरेणानेषणीयं सर्वत्र गृहेषु कृतत्वाद्बहुगृहेषु भ्रमन् सहसा कुत्रापि शुद्धजलं प्राप। ततस्तेन समं ग्लानसमीपे ययौ। तस्यातिसारग्रस्तस्य देहं प्रक्षालयितुं प्रवृत्तः। तदातीव दुर्गन्धं मुञ्चति साधौ नन्दिषेणो दध्यौ—'अहो कर्मतः कोऽपि न त्रुटति'। ततस्तं साधुं स्कन्धे कृत्वोपाश्रये नेतुं स चचाल। पदे पदे नन्दिषेणदेहं विष्टया लिंपति। तथापि मनाग्जुगुप्सां नाकरोत्। तं तथाभूतं शालायामानीय दध्यौ—'अयं साधुर्मया कथं नीरोगः करिष्यते' इति स्वं निनिन्द। ततस्तं वैयावृत्त्ये निश्चलं मत्वा देवौ तौ प्रत्यक्षीभूय सुगन्धपुष्पोदकवृष्टिं कृत्वा तं मुनिं स्तुत्वा क्षमयित्वा स्वर्गेऽगमताम्।

स यतिर्नेमिचरित्रसंमत्या द्वादशसहस्राब्दीं तपस्तप्तवान्, वसुदेवहिंडिसंमत्या च पञ्चपञ्चाशद्वर्षसहस्राणि दीक्षां पालितवान्।

## ॥ अथैकादशं व्याख्यानम् ॥ ११

अथ गुरुजिनवैयावृत्त्यं तृतीयं लिंगमभिधीयते—

**'वैयावृत्त्यं जिने साधौ, चेति लिंगं त्रिधा भवेत्'**

रागाद्यष्टादशदोषजयनाज्जिनस्तस्मिन् । तथा ( साधौ गुरौ ) गृणाति तत्त्वमिति गुरुः पञ्चविधाचारचतुरस्तस्मिन् । जिने द्रव्यभावपूजाभ्यां, तथा गुरौ अशनपानादिना वैयावृत्त्यं अवश्यतया परिशीलनं । एतत्प्राणिनां महते गुणाय स्यादिति तृतीयं लिंगं ।

अत्रार्थे नन्दिषेणप्रबन्धः । संप्रदायागतश्चायम्—

**वैयावृत्त्यं वितन्वानः साधूनां वरभावतः । बध्नाति तनुमान्नन्दिषेणवत् कर्म सुन्दरम् ॥ १ ॥**

नन्दिग्रामे सोमिलासोमिलयोर्नन्दनो नन्दिषेणोऽभूत् । बाल्ये तस्य पितरौ मृतौ । आकेशनखपर्यन्तं कुरूपं, बिडाल-वत् पिङ्गरनेत्रं, गणेशवल्लम्बोदरं, उष्ट्रवल्लम्बोष्ठं, हस्तिवद्दन्तुरं नन्दिषेणं दौर्भाग्यकर्मोदयं मत्वा स्वजना अपि तं तत्यजुः । स मातुलगृहे स्थितः दासकर्म करोति स्म । अत्यन्तकुरूपत्वान्न कापि कन्या तं परिणयति । तदा मातुलेनोक्तं—"मा खेदं कुरु, मम सप्त कन्याः सन्ति, तासु एकां कन्यां तुभ्यं दास्ये" । ततो निजपुत्र्योऽनुक्रमेणाभ्यर्थिताः, परं ताः सर्वाः प्रोचुः—'विषभक्षणपाशग्रहणादिकं करिष्यामः, परं नैवैनं वाञ्छामः' । ततो विषण्णो नन्दिषेणस्तद्गृहं त्यक्त्वा

वक्—"भो मुने! त्वरितं धर्मं कथय, नो चेदनेनासिना स्त्रीमस्तकवत्तव शिरश्छेत्स्यामि"। ततस्तं योग्यं सत्पात्रं मत्वा समासत 'उपशमो विवेकः संवर' इति पदत्रयमुच्चरन् नमस्कारपदगणनानन्तरं व्योममार्गे ययौ। साधूक्तं पदमाकर्ण्य स चौरोऽचिन्तयत्—'उपशमस्य कोऽर्थः' इति ध्यायन् पुनरब्रवीत्—'उपशमः क्रोधोपशान्तिः, स क्वास्ति ममाधुना?' इति ध्यात्वा क्रोधचिह्नं खड्गं त्यक्तवान्। पुनश्चिन्तयता तेन विवेकार्थो ज्ञातः—"कृत्याकृत्ययोः प्रवृत्तिनिवृत्ती विवेकः तेन धर्मो भवेत्, स मे क्वास्ति? दुष्टत्वसूचकं स्त्रीमस्तकं हस्तेऽस्ति"। ध्यात्वेति स्त्रीशिरस्त्यक्तं। पुनः संवरस्यार्थमचिन्तयत्—'चित्तेन्द्रियाणां निरोधः संवरः, स च मुत्कलस्य मम क्वास्ति?'। विचिन्त्येति मुनेः पादस्थाने कायोत्सर्गेण तस्थौ मुनिवत्। 'स्त्रीहत्याघं यावन्मम स्मृतिमेति तावन्मम कायव्युत्सर्जनं भवतात्' इति परिग्रहं कृतवान्। ततो रुधिरगन्धेन समागतकीटिकाभिः सर्वशरीरं चालनीवत्कृतं। पञ्चयामारभ्य सर्वांगं भक्षयन्त्यः पिपीलिकास्तस्योत्तमांगे निर्गताः। सार्धद्वयदिनं यावद्वेदनां तीव्रां सहमानः शुभध्यानान्न चलितः।

निजायुषि ततः क्षीणे स महात्मा मृतिं गतः। सहस्रारेऽष्टमे देवलोके सुरतयाऽजनि ॥ १ ॥

सद्वाक्यभावार्थमवेत्य बुद्ध्या पुत्रश्चिलात्याः प्रजहौ बहूनि।
पापानि तद्वद्भविकास्त्यजन्तु, क्रीडन्ति हस्ते (स्युर्हस्तगा यत्) शिवसौख्यलक्ष्म्यः ॥१॥

॥ इत्युपदेशप्रासादे प्रथमस्तंभे दशमं व्याख्यानम् ॥ १० ॥

एकदा तया सह पशुक्रीडां कुर्वन्तं तं ज्ञात्वा धनः स्वगृहान्निरकासयत् । ततः स सिंहगुहाख्यां चौरपल्लीं गतः। तत्र पल्लीशेन स्वावसाने तं सुतीकृत्य पल्लीपतिः कृतः । विषमास्त्रपीडितः स सुसुमां स्मरति । तदा चौरान् स पापधीरेवं वदति—"भो भोश्चौर्यकृते राजगृहे धनस्य गृहे वयं यामः। तत्र यद्धनं लभ्यते, तद्भवतां। एका सुसुमा तु मम" इति व्यवस्थायां ते चौरास्तद्गृहे विविशुः । धनश्रेष्ठ्यादीनामवस्वापिनीं दत्वाऽन्ये चौरा वित्तमादाय गताः । स च सुसुमां लात्वा चचाल। ततः सज्जीभूय कलकलं कृत्वा पुरारक्षसहितः श्रेष्ठी पञ्चपुत्रयुक् चौरपृष्ठे चचाल। ते चौरास्तान् वीक्ष्य भयविह्वला धनं त्यक्त्वा दिशो दिशं नेशुः। पुरारक्षा आत्तवित्ताः पश्चाच्चेलुः। चिलातीसुतस्तु तां वहमानः पञ्चपुत्रयुतं धनं करवालधृतं आगच्छन्तं वीक्ष्य कन्याशिरश्छित्त्वा कवन्धं तत्रैव मुक्त्वा करे तच्छिरो गृहीत्वा चचाल । तदा धनस्तत्रागमत्। तां तथाविधां दृष्ट्वा क्षणं विलप्य पश्चाद्वलित्वा स्वपुरमाजगाम। ततो धनश्रेष्ठी श्रीवीरपार्श्वे धर्मं श्रोतुं गतः सूनुयुतः। वीरं वंदित्वा देशनां शुश्राव। तथाहि—

"एष मे जनयिता जननीयं, बान्धवः परिजनः स्वजनो वा।
द्रव्यमेतदिति जातममत्वो, नैव पश्यति कृतान्तवशं स्वम् ॥ १ ॥

जिनवाण्या प्रबुद्धो धनो दीक्षां जग्राह। तीव्रं तपस्तप्त्वा स्वर्गं प्राप। तनयैः पञ्चभिः श्राद्धधर्मः समाश्रितः।

इतश्चिलातीदूतीपुत्रस्तु करात्तस्त्रीमस्तको रुधिरक्लिन्नशरीरोऽग्रतो वर्त्मनि श्रजन्मुनिमेकं कायोत्सर्गस्थं ददर्श। चौरोऽ-

## ॥ अथ दशमं व्याख्यानम् ॥ १०

अथ धर्मरागं द्वितीयं लिंगमनन्तरोक्तश्लोकद्वितीयपदेन कथ्यते—'रागो धर्मे जिनोदिते' जिनेन रागद्वेषरहितेनोदिते कथिते धर्मे यतिश्रावकभेदभिन्ने सदनुष्ठाने रागो मनसः परमप्रीतिः। शुश्रूषायां श्रुतधर्मरागोऽभिप्रेतः, इह तु चारित्रधर्मरागोऽभिप्रेतः। इति द्वितीयं लिंगं।

अत्रार्थे चिलातीपुत्रस्योदन्तः—

**तीव्रेण धर्मरागेण अघं दुष्टमपि स्फुटम्। चिलातीपुत्रवत्सद्यः क्षयं कुर्वन्ति देहिनः ॥ १ ॥**

क्षितिप्रतिष्ठपुरे यज्ञदेवाह्वो द्विजोऽनिन्द्यस्यार्हन्मतस्य निन्दां तनोति स्म। स्वं पंडितं मन्यमानो द्विजोऽन्यदा वादाय केनचित्क्षुल्लकेनाहूतः। ततस्तेन पणीकृतं—'यो मां जयति तस्याहं शिष्यो भवामि'। ततः क्षुल्लकेन निग्रहस्थाने नीतो दीक्षां ललौ। एकदा शासनदेवी द्विजं प्रत्याह—"यथा तरणिं विना चक्षुष्मानपि न पश्यति, तथा जीवो ज्ञानवानपि शुद्धचरणं विना न पश्यति, ततश्चरणे स्थिरतरो भव"। परं द्विजत्वाद्दुर्गंछां न जहाति। तत्प्रिया तदुपरि स्नेहं न मुञ्चति। ततस्तं वशीकर्तुं कार्मणमकरोत्। तेन क्लिश्यमानतनुर्द्विजर्षिः सम्यग्धर्ममाराध्य दिवि देवोऽभवत्। सापि कार्मणतस्तस्य मृतिं मत्वा सनिर्वेदा व्रतं लात्वा तदनालोच्य दिव्यगात्।

स द्विजः स्वर्गाच्च्युत्वा राजगृहे धनसार्थपस्य चिलातीचेटिकाकुक्षौ पुत्रो जातः। तस्य जनैश्चिलातीपुत्र इति नाम चक्रे। तत्प्रिया च धनस्यैव पञ्चानां पुत्राणामुपरि सुसुमाख्या सुता जज्ञे। धनेन दुहितुः क्रीडनकृते चिलातीपुत्रो मुक्तः।

इति देशनां निशम्य नियमग्रहणं कृत्वा श्रेष्ठी स्वधाम्नि गतः । अर्जुनोऽपि संवेगतस्तद्वधपापहननाय विभुपादमूले दीक्षां ललौ । तस्मिन्नेव दिने स ईदृशमभिग्रहमग्रहीत्—“हे प्रभो ! युष्मदाज्ञयाहं सदैव षष्ठेन तपःकर्मणात्मानं भावयन् विचरामि” । स्वामिनोक्तं—‘यथारुचि कुरु’ । साधुस्तथैव विचरति । स पारणार्थे भिक्षामटति । तं वीक्ष्य लोका एवं कथयन्ति—“अनेन मे पिता निहतः, अनेन मे माता निहता, एवं भ्राता भगिनी भार्या” इत्युक्त्वा ते जनास्तं मुनिमाक्रोशयन्ति, ताडयन्ति, हेलयन्ति, निन्दन्ति । तेषामुपरि मनसाप्यक्रुष्यमाणः सर्वोपसर्गं सम्यक् सहते । एवं कदाचित् षष्ठपारणके भक्तादिकं लभते तदन्नं स्वामिने निवेद्यामूर्छितस्तदश्नाति । एवमर्जुनमालाकारमुनेरुदारेण तपः-कर्मणात्मानं भावयतो बहुप्रतिपूर्णा षण्मासी व्यतिक्रान्ता । प्रान्तेऽर्धमासिक्या संलेखनयाऽन्तकृत्केवली भूत्वाऽनन्तचतुष्कांकितमव्ययपदमाससाद ।

**प्रतिदिवसं सप्त जनान्,हत्वा संप्राप्य वीरजिनदीक्षाम् । कृत्वाभिग्रहमसमं षण्मास्या सोऽन्तकृज्जातः १**

सुदर्शनोऽपि स्वर्गसुखं प्राप ।

इत्यागमश्रवणसादरचित्तवृत्तेर्वृत्तं निशम्य वणिजश्च सुदर्शनस्य ।
भव्या भवांबुनिधितारणनौनिभायां धर्मश्रुतौ कुरुत सन्ततमेव यत्नं ॥ १ ॥

अन्तकृतसूत्रेप्युक्तोऽयम् ।

॥ इत्युपदेशप्रासादे प्रथमस्तंभे नवमं व्याख्यानम् ॥

तस्य स्वरूपं निशम्य श्रेणिकः पटहवादनपूर्वकं पौरानेवं न्यवारयत्—"यावदर्जुनेन सप्त जना व्यापादिता न भवन्ति तावत्पुरात् केनापि न निर्गन्तव्यम्"।

अस्मिन्नवसरे श्रीवीरः समवसृतः । स्वाम्यागमनं सुदर्शनश्रेष्ठिमहाश्रावकेण श्रुतं । हृष्टः स जिनवाक्सुधापिपासुः 'अहं जिनवन्दनार्थं गच्छामीति' पितरौ व्यजिज्ञपत् । ततस्तं पितरौ व्याजह्रतुः—"वत्स ! संप्रति तत्र गच्छतस्तवोपसर्गो भावी, तद्विरम, इहस्थित एव भावेन वन्दस्व"। सुदर्शन उवाच—'हे पितरौ ! त्रिजगद्गुरोरुपदेशमश्रुत्वा मम भोक्तुमपि न कल्पते'। पितरावनुज्ञाप्य स त्रिजगदीशं नन्तुं मार्गे गच्छन् रुषा मुद्गरमुद्गीर्य कुपितकृतान्तमिवार्जुनमायान्तं दृष्ट्वा निर्भयचेता भुवं वस्त्राञ्चलेन प्रमार्ज्य तत्रोपविष्टः। जिनान्नमस्कृत्य चतुःशरणं प्रतिपद्य सर्वसत्त्वान् क्षमयित्वा साकारमनशनं कृत्वोपसर्गे पारगत एव पारयिष्यामीति विचिन्त्य पञ्चपरमेष्ठिमहामंत्रं स्मरन् कायोत्सर्गं चकार । तदा तमभिभवितुमक्षमो मंत्रोजीर्णविषभुजंग इव विगतरोपो यक्षः स्वमुद्गरमुपादाय भीत्येव तच्छरीरमपहाय पलायांचक्रे । तन्मुक्तोऽर्जुनोऽपि छिन्नद्रुरिव भुव्यपतत् । क्षणेन प्राप्तचैतन्यः श्रेष्ठिनं विलोक्य पृच्छति स्म । 'कस्त्वं ? क्व प्रस्थितोऽसि ?' । श्रेष्ठ्यभ्यधापत—'अहं सुदर्शनः श्रीत्रैशलेयं नन्तुं व्रजामि, त्वमपि सर्वज्ञं नन्तुमेह्येहि'। ततो द्वावपि जगत्समवसरणे गतौ । जिनं प्रणम्य देशनां शुश्रुवाते । तथाहि—

> "मानुष्यमार्यविषयः सुकुलप्रसूतिः श्रद्धालुता गुरुवचःश्रवणं विवेकः ।
> मोहान्धिते जगति संप्रति सिद्धिसौधसोपानपद्धतिरियं सुकृतोपलभ्या ॥ ११ ॥"

अत एवैषा शुश्रूषा सम्यक्त्वस्याद्यं लिंगं ज्ञेयं । अत्रार्थे सुदर्शनस्य प्रबन्धो निष्टंक्यते—

राजगृहपुरेऽर्जुनमालाकारो वसति स्म । तस्य रूपयौवनाभिरामा प्रियतमा बन्धुमतीनाम्नी । तन्नगराद्बहिः पञ्चवर्णकुसुमाकीर्णः पुष्पारामो वर्तते । तस्यादूरे पलसहस्रनिष्पन्नलोहमयमुद्गरं बिभ्रतो मुद्गरपाणियक्षस्यायतनमस्ति । प्रत्यहं सोऽर्जुनः सदारस्तं कुलदैवतमर्चयति स्म । अन्यदा कस्मिंश्चिन्महोत्सवदिने स्वेच्छाचारिणः षड् पुरुषा मुद्गरयक्षायतने क्रीडन्तो विचरन्ति । तदानीं सभार्यः सोऽर्जुनः सुपुष्पाणि गृहीत्वा यक्षपूजार्थं समागच्छन् षड्भिर्गोष्ठिकैर्विलोकितः । तैरन्योऽन्यमालुलोचे यदेतस्य जायां निरुपमकायामद्यैनं बध्वा तत्प्रत्यक्षमेव स्वैरमभिरमामहे इति प्रतिश्रुत्य द्वारकपाटपश्चाद्भागे निलीय तस्थुः । ततः स पुष्पादिभिः पूजां कृत्वा पञ्चांगं प्रणामं करोति, तावत्ते षडपि गोष्ठिकाः सहसा निःसृत्य तं बन्धनैर्बध्वा तत्प्रियया सह भोगान् बुभुजिरे । तेन चिन्तितं—“ धिग् मम जीवितं । यतः—

**सहन्ते प्राणिभिर्बाढं पितृमातृपराभवाः । भार्यापराभवं सोढुं तिर्यञ्चोऽपि न हि क्षमाः ॥ १ ॥**

अहो यन्मम पश्यत इमे पशुवत् पशुधर्ममाचरन्ति ” । सोऽप्यमर्षेण यक्षमुपालब्धवान्—“ भो गुह्यक ! त्वं सत्यं शिलामय एव देवः । इयत्कालं पूजितस्यैतदेव फलं मया लब्धं ” । तदा ज्ञानेन गुह्यकेन ज्ञातं । यक्षोऽपि तद्वचःश्रवणसंपन्नकोपाटोपोऽर्जुनदेहमनुप्रविश्य सूत्रबन्धनानि त्रोटयित्वाऽयोमयमुद्गरमुत्पाट्य सबन्धुमतीकान् षडपि गोष्ठिकान् चूर्णयांचकार । ततः प्रभृति प्रत्यहं चान्यानपि स्त्रीसहितान् षड् पुंसो यावन्न विनाशयति तावन्न तस्यामर्ष उपशाम्यतीति

यन्ते । अजीवेभ्यो जीवा विपद्यन्ते । जीवेभ्योऽजीवा विपद्यन्ते । अजीवेभ्योऽजीवपदार्था विनश्यन्ति । नित्यानेद्यानेद्यादिर्ध्रुवः । इत्थमन्येऽपि निजसंदेहं भित्त्वा क्रमेण प्रव्रजिताः ।

गणपतेश्चरितं श्रुतसौख्यदं, शृणुत भव्यजना गुणमन्दिरम् ।
भवति येन कुदर्शनहानितः, शिवसुखैककरं शुचिदर्शनम् ॥ १ ॥

॥ इत्युपदेशप्रासादे प्रथमस्तंभेऽष्टमं व्याख्यानम् ॥ ८ ॥

## ॥ अथ नवमं व्याख्यानम् ॥ ९ ॥

अथ सम्यक्त्वस्य शुश्रूषादित्रिलिंगस्वरूपं लिख्यते—

शुश्रूषा भगवद्वाक्ये रागो धर्मे जिनोदिते । वैयावृत्त्यं जिने साधौ चेति लिंगं त्रिधा भवेत् ॥ १ ॥

अर्हत्प्रणीतवचने प्रतिदिनं शुश्रूषा श्रोतुमिच्छा । न हि श्रवणमन्तरेण ज्ञानादिगुणः कर्हिचिज्जायते । यदागमः—

सवणे नाणे य विन्नाणे पच्चक्खाणे य संजमे । अणिण्हए तवे चेव वोदाणे अकिरिय निव्वाणे ॥ १ ॥

तथा चोक्तं याकिनीसूनुभिः—

क्षारांभस्त्यागतो यद्वन्मधुरोदकयोगतः । बीजं प्ररोहमादत्ते तद्वत्तत्त्वश्रुतेर्नरः ॥ १ ॥

इत्यादि चिन्तयन् भगवताभाषितः—'हे गौतमेन्द्रभूते ! स्वागतं ते वर्तते ?'। ततस्तेन चिन्तितं—"अहो असौ मम नामापि वेत्ति ?।

**जगत्रितयविख्यातं को वा नाम न वेत्ति मे । जनस्याबालगोपालं प्रछन्नः किं दिवाकरः ॥ १ ॥**

परं मां मिष्टैर्वाक्यैः संतोषयति । मत्तो बिभेति, यथा वादं न करोति । परं नाहं तुष्यामि । यदि मम मनोगतं संशयं प्रकाशयति विस्मयश्च मे स्यात्तदाहं सर्वज्ञं जानामि इति"। अत्रान्तरे भगवानाह—"हे गौतम ! किं मन्यसे, अस्ति जीव उत नास्तीति ?। नन्वयमनुचितस्ते संशयः । त्वं मन्यसे यच्चतुर्भिः प्रमाणैरग्राह्यत्वान्नास्ति जीव इति । परं त्वं वेदपदानामर्थं न जानासि, तेनायं संदेहः । वेदपदानीमानि—"विज्ञानघन एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, न प्रेत्य संज्ञास्ति" इति जीवाभावस्त्वया स्थाप्यते, अयुक्तं चैतदित्यादिसर्वयुक्तिव्याप्तं व्याख्यानं विशेषावश्यकतो ज्ञेयं । तथा क्षीरे घृतं, तिलेषु तैलं, काष्ठेऽग्निः, पुष्पे सौरभ्यं, चन्द्रकान्ते सुधा, तथा जीवोऽपि देहान्तर्गतो ज्ञेयः । अतोऽस्ति जीवः । ततः—

**छिन्नम्मि संसयम्मी जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिं खंडियसएहिं ॥ १ ॥**

ततः—उपज्जए वा विगमए वा धुवए वेति त्रिपदीं प्रभुवदनात्प्राप्य द्वादशांगीं विरचितवान् । तत्र उपज्जए त्ति कोर्थः ? भगवानाह—"जीवेभ्यो जीवा उत्पद्यन्ते । जीवेभ्योऽजीवा उत्पद्यन्ते, यथा देहेभ्यो नखाद्युत्पद्यते । अजीवेभ्यो जीवा उत्पद्यन्ते, स्वेदाद्यथा यूकादयः । अजीवेभ्योऽजीवा उत्पद्यन्ते । विगमो हानिः स्यात्, कथं ? जीवेभ्यो जीवा विप-

चन्द्रः किं न स यत्कलंकसहितः सूर्योऽपि नो तीव्ररुक्,
मेरुः किं न स यन्नितान्तकठिनो विष्णुर्न यत्सोऽसितः ।
ब्रह्मा किं न जरातुरः स च जराभीरुर्न यत्सोऽतनु-
र्ज्ञातं दोषविवर्जितोऽखिलगुणाकीर्णोऽन्तिमस्तीर्थकृत् ॥ १ ॥

अयं सूर्य इव दुष्प्रेक्ष्यः । जलधिरिव दुस्तरः । अस्याग्रे हा मया महत्त्वं कथं रक्षणीयं ? । अहो मया मूर्खेण पञ्चाननास्ये करः क्षिप्तः । बब्बूलवृक्षः परिरंभितः 'इतस्तटी, इतो व्याघ्र' इति न्यायो जातः । किं च कीलिकाहेतोः कः प्रासादं भंक्तुं वाञ्छति ? सूत्रार्थी को हारं त्रोटयेत् ? । भस्मने कश्चन्दनं दहेत् ? । लोहार्थी को महांभोधौ नौभंगं कुर्यात् ।

अविचारितकारित्वमहो मे मन्ददुर्धियः । जगदीशावतारं यज्जेतुमेनं समागतः ॥ १ ॥

अमुना केनचिद्दिव्यप्रयोगेण मन्मनो वशीकृतं, येनेयं मतिर्जाता । अस्याग्रेऽहं कथं वक्ष्ये ? कथं पार्श्वे यास्यामि ? । आजन्म सेवितः शिवो यदा मे यशो रक्षति तदा वरं । अथवा जगज्जैत्रस्यास्याग्रे शिवोऽपि किं करोति ? सोऽपि क्वापि नंष्ट्वा गतः ।

कथञ्चिदपि भाग्येन चेद्भवेदत्र मे जयः । तदा पण्डितमूर्धन्यो भवामि भुवनत्रये ॥ १ ॥

एकेन सिंहनादेन सर्वे श्वापदाः प्रणश्यन्ति । किं च—

**तावद्गजः प्रस्रुतदानगल्लः, करोति कालांबुदगर्जितानि ।**
**यावन्न सिंहस्य गुहास्थलीषु, लांगूलविस्फोटरवं शृणोति ॥ १ ॥**

**मम भाग्यभरायद्धा वाद्ययं समुपस्थितः । दुर्भिक्षे क्षुधितस्यान्नलाभश्चिन्तातिगो यथा ॥ १ ॥**

अथ यामि तस्य पार्श्वे । यमस्य मालवो दूरे नास्ति । नापि चक्रिणोऽजेयं किमपि । सुधियां किमज्ञेयं । कल्पपादपानां किमदेयं । तत्पराक्रमं पश्यामि । साहित्यतर्कव्याकरणछन्दोऽलंकारादिशास्त्रेषु ममातीव दक्षत्वं विद्यते । क्व शास्त्रे मम श्रमो नास्ति ? । अमुं जयामि । सर्वज्ञाडंबरं दूरीकरोमि" । ततोऽलंकारदेहकान्तिविवर्धनार्थं विरचितद्वादशतिलकः स्वर्णयज्ञोपवीतधरः कृतस्फारवस्त्राडंबरः पञ्चशतछात्रैः पठ्यमानविरुदश्चलितः । विरुदानि यथा—भारतीकंठाभरण ज्ञातसर्वपुराण वादिकदलीकृपाण वादितमोभाण वादिघरट्टमुद्गर सर्वशास्त्राधार प्रत्यक्षपरमेश्वर वादिघूकभास्कर वादि-समुद्भागस्ते वादिशलभदीपक वादिज्वरधन्वन्तरे सरस्वतीलब्धप्रसाद शिष्यीकृतबृहस्पते इत्यादीनि विरुदानि शृण्वन्नग्रे गच्छन्नशोकादीनाजन्मवद्धवैरं मुक्त्वा स्थितान् श्वापदांश्च वीक्ष्य प्राह—'अहो महान् धूर्तो ज्ञेयः' । तदा छात्राः प्राहुः—"हे पूज्य ! वयं प्रत्यहं तव प्रसादेन शतकोटिवादिजये समर्थाः, किं पुनरस्य ? । एक एव छात्र एनं निग्रहिष्यति" । तच्छ्रुत्वा स शंकितो जिनपुरः सोपानस्थितो दध्यौ विस्मितः—किमयं ब्रह्मा ? किं वेश्वरः ? किं विष्णुः ? किं सूर्यः ? ।

किं तत्र वादिकीटे, तव प्रयासेन यामि बन्धोऽहम्। कमलोन्मूलनहेतोर्नेतव्यः किं सुरेन्द्रगजः ॥२॥

गौतमो भ्रातरं प्राह—"भो मया सर्वेऽपि वादिनो जिताः। अद्याप्ययं तिष्ठति। किंवत्? मुद्गपाके कोकडुकणवत्, घरट्टेषु अखंडतिलवत्, अगस्तिपीते समुद्रे जलबिन्दुवत्। गोष्पदप्रायोऽयं वादी।

एकस्मिन्नजिते ह्यस्मिन् सर्वमप्यजितं भवेत्। एकदा हि सती लुप्तशीला स्यादसती सदा ॥ १ ॥

यत उडुपे स्वल्पमपि छिद्रं विनाशाय स्यात्। किं च—

गता गौडदेशोद्भवा दूरदेशं, भयाज्जर्जरा गौर्जरास्त्रासमीयुः।
मृता मालवीयास्तिलंगास्तिलांगोद्भवा जज्ञिरे पंडिता मद्भयेन ॥ १ ॥

विश्वे कोऽपि नास्ति, यो मया सह वादं कुरुते। अयं च कर्तुमिच्छति। तन्मंडूकः कृष्णसर्पस्य चपेटां दातुमुद्यतः। वृषभः शृंगाभ्यामैरावणं प्रहर्तुं कांक्षति। द्विपो दन्ताभ्यां पर्वतपाताय यतते। अथवात्रागमनेन यदहं कोपितः, तत्प्रसुप्तसिंह उत्थापितः। स्वाजीविकायशोहानये किं कृतममुना, समीरान्भिमुखस्थेन दावाग्निर्ज्वालितः। देहसौख्याय कपिकच्छूलतालिंगिता। शेषशीर्षमणिं लातुं हस्तः प्रसारितः। अपि च—

तावद्गर्जति खद्योतस्तावद्गर्जति चन्द्रमाः। उदिते च सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ १ ॥

ज्ञात्वा तन्मुख्य इन्द्रभूतिरचिन्तयत्—"अहो! मयि सति सर्वज्ञऽपरोऽपि स्वं सर्वज्ञं ख्यापयति ?। कदाचित् कोऽपि मूर्खः केनचिद्धूर्तेन वञ्च्यते, अनेन तु सुरा अपि वञ्चिताः, यदेवं यज्ञमंडपं मां च विहाय सरोवरं भेका इव, मद्भृद्धं करभा इव, सूर्योद्योतं घूका इव, सुगुरुं कुशिष्या इव, तत्समीपं गच्छन्ति। अथवा यादृशोऽयं सर्वज्ञस्तादृशा एवैते। तथाप्यहं न सहिष्ये एनमैन्द्रजालिकं। न च सूर्यद्वयमाकाशे, नापि केसरिद्वयं गुहायां, न च खड्गद्वयं कोशे तिष्ठेत्। ततो भगवन्तं वन्दित्वा प्रतिनिवर्तमानान् जनान् पप्रच्छ—'भो भो दृष्टोऽयं सर्वज्ञः कीदृग्रूपः ?'। लोका अष्टप्रातिहार्यादिस्वरूपं प्रोचुः। तथा—

यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्।
पारेपरार्ध्यं गणित यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात्॥ १॥

इत्याद्युक्ते सति स दध्यौ—"नूनमेष महाधूर्तः, येन समस्तोऽपि लोको विभ्रमे पातितः। परमहं न सहे एनं, कमिव ? तमस्तोममपाकर्तुं सूर्यवत्, केसरोल्लुञ्चनं हरिवत्। मया वादीन्द्रा अपि मौनं स्थापितास्तदा कोऽयं ममाग्रे गेहेशूरः। येन वातेन गजा उत्क्षिप्ताः, का तदग्रे तूलपूणिका"। ततः—

अग्निभूतिरुवाचैवं भ्रातः कस्तेऽत्र विक्रमः। कीटिकायां कथं पक्षिराट् करोति पराक्रमम्॥ १॥

आदिशब्दादेकान्तनयांगीकारस्था मिथ्यादृशः। यदुक्तं—

जावइया वयणपहा तावइया चेव हुंति नयवाया । जावइया नयवाया तावइयं चेव मिच्छत्तं ॥ १ ॥

तेषां । तथा कुत्सिता दृष्टिर्दर्शनं येषां ते कुदृष्टयः त्रिषष्ट्यधिकशतसंख्याः पाखण्डिनः । यदागमः—

असियसयंकिरियाणं अकिरियवाईण होइ चुलसीई। अन्नाणिय सत्तट्ठी वेणइयाणं च वत्तीसं ॥ १ ॥

तेषां । तथेति शेषः । बौद्धाः क्षणिकास्तेषां । तथा कूटवादिनो नास्तिकास्तेषां । भव्यैः शुद्धबुद्धिभिः । वर्जनं विधीयते । सा चतुर्थी श्रद्धा स्यात् । सर्वथा तत्संगः सपदि परित्यजनीय एवेत्यर्थः ।

उक्तमर्थमिन्द्रभूतिदृष्टान्तेन दृढीक्रियते—

गुरुं वीरं च संप्राप्य इन्द्रभूतिर्गणाधिपः । जातः कुसंगत्यागेन सद्धर्मकथने रतः ॥ १ ॥

केवलज्ञानोत्पत्त्यनन्तरं श्रीवीरोऽपापायां मह(हा)सेनवने जगाम । तत्र च सोमिलविप्रस्य गृहे यज्ञार्थमेकादश द्विजोत्तमा मिलिताः सन्ति इन्द्रभूत्यग्निभूत्यादयः । तेष्वाद्यानां पञ्चानां पञ्चपञ्चशतपरिवारः । द्वयोः प्रत्येकं सार्धत्रिशतपरिकरः । चतुर्णां प्रत्येकं त्रिशतपरिवारः । एवमेते चतुश्चत्वारिंशच्छतद्विजाः । अत्रान्तरे भगवन्नमस्यार्थमागच्छतः सुरासुरान् विलोक्य दुन्दुभिनिर्घोषं श्रुत्वा च प्रोचुः—'अहो ! अस्माकं यज्ञमंत्राकृष्टाः सुराः साक्षात्समागताः' । परं तान् देवान् श्वपाकपाटकमिव यज्ञपाटकं मुक्त्वा प्रभुपार्श्वं गच्छतो विज्ञाय द्विजा विषेदुः । ततोऽमी सर्वज्ञं वन्दितुं यान्तीति जनश्रुत्वा

इति प्राकृतवीरचरित्रे ।

इत्थं जमालेश्चरितं निशम्य कुर्यान्न संगो गतदर्शनानाम् ।
प्राप्तेऽपि संगे ननु ढंकवद्ये श्रद्धां न मुञ्चन्ति लगन्ति ते द्याम् ॥ १ ॥

॥ इत्युपदेशप्रासादे प्रथमस्तंभे सप्तमं व्याख्यानम् ॥ ७ ॥

---

## ॥ अथाष्टमं व्याख्यानम् ॥ ८ ॥

अथ चतुर्थं सर्वविसंवादिनां पाखंडिनां परिहाररूपं भेदं विवृणोमि—

शाक्यादीनां कुदृष्टीनां बौद्धानां कूटवादिनाम् । वर्जनं क्रियते भव्यैः सा श्रद्धा स्यात्तुरीयका ॥ १ ॥

शाक्यादयश्चोन्मार्गस्योपदेशकाः । ते चामी—

न मांसभक्षणे दोषो, न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ १ ॥

पिब खाद च चारुलोचने, यदतीतं वरगात्रि तन्न ते ।
न हि भीरु गतं निवर्तते, समुदयमात्रमिदं कलेवरम् ॥ २ ॥

त्वदीया संघाटी दग्धा"। इत्यादि तदुक्तं परिज्ञाय संबुद्धा सा सम्यक् प्रेरितास्मीत्यभिधाय मिथ्यादुष्कृतं दत्वा जमालिं गत्वा प्रज्ञापयति। यदासौ कथमपि न प्रबुद्धस्तदा तमेकाकिनं मुक्त्वा भगवत्समीपमाजगाम।

एकदा जमालिश्चंपायामेत्य श्रीवीरमब्रवीत्—"हे जिन! मां मुक्त्वाऽन्ये तव शिष्याश्छद्मस्थ्येनैव विहरन्ति। अहं तूत्पन्नज्ञानदर्शनोऽर्हन् सर्वज्ञो जातः"।

**ततः स गौतमेनोचे, जमाले इति मा वद। स्खलति क्वापि न ज्ञानं, केवलज्ञानिनो यतः ॥ १॥**

यदि केवली त्वमसि, तर्हि मत्प्रश्नोत्तरं प्रयच्छ—अयं लोकः शाश्वतोऽशाश्वतो वा? इमे जीवा नित्याः किं वाऽनित्याः?। इति श्रुत्वा स तदुत्तरमलभमानो मौनं दधौ नियंत्रितसर्प इव। ततो विभुः प्राह—"हे जमाले! ये छद्मस्थाः शिष्यास्तेऽपि अनयोरुत्तरं व्याकर्तुमीशते—

**नित्यो भूतभवद्भाव्यपेक्षया लोक एषकः। अनित्यः पुनरुत्सर्पिण्यवसर्पिण्यपेक्षया ॥ १ ॥**
**द्रव्यरूपेण जीवोऽयं जमाले! शाश्वतः सदा। तिर्यग्नृनारकामर्त्यैः पर्यायैस्तु न शाश्वतः॥ २ ॥"**

स्वामिनो वाक्यमश्रद्दधानः स्वं च परं चोत्सूत्रारोपणैर्मिथ्याभिनिवेशेन व्युद्ग्राहयन् अवसाने स पक्षाशनत्यागं विधायानालोच्याप्रतिक्रान्तो लान्तके किल्बिषिकस्त्रयोदशपयोध्यायुःस्थित्योत्पन्नः। चरित्रमेतद्विशेषतः पञ्चमांगाज्ज्ञेयं। तथा—

**जिणनाहेण वि भणियं, सुरतिरियनरेसु पंचवेलाओ। भमिऊण पत्तबोही लहीहि निव्वाणसुक्खाइं॥ १॥**

युक्तिभिर्वितथमिति चिन्तयामास—"क्रियमाणं कृतं, चलमानं चलितमित्यादिभगवद्वचनं वितथं । यस्मान्मम साक्षात्प्रत्यक्षमेवेदं वृत्तं, यद्रुत संस्तारकः क्रियमाणो न कृतः । तस्मात्सर्वमपि वस्तु क्रियमाणं कृतं न स्यात् । किं तु कृतमेव कृतमुच्यते । यत् घटादिकार्यं क्रियाकालस्यान्त एव भवदृश्यते, शिवस्थासाद्यद्धायां न दृश्यते । आबालाध्यक्षसिद्धमेवेदं" । इत्यालोच्य साधूनां स स्वकल्पितं बभाषे। तदा स्वगच्छस्थविरैरिदमुक्तं "हे आचार्य ! भगवद्वाक्यमिदमवितथमेव, नाध्यक्षविरुद्धं । यत एकस्मिन् घटादिकार्येऽवान्तरकारणकार्याणि संख्यातीतानि सन्ति । मृदानयनमर्दनापिंडविधानशिवकस्थासादिकालः सर्वोऽपि घटनिवर्तनक्रियाकाल इति तवाभिप्रायः, अयं चायुक्त एव । यतस्तत्र प्रतिसमयमन्यान्यकार्याण्यारभ्यन्ते निष्पद्यन्ते च, कार्यस्य करणकालनिष्ठाकालयोरेकत्वात् । घटस्तु पर्यन्तसमय एवारभ्यते तत्रैव निष्पद्यते चेति । अत्र बहु वक्तव्यं, तन्महाभाष्यतो ज्ञेयं । तथा चोक्तं भवताऽर्धसंस्तृतदर्शनात्तदप्ययुक्तं, यतो यद्यदा यत्राकाशप्रदेशे च समास्तीर्यते, तत्तदा तत्रास्तीर्णमेवेदं । पाश्चात्यवस्त्रास्तरणसमयेन खल्वसावास्तीर्ण एव । विशिष्टसमयापेक्षाणि भगवद्वचनान्यतोऽदोषः" । इत्यादियुक्तिभिरबुध्यमानं तं विहाय स्थविराः श्रीमहावीरान्तिके ययुः । सुदर्शनापि तदा तत्रैव श्राद्धढंककुंभकृद्गृहे आसीत् । सा जमाल्यनुरागेण तन्मतमेव प्रपन्ना । ढंकमपि व्युद्ग्राहयितुं प्रवृत्ता । ततो ढंकेन मिथ्यात्वमुपगतेयमिति ज्ञात्वा प्रोक्तं—'नेदृशं वयं किमपि जानीमः' । अन्यदा चापाकमध्ये मृद्भाजनोद्वर्तनपरावर्तनं कुर्वता तेनाङ्गारमेकं वस्त्रैकदेशे प्रक्षिप्य तत्रैव प्रदेशे स्वाध्यायं कुर्वत्याः सुदर्शनायाः संघाट्यंचलो दग्धः । तया प्रोक्तं—'श्रावक ! त्वया मदीयसंघाटिका दग्धा' । तेनोक्तं—"ननु दह्यमानं दग्धमिति भगवतां सिद्धान्तः, ततः क्व केन

अत्रार्थे गतदर्शनानां जमाल्यादीनामुदाहरणं । तच्चेदं—

कुंडपुरं नाम नगरं । तत्र जगवतः श्रीत्रैशलेयस्य जागिनेयो जमालिर्नामा राजपुत्र आसीत् । तस्य च जार्या श्रीवर्धमानस्य डुहिता सुदर्शनाह्वा । जमालिस्तया समं जोगान् बुजुजे । अन्यदा विजुर्विहरंस्तत्रागात् । जमालिस्तमायान्तं मत्वा तत्रागत्य प्रदक्षिणापूर्वं नत्वा धर्मदेशनामिमामश्रृणोत्—

"गृहं सुहृत्पुत्रकलत्रवर्गो, धान्यं धनं मे व्यवसायलाजः ।
कुर्वाण इत्थं न हि वेत्ति मूढो, विमुच्य सर्वं व्रजतीह जन्तुः ॥ १ ॥"

इति वाचं श्रुत्वा गृह एत्य महताऽऽदरेण पितुर्मातुश्चाज्ञां लात्वा स क्षात्रपञ्चशतीयुतः प्राव्रजत् । तदनु सहस्रस्त्रीयुता सुदर्शनापि प्रव्रजिता । ततश्चैकादशस्वंगेष्वधीतेषु तेन जिनो विहारार्थमुत्कलापितः । जिनेन तूष्णीमास्थाय न किंचिडुत्तरमदायि । तथापि पञ्चशतसाधुयुतो निर्गतः श्रावस्त्यां गतः । तत्र च तिंडुकोद्याने चैत्ये स्थितः । तत्रास्यान्तप्रान्ताहारैस्तीव्रो रोगातंकः समुत्पन्नः । तेन च न शक्नोत्युपविष्टः स्थातुं । ततो वजाण श्रमणान्—'मन्निमित्तं शीघ्रमेव संस्तारकमास्तृणीत, येन तत्र तिष्ठामि' । ततस्तैः कर्तुमारब्धोऽसौ । बाढं च दाहज्वराजिजूतेन जमालिना पृष्टं—'संस्तृतः संस्तारको न वेति?' । साधुजिश्च संस्तृतप्रायत्वादर्धसंस्तृतेऽपि प्रोक्तं—'संस्तृत इति' । ततोऽसौ वेदनाविह्वलितचेता उत्थाय तत्र तिष्ठासुरर्धसंस्तृतं तं दृष्ट्वा क्रुद्धः । 'क्रियमाणं कृतं' इत्यादि सिद्धान्तवचनं स्मृत्वा मिथ्यात्वोदयतो वक्ष्यमाण-

'हा मदीयरुधिरेणाप्कायजीवा निधनं यान्ति' इत्येवं भावयन् अन्तकृत्केवली भूत्वा मोक्षमगमत् । तदा तत्रासन्नैः सुरैस्तस्य केवलिमहश्चक्रे । अतस्तत्तीर्थं जातं प्रयाग इति लोके । तत्र परसमयमाहेश्वराः स्वांगे क्रकचं दापयन्ति ।

अथ पुष्पचूला साध्वी मह्यां विहृत्य सकलकर्ममलक्षयादनन्तानन्दमयं शिवमरुजं पदं प्राप ।

श्रीपुष्पचूलाचरितं पवित्रमुक्तं समाकर्ण्य गुणैः प्रशस्तम् ।
ये स्युर्गुरूणां चरणेषु रक्ताः क्रीडन्ति भव्याः सुखसद्मनीमे ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ प्रथमस्तंभे षष्ठं व्याख्यानम् ॥ ६ ॥

---

## ॥ अथ सप्तमं व्याख्यानम् ॥ ७ ॥

अथ तृतीयं व्यापन्नदर्शनलक्षणं भेदं व्याचिख्यासुराह—

**व्यापन्नं दर्शनं येषां निह्नवानामसद्ग्रहैः । तेषां संगो न कर्तव्यस्तच्छ्रद्धानं तृतीयकम् ॥ १ ॥**

असद्ग्रहैरभिमतव्यवस्थापककदाग्रहैः व्यापन्नं नष्टं दर्शनं सर्वनयवस्तुबोधरूपं सम्यक्त्वं येषां निह्नवानां यथावस्थितसमस्तवस्तुप्रतिपत्तावपि एकत्र कुत्रचिदर्थेऽन्यथाप्रतिपत्त्या यथा जिनवचनं निह्नवतेऽपलपन्तीति निह्नवास्तेषां । उपलक्षणत्वात् पार्श्वस्थकुशीलादीनां । तेषां संगः संपर्कस्त्याज्य एव । अन्यथा दर्शनहानिरेव।एतच्छ्रद्धानं तृतीयं भवेदित्यर्थः ।

देवलोकसुखानि प्राप्यन्ते" । ततः सा राज्ञी प्रतिबुद्धोवाच—'भोः कान्त ! प्रव्रज्यायै मामनुजानीष्व' । नृप उवाच—'प्रिये ! त्वद्वियोगं क्षणमपि न क्षमे । गाढनिर्बन्धे—

**जगाद जगतीशस्तामनुजानाम्यदः प्रिये । ममैवौकसि गृह्णीषे भिक्षां दीक्षावती यदि ॥ १ ॥**

इति राज्ञो वचः स्वीकृत्य सा महामहेनार्णिकापुत्राचार्यान्तिके प्रव्रजिता । अन्यदा भाविदुर्भिक्षं श्रुतोपयोगाज्ज्ञात्वा सूरिर्गच्छं देशान्तरे प्रैषीत् । स्वयं वृद्धत्वात्तत्रैव तस्थौ । सा निर्दोषाहारेण गुरोरग्लानवृत्त्या वैयावृत्त्यं कुर्वाणा क्षपकश्रेण्यारोहात् केवलज्ञानं प्राप । तथापि गुरुवैयावृत्त्यान्न विरराम, प्रत्युत गुरोरभीष्टं समानीयार्पयति । सूरीन्दुस्तां जगौ—'त्वं मम मनोऽभीष्टं प्रत्यहं कथं वेत्सि ?' सा प्राह—'भगवन् ! यो यस्यान्तेवासी स तद्भावं किं न वेत्ति ?'। अन्यदाऽम्बुदे वर्षति सा पिंडं समानिन्ये ? तदा सूरिरूचे—'वत्से ! श्रुतज्ञासि किमेवंविधे वर्षति जलदे त्वयाहार आनीतः ?'। तयोक्तं—"यत्र प्रदेशेषु अप्कायोऽचित्तोऽस्ति, तेषु प्रदेशेषु यत्नान्मयानीतस्तस्मादयमशुद्धः" । गुरुराह—'त्वयाऽचित्तप्रदेशः कथं ज्ञायते ?' । तयोक्तं—'ज्ञानेन' । सूरिराह—'केन ज्ञानेन ? प्रतिपातिनाऽप्रतिपातिना वा ?' । साह—'पञ्चमज्ञानेन' । ततः सूरिः 'अहो मया केवल्याशातनाकृता' इत्युक्त्वा मिथ्यादुष्कृतं दत्वा तां साध्वीं पप्रच्छ—'अहं किं सेत्स्यामि न वेति' ? केवली प्राह—'गंगामुत्तरतां भवतां केवलं भावि' । इति निशम्य सूरिराट् जनैः सह गंगामुत्तरीतुं नावमारुरोह । यत्र यत्र सूरिर्न्यषीदत्, तत्र तत्र नौर्नमति । तदनु नौमध्येऽध्यासीने मुनौ सर्वापि नौर्मंक्तुं लग्ना । ततः सूरिर्लोकैर्जले क्षिप्तः । दुर्भगीकरणविराद्धया प्राग्भवपत्न्या व्यन्तरीभूतयाऽन्तर्जलं शूले निहितः । शूलाप्रोतोऽपि

'यद्रत्नमन्तःपुरे समुत्पद्यते तस्य कः स्वामी ?' । तैर्विज्ञप्तं—"सकलमंडलोत्पन्नस्य त्वमेव स्वामी, तर्हि किमन्तःपुरस्य । तस्य त्वमेव स्वामी । तस्यान्तःपुरोत्पन्नस्य रत्नस्य यत्किञ्चिद्राजा करोति, तत्सर्वेषां मान्यं"। एवं छलेन तेषामनुमतिं लात्वा प्रियया निषिद्धोऽपि तत्पुत्रपुत्रीमिथुनं मिथो व्यवाहयत् । तत्स्वरूपं वीक्ष्य तयोर्जननी वैराग्याद्व्रतं गृहीत्वा तपस्तप्त्वा स्वर्गे देवोऽभूत् ।

अन्येद्युः पुष्पकेतौ कथाशेषे पुष्पचूलो राज्यविषयेऽभूत् । पुष्पचूलया सह भोगान् बुभुजे । अहो विश्वे कामान्धः कार्याकार्यं न वेत्ति । पुष्पवतीजीवो देवोऽवधिज्ञानात् पुत्रपुत्र्योरकृत्यं ज्ञात्वा पुष्पचूलायै प्राक्प्रीतिवशात् स्वप्ने भयोत्पादकान्नरकान् दर्शयामास । सा तद्भयेन प्रबुद्धा पत्युः पुरः सर्वं न्यवेदयत् । ततो राजा बौद्धादीनाकार्य कीदृशा नरका भवन्तीति पप्रच्छ । केचिदाहुः—गर्भावासं, केचिद्गुप्तिवासं, दारिद्र्यं, पारतंत्र्यं च । राज्ञी तु बौद्धादिप्रोक्तं श्रुत्वा प्राह—'नैवंविधा नरकाः स्युः' । अथ भूपोऽर्णिकापुत्राचार्योपान्ते गत्वा नरकस्वरूपं पप्रच्छ । गुरुराह—"एग तिन्नि सत्त दस सत्तर अयर बावीस तित्तीसा । सत्तसु पुढवीसु ठिई, सत्तसुं खित्तजवेयणा" । राज्ञी यथास्थितं गुरूक्तं श्रुत्वाऽऽह—'अहो युष्माभिरपि किं तत्स्वप्नो दृष्टः ?' । गुरुराह—'हे भावुके ! वयं जिनागमाज्जानीमः' । पुष्पचूलाचष्ट—'भगवन् ! केन कर्मणा नरके गम्यते ?' । गुरुराह—'महारंभविषयादिभिर्नरकेषु पतन्ति जीवाः' । पुनर्निशायां स सुरस्तस्यै स्वर्गानदर्शयत् स्वप्ने । राज्ञा तथैव स्वर्गस्वरूपं पृष्टाः पाखंडिनः प्रोचुः—'चिन्तितं प्राप्यते यत्र, स एव स्वर्गः कथ्यते' । ततो गुरुभिः पृष्टैरुक्तं—"निर्जरा निरुपमसुखिनः सर्वालंकारधरा भवन्ति । बत्तीसट्ठावीसा० । सम्यग्गृहमुनिधर्मसेवनेन

## ॥ अथ षष्ठं व्याख्यानम् ॥

अथ सुज्ञातपरमार्थानामर्हन्मुनीनां पर्युपास्तिकरणरूपो द्वितीयभेदो विव्रीयते—

गीतार्थाः संयमैर्युक्ता ( संयमे रक्ता ) स्त्रिधा तेषां च सेवनम्।
द्वितीया सा भवेछ्रद्धा या बोधे पुष्टिकारिणी ॥ १ ॥

अस्याक्षरगमनिका—गीतं सूत्रमर्थस्तद्विचारस्तदुभयं विद्यते येषां ते गीतार्थाः। संयमः सर्वविरतिरूपः 'पञ्चाश्रवाद्विरमणं, पञ्चेन्द्रियनिग्रहः, चतुःकषायजयः, दंडत्रयविरति'श्चेति सप्तदशभेदः, तत्र रक्तास्तल्लीनमनसः। तेषां। चशब्दाज्ज्ञानिनां दर्शनिनामपि। 'त्रिधा' मनोवाक्कायैः 'सेवनं' विनयबहुमानपरिचरणं। अन्यथा वागुरिकनमनवन्निष्फलं। एतद्गुणयुक्ता सा द्वितीया श्रद्धा स्याद्यथार्थतत्त्वपरिज्ञाने पुष्टिकारिणी ज्ञेया। सा सम्यक्त्वं स्फटिकमिव स्वच्छं विधत्ते इति।

अत्रार्थे पुष्पचूलोदाहरणं—

गीतार्थसेवने सक्ता पुष्पचूला महासती। सर्वकर्मक्षयाल्लेभे केवलज्ञानमुज्ज्वलम् ॥ १ ॥

भरतक्षेत्रे पृथ्वीपुरे पुष्पकेतुर्भूपो बभूव। तस्य पुष्पवती प्रिया। तयोः पुष्पचूलापुष्पचूलाविति पुत्रीपुत्रौ युगमजातौ। तावन्योऽन्यप्रेमशालिनौ विरहे निधनं यातुकामौ ज्ञात्वा राजा दध्यौ—"एतौ पृथक् पृथक् विवाहितौ मिथो विरहज्वरातौ निधनं यास्यतः। अतोऽहमेनयोः परस्परं पाणिग्रहणं कारयामि"। इति विचिन्त्य मंत्रिपौरानाकार्य स प्राह—

स्वामी जगौ श्रेणिक तावकीनाः, सत्यः समस्ता अपि धर्मपत्न्यः ।
जगाद शीते निशि चेलणा तु, स्मृत्वा मुनिं तं भविता कथं सः ॥ १ ॥

निशम्येति पुरं प्रति सद्योऽधावत् । इतोऽभयो दध्यौ—'मम तातेन यदादिष्टं तत्कार्यं सहसा कृतं विषादाय भविष्यति' । इति विमृश्यान्तःपुरोपान्ते तृणगृहाण्युद्वसानि कृत्वाऽभयेन ज्वलितानि । ततः समवसरणाभिमुखं स निःससार । वर्त्मनि नृपोऽभयं दृष्ट्वा प्राह—'किं कृतं त्वया ?' । अभयोऽवक्—'त्वदुक्तं कृतं मया' । भूमीशो जगाद—'गच्छ पुरो मद्दृशोः, मुखं मा दर्शय, एवं कोऽविचार्य कृत्यं करोति' । तच्छ्रुत्वाऽभयः—'तातवाक्यं प्रमाणं' इत्युक्त्वाऽग्रतो गत्वा वीरपार्श्वे दीक्षां जग्राह । इतो भूपस्तत्र तृणकुटीरकाणि ज्वलितानि वीक्ष्य दध्यौ—'अहो ! अहं वाहितस्तेन छद्मना, तेन दीक्षा गृहीता भाविनी' । ततो मुष्टिं बद्ध्वा यावत्समवसरणे याति तावदभयं गृहीतव्रतं दृष्ट्वा प्राह श्रेणिकः—'त्वयाहं वाहितः' इत्युक्त्वा पदोः प्रणम्य क्षमयित्वा गृहे जगाम । अभयः प्रभुपादमूले तपस्तप्त्वा सर्वार्थसिद्धिं प्राप ।

इति यथाभय आर्हतधर्मभृत्, समकरोत्परमार्थसुसंस्तवम् ।
कुरुत तद्वदिमं यदि वः स्पृहा, शिववधूपरिरंभणकर्मणि ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ प्रथमस्तंभे पञ्चमं व्याख्यानम् ॥

अथ तं पुत्रं परिरभ्य नृपः प्राह—"यदाहं रुषा भवन्तं जल्पामि—आः पाप ! मत्पुरतो याहि, मुखं मा दर्शयेति तदा त्वं वत्स व्रतमाददीथाः" । ततोऽभयस्तातवाक्यं स्वीकृत्य भक्त्या भूपं निषेवते । अथैकदा दुर्द्धरशीतर्तुसमये श्रीवीरजिनो गुणशिलचैत्ये समवासार्षीत् । श्रेणिकस्तं परमेश्वरं नत्वा धर्मं श्रुत्वा चेलणादेवीयुतः पश्चाद्वले । वर्त्मनि नद्युपकंठे साधुमेकं कायोत्सर्गस्थितं शान्तं दान्तं नत्वाऽपराह्णे स्वगृहमाजगाम । तदनु रात्रौ वासवेश्मनि चेलणया सह रतिजं सौख्यं निषेव्य दोर्भ्यां परिरभ्य राजा सुप्तः । तदा देव्या हस्तो बहिराजगाम । तत्करे शीतेन व्यथिते सा विनिद्राऽभूत् । सीत्कारपरा सा तं करं संवृतिमध्ये द्राग् निनाय । तदा निरावृत्तं तं मुनिं स्मृत्वा प्राह—'अहो ! एवंविधे प्राणान्तकरे शीते पतति स कथमधुना भावी' । इदं प्रियावचः श्रेणिकोऽकस्माज्जागरितः श्रुत्वेदं दध्यौ—"मम प्रिया दुराचारिणी विद्यते । अस्या मत्तोऽप्यपरो नरो वल्लभो विद्यते । ततो नूनं दुःशीलेयं, तर्हि अन्या अपि दुःशीलाः ।

विभ्रदेष इति चेतसि रोषं, गोपतिर्गमयति स्म निशां ताम् ।
प्रायशो भवति वल्लभजानिर्नैर्ष्यया विरहितो विदुरोऽपि ॥ १ ॥

एवं ध्यायति राज्ञि सूर्य उदीयाय । प्रातराहूयाभयं प्रति जगौ 'इदं मदीयमन्तःपुरं दुराचारं विद्यते, तेनान्तःपुरं द्रुतं प्रज्वाल्यताम्' । तच्छ्रुत्वाभयोऽवक्—'तात ! तव वचनं प्रमाणं' । ततः श्रेणिको जिनपार्श्वे जगाम । श्रुत्वा धर्मं वीरं पप्रच्छ—'भगवन् ! चेटकपुत्रीयं किमेकपत्नी किं वाऽनेकपत्नी ?' ।

संझरागजलबब्बुउवमे, जीविए जलबिंदुचंचले। जुव्वणे नईयवेगसंनिभे, पावजीव किमियं न बुज्झसि ॥१॥
निःश्रेयससमं सौख्यं, संसारे क्वापि नास्त्यहो। अंगारदाहकस्यात्र, दृष्टान्तं श्रृणुताधुना ॥ २ ॥
इहैकांगारकृद्घातो, गृहीत्वांभोघटं वने । पीतं तेनांबु तत्सर्वं, तृष्णयार्तेन कुंभतः ॥ ३ ॥
उपर्यादित्यतापेन, पार्श्वेऽग्नेर्ज्वलनात्तथा । काष्ठकुट्टनखेदाच्च, पीडितस्तृषया पुनः ॥ ४ ॥
सोऽथ गाढं ततो मूर्छासुप्तः स्वप्ने तदा जलम् । सर्वगेहसरःकूपनदीह्रदसमुद्रजम् ॥ ५ ॥
सर्वं पपौ परं तस्य तृष्णा छिन्ना तथापि न । ततः परं जीर्णकूपे गृहीत्वा तृणपूलकम् ॥ ६ ॥
तेनाहृतं पयःशेषं पतदालेढि जिह्वया । न छिन्ना या समुद्रांभोभिः सा छेत्स्यति तेन किम् ॥ ७ ॥
तद्वदनेकस्वर्गादिसुखं प्राप्तमपि जर्जरितांगस्यापि जीवस्य तृप्त्यै न भवेदिति वैराग्यरूपवाण्या प्रबुद्धोऽयं दीक्षां जग्राह । अस्मिन्नेव भवेऽन्तिमराजर्षिरियं सर्वकर्मक्षयं कृत्वा मोक्षं गमिष्यति" । ततोऽभयः स्वगृहं गत्वा पितरं प्राह—"हे नाथ ! त्वदाज्ञयाहं प्रव्रज्यां गृह्णामि, त्वं कृपां कुरु, दीक्षां दापय । यतः—

पुण्योदयेन कृतिनं जनकं भवन्तं, देवं गुरुं च जिनराजमवाप्य वीरम् ।
दुष्कर्ममर्ममथनं यदि नाथ कुर्वे, मत्तस्ततः क इव तात परोऽस्ति मूढः ॥ १ ॥

नृपस्तमालिंग्य जगाद वत्स, कुतस्त्वमागा इह वा पुरेऽसि ।
प्रणम्य स प्राह समागतोऽस्मि, वेनातटाख्यान्नगरादिहाद्य ॥ १ ॥

राज्ञोक्तं—'त्वं कस्य पुत्रः' ?। तेनोक्तं—'अहं राज्ञः सुतः'। राज्ञोक्तं 'तत्र धनस्य सुतायाः स्वरूपं जानासि' ?। तेनोक्तं—"तस्याः पुत्रोऽजनि। तस्याभय इति नाम दत्तं। स रूपेण गुणेन वयैश्च मत्तुल्योऽस्ति। हे नाथ! मयि दृष्टे नूनं स एव दृष्टः। तेन सह ममातीव हितमस्ति। तेन विना क्षणमपि स्थातुं न शक्नोमि"। राजोवाच—'तर्हि तं मुक्त्वाऽत्र कथमायातः ?'। स प्राह—'तं तन्मातरं चाधुनाऽत्रोद्याने मुक्त्वागतोऽस्मि'। तत्र वने राजा गतः प्रियाया मिलितः। राज्ञोक्तं—'तदा यो गर्भोऽभूत् स क्वास्ति ?'। तयोक्तं—'अयमेव पुत्रः'। राज्ञोक्तं—'पुत्र! एवं कूटं किं जल्पितं ?'। अभयेनोक्तं—'अहं मातृहृदये सदा वसामि, तेनैवं प्रोक्तं'। ततो राज्ञाभयः स्वांके धृतः।

नृपोऽथ गत्वाभिमुखं प्रकृष्टानन्दात्सुनन्दां पुरमुत्पताकम्।
प्रवेशयामास चकार चैनं सुतं प्रधानं सचिवेषु तेषु ॥ १ ॥

ततो राजा तमभयं बुद्धिशालिनमग्रे कृत्वा भूरिशो देशान् साधयामास।
अथैकदा श्रीवीरसंसदि भूरिदेवदेवीसाधुसाध्वीसंकुलायां महर्षिमेकं शान्तं कृशगात्रं वीक्ष्य प्राहेत्यभयः-'भगवन्! कोऽयं यतिरेष साक्षाद्दृश्यते ?'। प्रभुः प्राह-"वीरपत्तनेशो नयवानुदायनो राजाऽयं मम वन्दनायागतः, तदा मया धर्मोपदेशो दत्तः-

हृष्टस्तं नृपतिर्दृष्ट्वा, हर्षाश्रुसलिलैः समम् । स्वर्णकुंभाम्बुना राज्ये, चाभ्यषिञ्चन्महामहम् ॥ १ ॥

स्वयं च तपोऽङ्गीचक्रे । क्रमात्त्रिविष्टपं प्राप । अन्येद्युः श्रेणिकेन परीक्ष्य परीक्ष्य एकोना पञ्चशती मंत्रिणां स्थापिता एकमिङ्गिताकारज्ञं वरं मंत्रिणं कर्तुकामः श्रेणिकः—

चिक्षेप कूपे विजले नृपः स्वामथोर्मिकामेवमघोषयच्च ।
आदास्यते कंठगतो य एतां, करेण तन्मंत्रिषु धुर्यताऽस्य ॥ १ ॥

ततः सर्वेऽपि मंत्र्यादयस्तत्रैत्य मुद्रां कर्षयितुमुपक्रमं चक्रुः । ते सर्वेऽपि तत्र खिन्नाः ।

इतः सुनन्दा पुत्रमसूत । तस्याऽभयकुमार इति नाम ददौ । वर्द्धितः क्रमाल्लेखशालायां मुक्तो दक्षतां गतः । अन्येद्युर्लेखशालकैः कलहं कुर्वन्निरुक्तम्—'अपितृकोऽयम्' । ततः खिन्नः पितृस्वरूपं पप्रच्छ मातरं । मात्रा प्रोक्तं—"न ज्ञायते, कोऽपि वैदेशिकः परिणीय गतः, परं भारपट्टकेऽक्षराणि लिखितानि सन्ति" । तद्वाचयित्वाऽभयः पितृस्वरूपं विज्ञाय सुनन्दामाह—'मम पिता राजगृहीस्वामी, तत्तत्र यामः । ततो मातामहमापृच्छ्य नन्दया सह नान्देयः स्वपुरोद्याने समागात् । स्वांबां तत्र मुक्त्वा कूपकंठे प्राप्तः । तत्र लोकैर्मुद्रास्वरूपमुक्तं । तच्छ्रुत्वा सस्मितः सन्नाह—'नैतद्दुष्करं' । इत्युक्त्वा कुमारेणादौ आर्द्रगोमयं मुद्रोपरि क्षिप्तं, तदुपरि पुनरग्निर्वह्निः क्षिप्तः । तदैव गोमयं शुष्कं जातं । ततो जलेन कूपं पूर्णीचकार । कूप आपूरिते मुद्राप्युपरि समायाता । नान्देयस्तरत्तद्गोमयं पाणिनाऽऽदात् । तच्छ्रुत्वा हृष्टो नृपस्तत्रैत्य तं वीक्ष्य भृशं मुमुदे । ततः—

ध्यात्वेति संवृत्य निजापणं स, निन्ये सहैव स्वगृहं कुमारम्।
स गौरवं गौरवभाजनस्य, तस्याथ चक्रे स्नपनाशनाद्यैः ॥ २ ॥

ततः श्रेष्ठी स्वपुत्रीं सुनन्दां समहोत्सवं श्रेणिकाय पर्यणाययत्। तया सह तस्य प्रीतिरजनि। सा क्रमाद्गर्भं बभार। श्रेणिकस्तस्या जिनपूजनगजारोहणहिंसात्यजनाद्यनेकदोहदानपूरयत्।

इतः प्रसेनजित् सुतवियोगेनातिदुःखितः कस्यचित्सार्थमुखात् बेनातटेऽस्तीति शुश्राव। ततः—

अन्तकृज्जातरोगेण विदन् मृत्युं समीपगम्। औष्ट्रिकानादिशत्तूर्णमानेतुं श्रेणिकं नृपः ॥ १ ॥

औष्ट्रिकेभ्यः संजातामयमात्मनः पितरं मत्वा प्रियां प्राह—"अहं पितुः पार्श्वे यास्यामि, त्वयाधुनात्रैव स्थातव्यं। यस्तव पुत्रो भावी तस्याभय इत्यभिधानं देयम्"। सा प्राह—"यदा पुत्रोऽष्टवर्षीयो भूत्वा प्रक्ष्यति मत्पिता कुत्रास्ति, तदा मया तस्य किं वाच्यं ?। ततो भंभासारः खटिकया भारपट्टेऽक्षराण्येवं लिलेख—'राजगृहे पाखिगाम गोवालि धोवले टोरू घर कहिया'। यतः—

गोपालकाः पांडुरकुड्यवन्तो, वयं पुरे राजगृहे वसामः।
आह्वानमंत्रप्रतिमानितीमान्, वर्णान् लिखित्वार्पयति स चास्यै ॥ १ ॥

ततः प्रियां प्रबोध्य राजगृहं गत्वा श्रेणिकः पितुर्मातुश्च पादयोरपतत्।

सुतानामशनाय पायसस्थालान्यार्पयत् । ततो भोक्तुं प्रवृत्तानामात्मजानामुपरि नृपः क्षुत्क्षामसारमेयानमोचयत् । तदा श्रेणिकं विनाऽन्ये कुमाराः खरंटितहस्ता आपतत्सु श्वसु क्षिप्रमुत्तस्थुः । श्रेणिकस्तु सहोदराणां भाजनानि शुनामभिमुखं चिक्षेप स्वयं च बुभुजे । राजा तद्वृत्तं निशम्य तेषां प्रशंसां चकार, श्रेणिकं च स्माह— 'धिक् त्वां, यच्छ्वभिः सह भुक्तं' । पुनः परीक्षायै खज्जकादिभृतमोदककरंडकान् मुद्रितान् जलकोरककुंभांश्चाङ्गजानां दत्वा प्राह—'भवद्भिरुद्घटनं विना पक्वान्नं भोज्यं जलं च पेयं' । विजने तान् बुभुक्षितान् वीक्ष्य श्रेणिकः करंडकान् धूनयित्वा धूनयित्वा शलाकान्तरनिर्गतचूर्णेन कुंभवेष्टितवस्त्राणि मर्दयित्वा मर्दयित्वा तद्गलितजलेन च कुमाराणां तृप्तिं चकार । तच्छ्रुत्वा राजाऽवक्—'यस्यैवंविधा धीः स रंक एव खज्जकचूर्णकरणात्' । एकदा राज्ञ एव गृहे प्रज्वलितेऽन्ये मणिमाणिक्यादीन् जगृहुः । श्रेणिकस्तु प्रथमं महीपतेर्जयचिह्नं भंभां जग्राह । तदा प्रसेनजित् तस्य भंभासार इत्यभिधां ददौ । ततः श्रेणिकं विनाऽन्येषां पृथक् पृथक् देशान् ददौ । तदपमानमासाद्य स्वपितुः पुरान्निर्गत्य क्रमेण वेनातटपत्तनं प्राप । तत्र प्रविश्य भद्राख्यश्रेष्ठिनो हट्टे प्रथममुपाविशत् । श्रेष्ठी तन्माहात्म्याद्बहुलधनमार्जयत् । तदा श्रेष्ठ्याह—हे पुण्यनिधे ! अद्य त्वं कस्यातिथिर्भवितासि ?' । स सस्मितं स्माह—

युष्माकमेवेति निशम्य तस्मादचिन्तयद्भद्र इदं हृदन्तः ।
स्वप्नेऽद्य योऽदर्शि मया सुताया, योग्यो वरो ह्येष समागतोऽयम् ॥ १ ॥

## ॥ अथ पञ्चमं व्याख्यानम् ॥ ५

अथैतत्सम्यक्त्वं श्रद्धानादिसम्यक्त्वसप्तषष्ट्या प्रकारैर्विशुद्धमवबुध्यते । अतः सम्यक्त्वसप्तषष्टिभेदान् वक्ष्ये । तत्र प्रथमं
चत्वारः श्रद्धानभेदास्तेष्वाद्यभेदः परमार्थसंस्तवस्वरूपमुच्यते—

**जीवाजीवादितत्त्वानां, सदादिसप्तभिः पदैः । शश्वत्तच्चिन्तनं चित्ते, सा श्रद्धा प्रथमा भवेत् ॥ १ ॥**

जीवन्ति प्राणान् धारयन्तीति जीवाः । तद्विलक्षणास्त्वजीवाः । आदिशब्दात् पुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षपरि-
ग्रहः । तेषां तत्त्वानां सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैः सप्तभिः स्थानैः । शश्वत् पुनः पुनः । तन्मनसि चिन्त-
नं पर्यालोचनं । सा सम्यक्त्वस्य श्रद्धा प्रथमा परमार्थसंस्तवाह्वा परमरहस्यपरिचयाख्या च भवेदिति ।
न चाङ्गारमर्दकादेरपि परमार्थसंस्तवादीनां संभवाद्व्यभिचारः, तात्त्विकानामेवैषामिहाधिकृतत्वात्, तस्य च तथावि-
धानामेषामसंभवादिति । अत्रार्थेऽभयस्योदन्तः प्रतन्यते—

**औत्पत्त्यादिधियां सद्म, अभयो मंत्रिणां वरः ( मन्त्रिणां प्रवरोऽभयः ) ।**
**तत्त्वपरिचयादाप, सर्वार्थसिद्धिकं सुखम् ॥ १ ॥**

राजगृहपुरे प्रसेनजित् राज्यं करोति स्म । तस्य श्रेणिकादिपुत्रशतमासीत् । एकदा राज्यार्हत्वपरीक्षार्थं नृपः

१ एषां तत्त्वानाम्.

महिषमारणं मा कृथाः' । सोऽप्यूचे—स्वामिन्! आजन्म प्रत्यहं समारब्धां पञ्चशतजीवहिंसां न जहामि। यतः—

शेषायुरधुना चेमं मुञ्चे प्राणिवधं न हि । तीर्त्वा दुस्तरमंभोधिं गोष्पदे को निमज्जति? ॥ १ ॥

तद्गिरा हास्यं प्राप्तो गोपस्तमन्धकूपेऽचिक्षिपत् । प्रातः प्रभुं नत्वा प्राह—'स्वामिन्मया महिषहिंसात्मको निषेधितः' । स्वाम्यभिदधे—'स पञ्चशतमहिषान्मृन्मयान् कूपे निर्माय निर्माय हिंसति' । तन्निशम्य जिनं प्राह—'नाथ! त्वां कृपानिधिं मुक्त्वा कं शरणं यामि?' । स्वाम्याह—"वत्स! मा विषीद! त्वं तु सम्यक्त्वमहिम्नागामितृतीयभवे मत्सदृशः पद्मनाभनामा जिनेन्द्रो भविष्यसि" । ( अत्र बहु वक्तव्यं, तत्तूपदेशकन्दलीतो ज्ञेयम् ) । इति जिनवाक्यं निशम्य सहर्षेण स्वपुर्यामागत्य धर्मकृत्यान्यकरोदिति । त्रिकालं जिनार्चां करोति। जिनस्य पुरतः प्रतिदिनमष्टोत्तरशतस्वर्णतंडुलैः स्वस्तिकं पूरयति। स्वयंभूरमणोदधिमत्स्यभक्षणनियममपि न लाति। एवंविधो ह्यविरतोऽपि श्रेणिकः क्षायिकसम्यक्त्वबलेन द्वासप्ततिवर्षायुः सप्तहस्तोच्चः श्रीवीरतुल्य एव प्रथमतीर्थकृद्भविष्यति ।

चतुर्युताशीतिसहस्रवर्षी, भुक्त्वायभूमौ नियतायुरेतत् ( पः ) ।
श्रीश्रेणिकः क्षायिकदर्शनास्सद्भावेन भावी किल तीर्थनाथः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ प्रथमस्तंभे क्षायिकसम्यक्त्वोपरि श्रीश्रेणिकनृपज्ञातं चतुर्थम् ।. ४

नरकं प्राप्स्यति, अतो मा जीव मा म्रियस्वेत्युक्तं"। श्रुत्वेति चकितो राजा जिनं नत्वाऽवोचत्—'मम नरकगतिवारणोपायं कथय'। प्रभुराह—'मिथ्यात्वेन पूर्वं बद्धमायुः भोक्तव्यमेव ( इति ) प्रतिक्रिया'। तथाप्यत्याग्रहवशान्नृपस्य विबोधनाय प्रभुरुवाच—"राजन्! यदि त्वं कपिलाकरेण यतिभ्यो दानं दापयेः, पंचशतजीववधं कुर्वन्तं सौकरिकं च निवारयेः तदा तव दुर्गतिर्न स्यात्"। इति निशम्य स्वपुरं प्रति समागच्छतो नृपस्य परीक्षार्थं दर्दुरांकः कैवर्तककर्मकारिणमेकं मुनिरूपमकरोत्। तं मत्स्यमांसाशनं कुर्वन्तं वीक्ष्य राजा व्याजहार—'भो भिक्षो! मुञ्चेदं दुष्कर्म'। स स्माह—'नाहमेतादृशः, किं तु वीरविनेयाः सर्व एतादृशा एव'। इदं निशम्य—'तवैवाभाग्यं, ते तु गंगावीचय इव पुण्यस्वरूपाः' इति निर्भर्त्स्य स्वपुरीं प्रविशन् यावकरसरञ्जितचरणां यथौचित्यं निहिताभरणां कज्जलनेत्रां तांबूलपूरितवक्त्रां सगर्भां श्रमणीरूपामेकां तन्वंगीमदीदृशत्। तां नृपोऽवोचत्—'हे भद्रे! किमिदं प्रवचनविरुद्धमाचरसि'?। सोचे—'नाहमेवंदृशी, किं तु सर्वा अपि श्रमण्य एतादृश्य एव सन्ति'। राजा प्राह—'रे पापिनि! तवैवाभाग्यं, येनेदृशं विरुद्धं नृपे' इति निर्भर्त्स्य पुरतश्चलन्तं नृपं दिव्यरूपभूषितसुपर्वा प्रणम्योचे—"हे मगधेश! धन्यस्त्वं, यथा शक्रेण प्रशंसितं तथैव तव दर्शनं स्वसीमानं जलधिरिव नामुचत्" इति संस्तुत्य हारं क्षौमयुग्मं च तस्मै वितीर्य सोऽमरस्तिरोदधे। राजापि स्वपुरे समागत्य कपिलामाहूय जगौ—"त्वं यतिभ्यो दानं प्रयच्छ'। सा प्राह—'मैवं मां कथय, त्वदादेशादग्नौ विशामि हालाहलं वा जिघत्सामि, न पुनरेतत्कृत्यं करोमि"। तां विमुच्य महीशः कालसौकरिकं जगाद—'त्वमेकमहोरात्रं

१ कैवर्तको मत्स्यग्राहकः

स्वकुष्ठरसाक्लिन्नं तृणादिकं छागाय (छागेन) भक्षणमकारयत्। एकदा स पुत्रादीन् प्राह—"अस्मत्कुलक्रमागतेयं वृत्तिः-यो वृद्धः स पुत्रादिभ्यश्छागामिषभोजनं दत्वा पश्चात्प्रव्रजति"। तैरप्यंगीकृतं। इति छद्मना स्वकुटुंबं कुष्ठदुष्टमयं विधाय निशि गृहान्निर्ययौ। वने भ्रमन्नानौषधिमूलधावनपानीयपानेन नीरुग् जातः। पश्चाद्गृहमागत्य विप्रः पुत्रान् प्रोचे-'पश्यत ममापमानफलमिदं कुष्ठं'। ज्ञातोदन्तैः पौरैर्निर्भर्त्सितो राजगृहमागत्य प्रतोलिदेशे स्थितः। तदा चात्र समवसृतस्य मम वन्दनायोत्सुको द्वारपालः सेडुकं तं तत्र विमुच्य समवसरणमगात्। सेडुकोऽपि तदैव पुरदेवीपुरो ढौकितं प्रभूतवटकपक्वान्नादि आकंठं भुक्त्वा तृषितो जलध्यानेन मृतः पूर्द्वारवाप्यां भेकोऽभूत्। अन्येद्युरस्मद्वन्दनौत्सुक्यभाजां पानीयहारिणीनां मुखादस्मदागमनमाकर्ण्य जातजातिस्मृतिरस्मद्वन्दनार्थं पथि प्लवमानः स दर्दुरस्तव तुरंगमपदेन समाहतोऽस्मद्ध्यानेन सौधर्मकल्पे दर्दुरांको देवोऽभवत्। सोऽयं देव इन्द्रकृतां तव सम्यक्त्वप्रशंसामश्रद्दधानस्त्वत्परीक्षार्थमत्राययौ। अनेन कुष्ठव्याजेन गोशीर्षेणास्मद्भक्तिः कृता"। इति निशम्य श्रेणिको जिनं पप्रच्छ-'भवन्यो म्रियस्वेति कथं प्रोक्तं'? अथ जिन आचचक्षे—"देवेन भक्तिरागेण प्रोक्तं-स्वामिंस्त्वमशेषकर्मक्षयेण स्वभावसुखं जात्यादिमुक्तं शिवं शीघ्रमुपेहि"। पुनर्नृपः प्राह—'मां चिरं जीवेति कथमुक्तं?'। स्वाम्याह—"त्वं त्वत्र जीवन् राज्यसौख्यान्यनुभवसि, मृतस्तु घोरं नरकं प्राप्स्यसि, इत्यभिप्रायेण स त्वामेवं जगाद। मंत्रिणं प्रति तु अत्र जीवन् बहुसौख्यान्यनुभवति, मृतस्तु लवसत्तमिकसुरो[1] भावीत्यतो जीव म्रियस्व वेति प्रोक्तं। कालसौकरिकं तु अत्र जीवन् शश्वदसौ पशुवधं करोति मृतस्तु

१ सर्वार्थसिद्धसुरः।

न सेणिओ आसि तया बहुस्सुओ, न वा य पन्नत्तिधरो न वायओ ।
सो आगमिस्साइ जिणो भविस्सई, समिक्ख पन्नाइ वरं खु दंसणं ॥ १ ॥

भावार्थस्तु प्रबन्धादवसेयः । स चायम्—

राजगृहे श्रीश्रेणिको राज्यं करोति । अन्यदा गुणशिलचैत्ये जगदेकनाथं त्रैशलेयं समवसृतं ससैन्यश्चेलणासखो वन्दनायागतः । जिनं प्रणम्योपविष्टे नृपे एकः कोऽपि कुष्ठी स्वकुष्ठरसेन भगवत्पादयोर्लेपं कुर्वाणोऽभूत् । तदयोग्यं वीक्ष्य राजा तदुपरि क्रुद्धमना अभवत् । तदैव स्वामिना क्षुते सति देवेनोक्तं 'म्रियस्वेति' । तथैव राज्ञा क्षुते 'चिरं जीव' । अभयेन क्षुते प्रोक्तं 'म्रियस्व मा वेति' । सूनाधिपेन क्षुते 'मा म्रियस्व मा जीव' एवं कुष्ठी जगाद । विभोः 'म्रियस्वेति' तेनोक्तां वाचं निशम्य दध्यौ—'अहो ! अस्य दुष्टता' । इति ध्यात्वा तन्मारणप्रेरितैः स्वचरै राजा विज्ञप्तः—'स्वामिन् । यदसौ देवो व्योममार्गं उत्पत्य क्वापि ययौ, वयं न विद्मः' । तदनु राज्ञा जिनः पृष्टः—'कोऽयं ? किमस्य चेष्टितं ?' । भगवानाह—"अयं कुष्ठी नरो न, किं तु असौ दर्दुरांकनाम देवः श्रीखंडेनास्मत्पूजां सृजन्नासीत्" । नृपः पुनः प्राह—'हे नाथ ! कथमयं सुरो बभूव ? तन्मम निवेदय' । अथ तीर्थपतिराह—

कौशांम्ब्यां पुरि सेडुको नाम द्विजः, शतानीकं नृपं सेवितवान् । अन्यदा तुष्टेन भूपेन तस्मै 'यथेच्छं मार्गय' इति वरो दत्तः । तेनापि पत्नीबुद्ध्या पुरे प्रतिगृहं सदीनारं भोजनं याचितं । राज्ञापि मनाग् विहस्य स्वीकृतं । स दक्षिणालोभतया पुनः पुनर्वान्त्वा भुञ्जन् कुष्ठ्यजनिष्ट । तदनु राज्ञा कुटुम्बेन चापमानं कृतं । तद्विज्ञाय क्रुद्धः स च्छागमेकमानाय्य

## ॥ चतुर्थं व्याख्यानम् ॥ ४ ॥

। अथैतत्सम्यग्दर्शनं ज्ञानचरणाभ्यामप्यधिकं प्रोक्तमित्युच्यते ।

श्लाघ्यं हि चरणज्ञानवियुक्तमपि दर्शनम् । न पुनर्ज्ञानचारित्रे मिथ्यात्वविषदूषिते ॥ १ ॥
ज्ञानचारित्रहीनोऽपि श्रूयते श्रेणिकः किल । सम्यग्दर्शनमाहात्म्यात्तीर्थकृत्त्वं प्रपत्स्यते ॥ २ ॥

सुगमौ । नवरं सम्यक्त्वत्रिकमध्ये केन दर्शनेन तीर्थकृत्पदमुपार्जितं जंभसारेण ? तदुच्यते—सम्यक्त्वं त्रिधा प्रोक्तं-औपशमिकं क्षायोपशमिकं क्षायिकं चेति । तत्रोपशमो भस्मच्छन्नाग्निवन्मिथ्यात्वमोहनीयस्यानन्तानुबन्धिनां चतुर्णामनुदयावस्थोपशमः प्रयोजनं (प्रवर्तकं) अस्येत्यौपशमिकम् । तच्चानादिमिथ्यादृष्टेः करणत्रयपूर्वकमान्तमौहूर्तिकं चतुर्गतिगतस्यापि जन्तोर्भवति । यद्वोपशमश्रेण्यारूढस्योपशान्तमोहे स्यात् । यदाहुर्जिनभद्रपादा महाभाष्ये—

उवसामगसेढिगयस्स होइ उवसामियं तु सम्मत्तं।जो वा अकयतिपुंजो अखवियमिच्छोलहइ सम्मं, ति

क्षयो मिथ्यात्वस्यानन्तानुबन्धिनां चोदितानां (देशतो) निर्मूलनाशः, अनुदितानां चोपशमः । क्षयेण युक्त उपशमः क्षयोपशमः, स प्रयोजनमस्येति क्षायोपशमिकं । एतस्य च स्थितिः षट्षष्टिसागरोपमाणि साधिकानि । क्षयो दर्शनसप्तकस्य निर्मूलनाशः । क्षयः प्रयोजनमस्येति क्षायिकं । तच्च साद्यनन्तमिति । एतदन्तिमदर्शनप्रभावतः श्रेणिकस्तीर्थकृन्नामकर्म बद्धवान् । यदुक्तमागमे—

हन्तुं न केनापि समर्थ्यते, तदा तदुपद्रवनिवारणायार्धचक्रिनृपाज्ञया स्वस्ववारके नृपाः स्थितिं कुर्वन्ति । अन्येद्युः प्रजापतिनृपस्य वारकोऽजवत् । तदा पितरं निषिध्य तत्र त्रिपृष्ठस्तदुपद्रवं रक्षितुं सारथियुतो रथमारुह्य ययौ । तेनालापितमात्रोऽसौ सिंहस्तं प्रत्यधावत् । तदा त्रिपृष्ठः शुक्तिसंपुटवत्तस्यौष्ठयामलं द्विधा कृत्वा सिंहमर्धमृतं चक्रे । ततः सिंहः स्वं निनिन्द—'हहा ! नृमात्रेणाहं हतः' । तदा मधुरवाचा सारथिस्तमसान्त्वयत्—"हे सिंह ! वासुदेवोऽयं जविता । रंकमात्रमिमं मा जानीहि । पुरुषेन्द्रस्य हस्तेन मृतश्चेत् किं विषीदसि ? । मर्त्यलोकेऽयमेव सिंहोऽस्ति, जवान् पुनस्तिर्यग्योनौ"। इति वाक्येन हृष्टः सिंहः समाधिना निमीलनं प्राप्तः। ततस्ते त्रयोऽपि जवांजोधौ ज्रामं ज्रामं क्रमादत्राजवन् । यस्त्रिपृष्ठजीवः सोऽहं जातः, सिंहजीवस्तु कृषीवलो जातः, सारथेर्जीवस्तु जवानिन्द्रजूतिर्जातः । पुरा मधुरया वाचा त्वयासौ प्रीणितो मया च हतः । तदत्र जवनाटके स्नेहवैरयोः कारणं ज्ञेयम् । परं त्वयं शुक्लपाक्षिको जातः । यतः—

जेसिमवड्ढो पुग्गलपरिअट्टो सेसजंअ संसारो । ते सुक्कपक्खिया खलु, अहिए पुण कण्हपक्खीउ ॥१॥

इति श्रुत्वाऽनेके जीवाः सम्यक्त्वमंगीचक्रुः ।

यास्यत्येष हली तु पुद्गलपरावर्तार्धमध्ये शिवं, त्वत्तो दर्शनमाप्तवान् द्विघटिकं तेनोद्यमः कारितः ।
श्रुत्वेन्द्रप्रमुखा इति व्यतिकरं जाता दृढा दर्शने, तद्भो जव्यजना जवद्भिरपि तच्चित्ते स्थिरं स्थाप्यताम् १

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ द्वात्रिकस्य प्रबन्धस्तृतीयः ॥ ३ ॥

तस्मात्तपस्यापोतमादाय भवोदधेः समुत्तर इति सद्वाक्यपीयूषैः सिक्तस्तं जगौ—"स्वामिन् ! अहं विप्रः सप्तकन्यकादीनां दुष्पूरोदरपूर्त्यर्थमनेकपापकर्माणि करोमि । अतः परं त्वमेव मम भ्राता माता चासि । यदादिशसि तत्कुर्वे, नान्यथा पूज्यवचः करिष्ये" । ततः सोऽपि तदर्पितं साधुवेषं स्वीचक्रे । गृहीतव्रतं तं सहादाय गौतमो जिनाभिमुखं चचाल । तदा सोऽवदत्—'पूज्य ! कुत्र गम्यते ? गौतमोऽवक्—'यत्र मे गुरवः सन्ति तत्र' । सोऽवादीत्—'सुरासुरपूज्यानां भवतामपि पूज्यास्ते तु कीदृशा भविष्यन्ति ?' । तदा तस्याग्रेऽर्हद्गुणाः प्रोक्ताः । तच्छ्रुत्वा तेन सम्यक्त्वमार्जितं, पुनर्जिनसमृद्ध्यवलोकनाद्विशेषेण प्राप्तं । ततो क्रमेण सपरिच्छदं श्रीवीरं यावद्द्राक्षीत्तावत्तस्य मनसि द्वेषः समभूत् । गौतमः प्राह—'भो मुने ! श्रीवीरं वन्दस्व' । सोऽपि गणधरं प्रत्याह—"भवदीयोऽयं गुरुश्चेत्तदा मम प्रव्रज्यायाः प्रयोजनं नास्ति, तव शिष्यत्वभवनेनालं, इमं वेषं गृहाण, अहं स्वमन्दिरे यास्यामि" । इत्युक्त्वा यदा त्यक्तवेषोऽसौ मुष्टिं बद्ध्वा प्रणष्टवान्, तदा तादृक् तस्य चेष्टितं वीक्ष्य सर्वेऽपीन्द्राद्या हसन्तः प्राहुः—'अहो ! इन्द्रभूतिना वरीयान् शिष्य उपार्जितः । एतदद्भुतं वीक्ष्य मनाग् लज्जितमना गौतमो वीरं तद्वैरकारणं पप्रच्छ । स्वामी तं प्रत्याह—"हे वत्स ! अनेनार्हद्गुणचिन्तनैर्ग्रन्थिभेदः कृतः । तेन तस्य तव च महान् लाभोऽभूत् । यन्मां वीक्ष्यास्य द्वेषो जातस्तत्स्वरूपं शृणु—

पुरा पोतनपुरे प्रजापतिनृपाङ्गजस्त्रिपृष्ठाख्यो वासुदेवोऽहमभवम्, तदा त्रिखण्डाधिपः प्रत्यर्धचक्री अश्वग्रीवाह्वोऽभूत् । अन्यदा स्वसंसदि तेन स्वनिमीलनं निमित्तज्ञं प्रति पृष्टं । सोऽपि त्रिपृष्ठहस्तात् त्वन्मृत्युर्भावीत्यब्रवीत् । ततोऽन्वहं स त्रिपृष्ठस्योपरि द्वेषं वहन् मारणोपायांश्चक्रे । ते तु विफला जज्ञिरे । अन्यदा तत्पुरो वने शालिक्षेत्रमनुष्येपूपद्रवं कुर्वन्तं सिंहं

जा गंठी ता पढमं, गंठिं समइच्छठ नवे वीयं । अनियट्टीकरणं पुण, संमत्तपुरक्खडे जीवे ॥ १ ॥

सम्यक्त्वं पुरस्कृतं येन तस्मिन्नासन्नसम्यक्त्वे जीवेऽनिवृत्तिकरणं नवतीत्यर्थः। अत्र मिथ्यात्वस्य स्थितिद्वयं नवति । प्रथमामन्तर्मुहूर्तस्थितिं नुक्त्वा द्वितीयोपशमितायामन्तरकरणप्रथमसमय एव सम्यक्त्वं प्राप्नोति । यतः—

आन्तर्मौहूर्तिकं सम्यग्दर्शनं प्राप्नुवन्ति यत् । निसर्गहेतुकमिदं सम्यक्श्रद्धानमुच्यते ॥ १ ॥
गुरूपदेशमालंव्य प्रादुर्नवति देहिनाम् । यत्तु सम्यक्श्रद्धानं तत्स्यादधिगमजं परम् ॥ २ ॥

अत्राधिगमसम्यक्त्वार्थे कृषीवलस्य दृष्टान्तः संप्रदायागतोऽयम्—

वलादपि श्राद्धजनस्य दीयते, सद्दर्शनं सर्वसुखैकजन्मनूः ( नूमिः ) ॥
व्यदीधपद्वीरजिनस्तदुद्यमं, श्रीगौतमेनापि न किं कृषीवले ? ॥ १ ॥

एकदा जंगमः कल्पतरुरिव मार्गे विहारं कुर्वन्महावीरजिनो गौतमं प्रत्युवाच—"हे वत्स ! योऽयं कृषीवलः पुरस्तात् प्रेक्ष्यते, तस्य प्रतिवोधाय त्वं सत्वरं तत्र गच्छ, त्वत्तो महानस्य लान्नो नावी"। तथेति प्रतिपद्य गौतमस्तत्रागत्येत्यलपत्– "हे नद्र ! तव समाधिर्वर्तते ? त्वं कस्मादनेकद्वीन्द्रियादिजीवानां ( विराधनामयेन ) कृषिकर्मणा मुधा पापानि करोषि ? कथं पापकुटुम्बार्थमात्माऽनर्थे निपात्यते ?। यतः—

संसारमावन्न परस्स अठ्ठा, साहारणं जं च करेइ कम्मं ।
कम्मस्स ते तस्स उ वेयकाले, न वंधवा वंधवयं उविंति ॥ १ ॥

## । तृतीयं व्याख्यानम् ।

अथैतत्सम्यग्दर्शनं द्विहेतुकं भवतीत्याह—

**तीर्थकृत्प्रोक्ततत्त्वेषु, रुचिः सम्यक्त्वमुच्यते । लभ्यते तत्स्वभावेन, गुरूपदेशतोऽथवा ॥ १ ॥**

तीर्थकृत्प्रोक्तानि तत्त्वानि नवविधानि तेषु या रुचिस्तत्सम्यक्त्वं सम्यक्श्रद्धानं। न हि ज्ञानेनैव रुचिं विना फलसिद्धिः। तत्त्वज्ञैरपि रुचिं विना हितलक्षणं फलं नाप्यते । श्रुतज्ञानधृतोऽप्यङ्गारमर्दकादेरभव्यस्य दूरभव्यस्य वा निष्कारणजगदेकवत्सलोक्ततत्त्वेषु रुचिरहितस्य न विवक्षितं फलमुपश्रूयते। तस्य चोत्पादे द्वयी गतिः—स्वभावो गुरूपदेशश्च । स्वभावो निसर्गो गुरूपदेशादिनिरपेक्षस्तेन । अथवा गुरुधर्मोपदेशेन–अधिगमेन । तथाहि—अनादिसंसारसागरमध्यासीनो जन्तुर्भव्यत्वपरिपाकवशतो गिरिसरिदुपलघोलनाकल्पेनानाभोगनिर्वर्तितयथाप्रवृत्तिकरणेनाध्यवसायविशेषरूपेणायुर्वर्जानि ज्ञानावरणीयादीनि कर्माणि पल्योपमासंख्येयभागन्यूनैकसागरोपमकोटिकोटिस्थितिकानि करोति । अत्र चान्तरे जीवस्य कर्मजन्यघनरागद्वेषपरिणामः कर्कशदुर्भेद्यो ग्रन्थिर्भवति। इमं च ग्रन्थिं यावदभव्या अप्यनन्तशः समागच्छन्ति । अभव्यस्याप्येतत्करणतो ग्रन्थिमासाद्यार्हदादिविभूतिदर्शनतः प्रवर्तमानस्य ( द्रव्यतः ) श्रुतसामायिकलाभः स्यात्, न शेषलाभ इति। एतदनन्तरं कश्चिद्भव्यः परमशुद्ध्या ग्रन्थेर्भेदरूपमपूर्वकरणं विधाय मिथ्यात्वस्थितेरन्तर्मुहूर्तकालप्रमाणं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति । एषामयं क्रमः—

इत्यादि ज्ञेयम् । से किं तं अहाउणिवत्तिकालोअ ? अहाउणिवत्तिकालोअ जेणं णेरइएण वा देवेण वा जहाउयं णिवत्तियं से त्तं आहाउणिवत्तिकालो । से किं तं मरणकाले ? मरणकाले जीवो वा सरीराउ सरीरं वा जीवातो ( निप्फिडइ ) से त्तं मरणकाले । से किं तं अद्धाकाले ? । अद्धाकाले अणेगविहे पन्नत्ते से णं समयट्ठताइं आवलियट्ठताए जाव उस्सप्पिणीयट्ठताए" । इत्यादि श्रुत्वा स उवाच—'स्वामिन् ! पल्योपमसागरोपमादीनां कथं क्षयो भवति ?' । स्वाम्याह—"सुदर्शन ! पुरा त्वयाऽयं कालोऽनुभूतोऽस्ति । प्राग्भवे ब्रह्मकल्पे त्वं दशसागरस्थितिको देवोऽभूः" । इति प्राग्भवस्वरूपं श्रुत्वा जातवैराग्यः सुदर्शनः स्वामिपार्श्वे संयमं जग्राह संजातप्रत्ययः पुनरपि गृहीतव्रतः चतुर्दशपूर्वी भूत्वा कर्मक्षयेण केवलज्ञानं संप्राप्य परमानन्दपदमगमदिति ।

देवादितत्त्वेषु यथार्थबोधा, भवन्ति येषां सुरधेनुतुल्याः ।
तेषां समृद्धिस्तु भवेद्यथाऽभूत्, सद्दर्शनाद्भूपमहाबलस्य ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ प्रथमस्तंभे सम्यक्त्वशुभफलोदयान्वितस्य महाबलस्योदन्तो द्वितीयः ॥ २

स्नेहेन तमेकदिनं स्वराज्यास्पदे संस्थाप्याष्टोत्तरशतस्वर्णताररत्नमृन्मयादिकलशैरभिषिच्य स्वयं प्राह–'हे वत्स ! अथ किं कुर्मः ?' । सोऽप्याह––"तात ! मत्कृते स्वर्णलक्षत्रयं कोशादानीय कुत्रिकापणत एकेन लक्षेण [1]पतद्ग्रहमेकेन रजोहरणं चत्वार्यङ्गुलानि मुक्त्वाग्रकेशकर्तनायैकलक्षदानेन [2]काश्यपं च समानय" । ततस्तेनापि सत्वरं तथा कृतम् । ततो दिव्यचन्दनाभरणभूपिताङ्गः सहस्रनरवाह्यां शिबिकामारूढो गुरोः पार्श्वे प्राप । तदा पितरौ 'हे वत्स ! त्वयास्मिन् चारित्रे भृशं यत्नः कार्यः' इत्युक्त्वा सूरिं प्रणम्य स्वपुरं गतौ । ततो महाबलः स्वयं पञ्चमुष्टिकं लोचं कृत्वा गुरुहस्तेन दीक्षां जग्राह । ततो महाबलर्षिस्त्रिगुप्तः पञ्चसमितो विनयेन चतुर्दशापि पूर्वाणि पपाठ। विविधैस्तपोभिर्द्वादश वत्सराणि यावत् संयमं प्रपाल्यघमालोच्य प्रतिक्रम्य मासानशनतो ब्रह्मलोके दशसागरोपमसंस्थितिः सुरोऽभवत् ।

पञ्चमकल्पगमनं त्वस्य केनापि विस्मरणादिना चतुर्दशपूर्वाणां न्यूनत्वहेतुना संभाव्यते । अन्यथा चतुर्दशपूर्विणो जघन्यतोऽपि लान्तके उत्पादः स्यात् । ततश्च्युत्वा वाणिजग्रामे महति श्रेष्ठिकुले सुदर्शननामा सुतो जातः । प्राप्तप्रौढावस्थः सुदर्शनश्रेष्ठी एकदा तत्पुरोद्याने श्रीवीरजिनभगवत्पादपद्मवन्दनायागतः । तदा स्वामी पर्षदि सर्वजीवहितार्थं समयादिकालस्वरूपं प्ररूपयति । तच्छ्रुत्वा विस्मितः श्रेष्ठी प्राह—'स्वामिन् ! कतिविधाः कालाः ?' । अत्र भगवदुक्त आलापकोऽयम्—"सुदंसणा ! चउविहे काले पन्नत्ते । तं जहा–पमाणकाले, अहाउणिवत्तिकाले, मरणकाले, अद्धाकाले । से किं तं पमाणकाले ? । पमाणकाले दुविहे पन्नत्ते, तं जहा–चउपोरसिए दिवसे चउपोरसिया राई भवइ"

---

१ पात्राणि. २ नापितम्.

अन्यदा विमलनाथसन्तानीयधर्मघोषसूरीशं सर्वर्ध्या महाबलो गत्वा नत्वा देशनां पञ्चशतमुनीशोक्तां शुश्राव । यथा—

असारमेव संसारस्वरूपमिति चेतसि । विज्ञाय शिवदे धर्मे, यत्नं कुरुत हे जनाः ॥ १ ॥

सर्वेषां धर्मकृत्यानां, मूलं सम्यक्त्वमुच्यते । तच्च देवगुरु(देवे गुरौ) तत्त्वे,सम्यक्श्रद्धानतो भवेत्[२]

व्रतानि दानानि जिनार्चनानि, क्रियाजपध्यानतपांसि सर्वम्[१] ।

शास्त्राणि तीर्थानि गुणार्जनानि, सम्यक्त्वसेवासहितं शिवाय ॥ ३ ॥

इति गुरोर्वाणीमाकर्ण्य महाबलः प्राह—"भगवन् ! अर्हदुक्तं मार्गमहं मुदा श्रद्दधे । अतः पितरावापृच्छ्य भवदीयप्रव्रज्यां गृहीष्यामि" । सूरिभिः प्रोचे—'वत्स ! धर्मे प्रतिबन्धं मा कुरु' । ततो निजावासे गत्वा पितरौ प्रणम्य स ब्रूते—'युवयोरनुज्ञया सूरीशसन्निधौ प्रव्रज्यां गृह्णामि' । तच्छ्रुत्वा माता महाबलं प्रति प्रोचे—"हे वत्स ! त्वं त्वा (तावदा ) वयोः प्राणप्रियत्वात् त्वद्वियोगं क्षणमपि नेच्छावः । तदेवं मा वद । वत्स ! यावदावां जीवावस्तावत्त्वं निजगृहे तिष्ठ" । इति श्रुत्वा कुमारः स्वाम्बामुवाच—"हे मातः ! न जाने को जनः पूर्वं पश्चाद्वा मृतिमेष्यति । तस्मान्ममानुज्ञां प्रदेहि । यत्त्वत्कुक्षिलब्धजन्मफलं साधयामि । यथा प्रागनन्तभवे प्राप्तजनन्योऽनुस्वारनिभा जातास्तथा त्वं मा भवः शुभाङ्क इव सान्वर्था भव" । इत्याद्युक्त्वा तस्याग्रहं त्याजयितुमक्षमौ पितरौ अञ्जसा तद्दासभावं भेजतुः । ततो नृपति,

१ सर्वमित्यस्य सहितमित्यनेन सह संबन्धं कृत्वा व्याख्या कर्तव्या ( क्रियाविशेषणे द्वितीया )

## ॥ द्वितीयं व्याख्यानम् ॥ २ ॥

इहादौ सर्वसंपन्निधानं सर्वगुणप्रधानं समस्तधर्मकृत्यानां निदानं सम्यग्दर्शनमाह—

**देवत्वधीर्जिनेष्वेव, मुमुक्षुषु गुरुत्वधीः । धर्मधीरर्हतां धर्मे, तत्स्यात्सम्यक्त्वदर्शनम् ॥ १ ॥**

'जिनाः' रागद्वेषजेतृत्वाज्जिना नामाकृतिद्रव्यभावभेदभिन्नास्तेष्वेव देवत्वबुद्धिः । भवादात्मानं मोक्तुमिच्छन्तीति मुमुक्षन्ति, मुमुक्षन्तीति मुमुक्षवः, तेषु । गुरुत्वमिति बुद्धिः । तथेति शेषः । अर्हतां जिनानां धर्मे—दुर्गतिपतज्जन्तून् धारयतीति धर्मस्तत्र धर्मत्वप्रतिभेति ( धर्मतया ) रुचिः । तत्सम्यक्त्वदर्शनं स्यात् । यद्यपि दर्शनशब्देन विलोचनविलोकनाद्युच्यते, तथापीह शास्त्रे संशयादिरहितं सम्यग्देवादित्रितयतत्त्वज्ञानं दर्शनमोहनीयकर्मोपशमादिना जातार्हदुक्तश्रद्धानरूपं सद्भावविशेषमेव दर्शनमिति तात्पर्यार्थः । अत्रोक्तमर्थं महाबलज्ञातेन दृढीक्रियते—

हस्तिनापुरे बलनामा नृपः । तस्य प्रभावती राज्ञी । तस्या मृगपतिस्वप्नसूचितो महाबल इति तनयोऽभवत् । क्रमेण स यौवनं प्राप । पित्रा भोगसमर्थो ज्ञात्वा एकस्मिन्नेव दिनेऽष्टाभिः राजवरकन्याभिः सह स परिणायितः । सुतहेतवे च हेममया अष्टौ प्रासादा अकार्यन्त । ततस्तस्य पिता प्रेम्णा दानं ददाति । तत्पञ्चमांगसूत्रतो ज्ञेयम्—"अट्ठ हिरण्णकोडीओ अट्ठ सुवन्नकोडीओ, अट्ठ मउडे, अट्ठ कुंडलजुयले, अट्ठ णंदाइ, अट्ठ भद्दासणाइ सद्ध रयणाइ" इत्यादिप्रचुरवस्तूनि ( तासां भोगार्थं ददौ । ) ततस्ताभिः सह स कुमारः सुखं भुंक्ते ।

रपि परं स्वर्गापवर्गसौख्यावाप्तिः, अपरं तु शास्त्रतत्त्वावबोधः । यत एवंविधं शास्त्रं प्रेक्षावत्प्रवर्तकं स्यादिति । अत्राद्यश्लोके श्रीमज्जिनस्यातिशयाश्रि ( न्वि ) तमिति विशेषणं प्रोक्तं । तस्य वर्णनं विशेषतो वृत्तिकृता कृतं तद् आद्यमंगलत्वात् सर्वविघ्नविनाशकत्वाच्च सर्वश्रेयसां निबन्धनत्वाच्चेति ।

इति सदतिशयसमृद्धिं, प्रतिप्रज्ञातं जिनाधिनाथानाम् ।
ये स्मरन्ति मनुजास्ते स्युः श्रेयोभिराढ्यतमाः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ प्रथमस्तंभे जिननमस्कारकरणातिशयवर्णनरूपमागद्यमाख्यानं प्रथममाहितम् ॥ १ ॥

एवं सिद्धान्तवचनानि श्रुत्वाऽपरे सहृदयंमन्या उत्तरयन्ति—'यत्र व्रतिनस्तिष्ठन्ति, न तत्र देशे देवाः पुष्पाणि किरन्तीति'। एतदप्युत्तराभासं, न खलु तपोधनैः काष्ठीभूतावस्थामालंब्य तत्रैव देशेऽवश्यं स्थातव्यं, प्रयोजने गमनागमनादेरपि तत्र संभवादिति। तस्मान्निखिलगीतार्थसंमतमिदमुत्तरमत्र दीयते—यथैकयोजनमात्रायां समवसरणधरणावपरिमितसुरासुरादिलोकसंमर्देऽपि न परस्परमाबाधा काचित् तथा तेषामाजानुप्रमाणक्षिप्तानां कुसुमसमूहानामप्युपरि सञ्चरिष्णौ मुनिनिकरे विविधजननिचये च न काचिदाबाधा, प्रत्युत सुधारससिच्यमानानामिव बहुतरः समुल्लासस्तेषामापनीपद्यते, अचिन्तनीयनिरुपमतीर्थंकरप्रभावोज्जृम्भणप्र (माणप्र) सादादेव इति षोडशः। तथा शिरोजानां, उपलक्षणत्वात्कूर्चस्य पाणिपादजानां नखानां च वृद्धिर्न स्यादिति सप्तदशः। तथा भगवत्पार्श्वदेशे भवनपत्यादिचतुर्विधदेवनिकायानां जघन्यतोऽपि कोटिर्भवतीत्यष्टादशः। तथा ऋतूनां वसन्तादीनां सर्वदा कुसुमादिसामग्रीभिर्मनोज्ञानां प्रादुर्भावेनानुकूल्यं भवतीत्येकोनविंशतितमः। सर्वेऽपि संमिलिताः सन्तश्चतुस्त्रिंशत्संख्या भवन्ति। इह च यत्समवायांगेन सह किंचिदन्यथात्वमपि दृश्यते, तन्मतान्तरमवगन्तव्यं। मतान्तरबीजानि तु सर्वज्ञविज्ञेयानीति। अतिशयैराश्रितं षोडशं विश्वसेनपार्थिवकुलतिलकमचिराकुक्षिशुक्तिमुक्ताफलं श्रीशान्तिनाथस्वामिनं, नमस्कृत्य—उपहासपरिहारेण त्रिकरणविशुद्ध्या प्रणम्य, अनेकग्रन्थानुसारेण प्रतिपादयिष्यामि। तथा चात्र शास्त्रे संबन्धो वाच्यवाचकलक्षणः। तत्र वाच्यः प्रकरणार्थः, वाचकं प्रकरणं। अभिधेयः सदानुयोगा (ज्या) र्हद्धर्मोपदेशनिरूपणम्। प्रयोजनं द्विधा—प्रकरण (स्य)-कर्तुः श्रोतुश्च। तदपि द्विधा—परमपरं च। तत्र कर्तुः परं परमपदसंपदवाप्तिः, अपरं च भव्यजनप्रबोधानुग्रहः। श्रोतु-

तोऽत्रापि केवलो द्वादशगुण एव । स तु सप्तहस्तमानश्रीमहावीरशरीरद्वादशगुणीकृतः सन्नेकविंशतिर्धनूंषि भवन्ति । शालवृक्षोऽप्येकादशधनुष्प्रमाणः, ततो मिलितानि द्वात्रिंशद्धनूंषि युज्यन्ते इति प्रवचनोद्धारवृत्तौ" इति नवमः । तथा यत्र यत्र भगवन्तो विहरन्ति तत्र तत्राधोमुखाः कंटकाः संपद्यन्त इति दशमः । तथा यत्र भगवन्तोऽभिव्रजन्ति तत्र वृक्षाः—पादपाः प्रणमन्ति—नम्रा भवन्ति इत्येकादशः । तथा यत्र भगवन्तः सलीलं संचरन्ति तत्र दुन्दुभिध्वनयो वाद्यन्त इति द्वादशः । तथा पवनः—संवर्तकवातो योजनं यावत् क्षेत्रशुद्धिविधायकत्वेन सुरभिशीतलमन्दत्वेन चानुकूलः—सुखदो भवति । यदुक्तं समवायांगे "सीयलेणं सुहफासेणं सुरभिणा मारुएणं जोयणपरिमंडलं सव्वओ समंता पमज्जिज्जइ त्ति" इति त्रयोदशः । तथा यत्र जगद्गुरवः संचरन्ति तत्र चापशिखंडिप्रभृतयः पतत्रिणः शकुनाश्च प्रदक्षिणां ददतीति चतुर्दशः । तथा यत्रार्हन्तस्तिष्ठन्ति तत्र पांसुप्रसरशमनार्थं गन्धोदकवृष्टिर्घनसारादिमिश्रिता स्यादिति पञ्चदशः । तथा पञ्चवर्णानां चंपकादीनां जानूत्सेधप्रमाणानां कुसुमानां वृष्टिः स्यात् । अत्र केचन प्रेरयन्ति—"ननु विकचकान्तकुसुमप्रचयनिचितायामायोजनसमवसरणभुवि जीवदयारसिकान्तःकरणानां श्रमणानां कथमवस्थानगमनागमनादिकं कर्तुं युज्यते, जीवविघातहेतुत्वात् इति" । अत्र केचिदुत्तरयन्ति—'तानि कुसुमानि सचित्तान्येव न भवन्ति, वैक्रियाण्येव देवैस्तेषां विहितत्वादिति' एतच्चायुक्तम्, यतो न तत्र विकुर्वितान्येव पुष्पाणि भवन्ति, जलजस्थलजानामपि कुसुमानां संभवात् । न चैतदनार्षम्—

"विंटट्ठाइं वि सुरभि, जलथलयं दिव्वकुसुमनीहारिं । पकिरंति समंतेणं, दसद्धवन्नं कुसुमवासं ॥१॥"

पेक्षयाऽतिमहत्त्वादिन्द्रध्वजो धर्मध्वजः स्यादिति पञ्चमः, एतानि पञ्चापि यत्र यत्र जगद्गुरुर्विचरति तत्र तत्र गगनगतानि गच्छन्ति । तथा नव कनकपद्मानि नवनीतस्पर्शानि क्रियन्ते तत्र च भगवान् द्वयोः स्वकीयक्रमकमलयुगलं विरचय्य विचरति, अन्यानि च सप्त पृष्ठतस्तिष्ठन्ति, तेषां च यद्यत् पश्चिमं तत्तत् पादन्यासं कुर्वतो भगवतः पुरो भवतीति षष्ठः। तथा समवसरणे मणिकाञ्चनतारैरचितशालत्रिकं तत्र तीर्थंकरप्रत्यासन्नः प्रथमः प्राकारो नानाप्रकारनिष्पन्नरत्नमयो वैमानिकसुरैर्विरच्यते, द्वितीयो मध्यवर्ती कनकमयो ज्योतिष्कविबुधैर्विधीयते, तृतीयस्तु बहिर्भूतो रजतमयो भुवनपतिदेवैर्वितन्यते इति सप्तमः । तथा चतुर्मुखं—चतुर्दिक्षु मूर्तिचतुष्कं । तत्र पूर्वाभिमुखं भगवान् स्वयमुपविशति, शेषासु तिसृषु दिक्षु प्रतिरूपकाणि तीर्थकृत्प्रभावादेव तीर्थकररूपाणि सिंहासनादियुक्तानि देवकृतानि भवन्तीति । शेषदेवादीनामपि अस्माकं स्वयं ( प्रभुः ) कथयतीति प्रतिपत्त्यर्थमित्यष्टमः । तथा यत्र प्रभुस्तिष्ठति तत्राशोकतरुर्जिनस्योपरि देवैर्वितन्यते । कियत्परिमाणः ? ऋषभादीनां पार्श्वनाथपर्यन्तानां त्रयोविंशतेरपि तीर्थकृतां निजनिजशरीरमानात् द्वादशगुणः । वैशलेयस्य च द्वात्रिंशद्धनुरुच्छ्रितः । यदुक्तम्—

"उसभस्स तिन्नि गाउय, बत्तीस धणुणि वद्धमाणस्स।सेसजिणाणमसोओ, सरीरओ बारसगुणो अ॥१॥"

अत्राह—"ननु श्रीवीरसमवसरणप्रस्तावे आवश्यकचूर्णौ यत्प्रोक्तं 'असोगवरपायवं जिणउच्चताओ बारसगुणं सक्को विउव्वइ त्ति' कथमिदमुपपद्यते ?" । अत्रोच्यते—"केवलस्यैवाशोकतरोस्तत्र मानमुक्तं, इह तु शालवृक्षसहितस्य । त-

२ तारं रूप्यं । ३ शालः प्राकारः ।

इति द्वितीयोऽतिशयः । तथा जिनशिरसः पश्चाद्भागेऽधरीकृतद्वादशार्कबिंबाभं जनमनोहरं भामंडलं प्रभापटलस्योद्योतः प्रसरति । यतः—

रूवं पिछंताणं अइडुल्लहं जस्स होउ मा विग्घं । तो पिंडिऊण तेअं कुणंति भामंडलं पुठे ॥ १ ॥

इति वर्धमानदेशनायाम् । इति तृतीयोऽतिशयः । तथा यत्र यत्र कारुण्यैकनिधयो विहरन्ति, तत्र तत्र ( सपादयोजनशते— ) चतसृषु दिक्षु प्रत्येकं पञ्चविंशतियोजनमध्ये ऊर्ध्वं सा ( योजनान्यध ऊर्ध्वं च सा ) र्धद्वादशयोजनमध्ये, इति सर्वत्र योज्यम् । पूर्वोत्पन्ना रोगा ज्वरादय उपशाम्यन्ति, अपूर्वाश्च नोत्पद्यन्ते, इति चतुर्थोऽतिशयः । तथा पूर्वभवनिबद्धानि जातिप्रत्ययानि च वैराणि—परस्परविरोधा न भवन्तीति पञ्चमः । तथा ईतयः—शलभशुकमूषका धान्यादिविनाशका न भवन्तीति षष्ठः । तथा मारिः—औत्पातिकं दुष्टदेवतादिकृतं सर्वगतं मरणं न स्यादिति सप्तमः । तथाऽतिवर्षणं—निरन्तरवृष्टिर्न स्यादित्यष्टमः । तथा ( ऽनावृष्टिः— ) सर्वथा जलाभावो न स्यादिति नवमः । तथा दुर्भिक्षं भिक्षाणामभावो न स्यादिति दशमः । तथा स्वचक्रपरचक्रकृतो विड्वरो न स्यादित्येकादशः ।

अथैकोनविंशतिर्देवकृता अतिशयाः कथ्यन्ते—तत्राकाशे धर्मप्रकाशकं स्फुरत्किरणचक्रं धर्मचक्रं भवति, इति प्रथमो देवकृतातिशयः । तथा खे चामराणि श्वेतवालव्यजनानि भवन्तीति द्वितीयः । तथा व्योम्नि निर्मलं स्फटिकमणिमयं पादपीठयुक्तं सिंहासनं स्यादिति तृतीयः । तथा विहायसि छत्रत्रयं स्यादिति चतुर्थः । तथाऽम्बरे रत्नमयः शेषध्वजा-

१ विग्रहः.

नरतिर्यक्सुरलोकानां प्रत्येकं निजनिजभाषया धर्मावबोधदा भवति–योजनव्यापिन्येकस्वरूपापि भगवतो भारती वारिदमुक्तवारिवत्तदाश्रयानुरूपतया परिणमति । यत उक्तम्–

**देवा दैवीं नरा नारीं, शबराश्चापि शाबरीम् । तिर्यञ्चोऽपि हि तैरश्चीं, मेनिरे भगवद्गिरम् ॥ १ ॥**

न ह्येवंविधभुवनाद्भुतमतिशयमन्तरेण युगपदनेकसत्त्वोपकारः शक्यते कर्तुम्। अत्रार्थे कस्यचित् किरातस्योदन्तः कथ्यते–

**सरःशरस्वरार्थेन, भिल्लेन युगपद्यथा । सरोनत्थीतिवाक्येन, प्रियास्तिस्रोऽपि बोधिताः ॥ १ ॥**

यथा कोऽपि किरातः शुक्रमासे[1] तिसृभिर्वनिताभिः सह गच्छन् एकया प्रार्थितः–'स्वामिन् ! त्वं सुस्वरेण गानं कुरु, यदहं शृणोमि' । अन्यया याचितः–'त्वं जलाशयतः शीतलं जलं सकैंमलपरिमलं समानीय दत्वा मम तृषाविच्छेदं कुरु' । अपरयोक्तम्–'मम मृगामिषदानेन क्षुधां निवर्तय' । तासां वाक्यं ( वाक्यानि ) श्रुत्वा तेन निराकृताः 'सरो नत्थि' इत्येकेनोत्तरेण । प्रथमया ज्ञातम्–'अस्य स्वरः प्रशस्यतरः कंठो नास्ति' । द्वितीयया चिन्तितम्–'सरो जलाशयो नास्ति । कुतः समानयति ?' । तृतीयया मनसि धृतम्–'शरो बाणो नास्ति । तमृते केनायं गृह्णाति !' । इत्येकेन वाक्येन निराकुलितचित्ता जाताः । तथेहापि, जिनेन्द्रवाक्यं तु निरुपमं वचनगोचरातीतं स्यात् । यतः—

**नयसप्तशतीसप्तभंगीसंगीतसंगतिम् । शृण्वन्तो यद्गिरं भव्या जायन्ते श्रुतपारगाः ॥ १ ॥**

---

१ ज्येष्ठमासे.

लक्षणो ग्रन्थः ? प्रबोधदः सम्यग्ज्ञानदायकस्तं । किं कृत्वा । नत्वा मनोवाक्कायैर्नमस्कृत्य । कं तमित्याह–शान्तिनाथं अचिरेयं विश्वसेनात्मजं षोडशं जिनं । किंलक्षणं शान्तिनाथं ? ऐन्द्रश्रेणिभिश्चतुःषष्टिसुरेन्द्रनरेन्द्रफणीन्द्रखेचरेन्द्रमृगेन्द्रादिभिर्नतः प्रणामं ( मविषयी ) कृतस्तं । पुनः कीदृशं ? अतिशयैरपायापगमादिभिश्चतुस्त्रिंशद्भिर्वा वक्ष्यमाणैः अन्वितः संयुतस्तं प्रणम्येति श्लोकार्थः ।

अत्रातिशयान्वितमिति विशेषणेन चतुस्त्रिंशदतिशयाः सूचितास्ते चेमे पूर्वसूरिप्रोक्तगाथया लिख्यन्ते–

"चउरो जम्मप्पभिई, इक्कारस कम्मसंखए जाए। नव दस य देवजणिए, चउत्तीसं अइसए वंदे॥१॥"

तथा हि—तीर्थंकरस्य विग्रहो लोकोत्तराद्भुतरूपयुक्तो निरामयः प्रस्वेदमलोज्झितश्च भवति, एष प्रथमः । तथा तीर्थकृतां श्वासोच्छ्वासः कमलपरिमलमञ्जुलो भवति, इति द्वितीयः । तथाऽर्हतां मांसशोणितं गोक्षीरवद्धवलमसिते (विश्र)-तरं भवतीति तृतीयः । तथा भगवतामाहारनीहारौ क्रियमाणौ न दृश्यौ मांसचक्षुषां, न पुनरवध्यादिदर्शनवतां पुंसां एष चतुर्थः सहजातिशयः । इत्येते चत्वारोऽतिशया जिनानां जन्मतोऽपि जाताः ।

इदानीमेकादशातिशयाः कर्मक्षयोद्भवाः–ज्ञानावरणीयादीनां चतुर्णां घातिकर्मणां क्षयाज्जाताः. कथ्यन्ते–तत्र योजनमात्रक्षेत्रे समवसरणभुवि जगज्जनः–सुरनरतिर्यग्जनः प्रभूतोऽपि कोटिकोटिप्रमाणोऽपि माति–परस्परासंबाधया सुखेनावतिष्ठते, इति प्रथमः कर्मक्षयजातोऽतिशयः । तथा भगवताऽभिधीयमाना पञ्चत्रिंशद्गुणान्विताऽर्धमागधी भाषा

प्राह—"हे शिष्य मैवं, प्रयोजनाभावस्यासिद्धत्वात्। तथा हि—कथं नाम विनेया विवक्षितग्रन्थस्याविघ्नेन पारं गच्छेयुः? अत आदिमंगलोपन्यासः। तथा स एव कथं नाम तेषां स्थिरः स्यादतो मध्यमंगलग्रहणम्। स एव कथं नाम शिष्यप्रशिष्यादिवंशस्याव्यवच्छित्त्योपकारकः स्यादित्यतश्चरममंगल (भाव) स्योपादानमिति। अतस्त्वदुद्भावितहेतोरसिद्धतेति। तथा चोक्तं प्रशस्यभाष्यशस्यकाश्यपीकल्पश्रीजिनभद्रगणिपादैः—

"तं मंगलमाईए मज्झे पज्जंतए य सत्थस्स। पढमं सत्थत्थाविग्घपारगमनाय निद्दिट्ठं॥ १॥ इत्यादि।"

तथा शिष्टसमयमात्रत्वात्। के शिष्टाः? शास्त्रसागरप्राप्तये शुभवर्तिनस्त एवेति। यदुक्तम्—

"शिष्टानामयमाचारो यत्ते संत्यज्य दूषणम्। निरन्तरं प्रवर्तन्ते शुभ एव प्रयोजने॥ १॥"

इति। तथा प्रेक्षावन्तः फलाभिलाषिण एव, प्रयोजनादिरहितत्वे (तु) कंटकशाखामर्दनवदि (न्न प्रवृत्तिमादध्युस्तेऽत्रे) त्येवमाशंकापनोदाय प्रेक्षावत्प्रवर्तनाय शिवेतरक्षतये च समुचितेष्टदेवतानमस्कारपूर्वकं संबन्धाभिधेयप्रयोजनसूचकमाद्यं श्लोकमाह—

ऐंद्रश्रेणिनतं शान्तिनाथमतिशयान्वितम्। नत्वोपदेशसद्माख्यग्रन्थं वक्ष्ये प्रबोधदम्॥ १॥

व्याख्या—अहमुपदेशप्रासादं ग्रन्थं वक्ष्य इति क्रियासंबन्धः। तत्रोपदेशाः प्रत्यहं व्याख्यानयोग्यैकषष्ट्यधिकत्रिशतमिता अवदाताः, तेषामेव सद्म स्थानं, तदाख्यग्रन्थस्तन्नाम शास्त्रं। ग्रथ्यतेऽसौ ग्रन्थः। तं वक्ष्ये भणिष्यामि। किंल-

तेभ्यो नमो वाग्भववीजपूर्वं, नत्वेति मंत्रं प्रतनोमि शास्त्रम् ॥ ११ ॥
शिशुसंलपनं यत्त ( द्र ) त्, काहलमपि जनकसान्निध्ये ।
तद्रूत्तधरपार्श्वे प्रलपितमपि सत्यमुप ( तां ) याति ॥ १२ ॥
क्षीरार्णवादल्पजलं गृहीत्वा, कश्चिज्जहाति तृ ( द्विजह्यात्तृ ) पितः पिपासाम् ।
संगृह्य तद्वद्बहुशास्त्रतोऽत्र, व्याख्यां लिखिष्येऽहमतो ( लिखन्नस्मि सतां ) न गर्ह्यः १३
एकैकश्लोकमध्येऽत्र एकैकज्ञातमाहितम् ।
अब्दाहर्मितजाता तत्संख्या ( तदब्दाहर्मिता संख्या जाता ) गद्येन गर्भिता ॥ १४ ॥

अथात्र ग्रन्थस्यादौ नमस्कारात्मकं वस्तुनिर्देशात्मकं चाशीर्वादात्मकं च निर्विघ्नार्थं शिष्टसमयपरिपालनार्थं च वाच्यम्। यतः "श्रेयांसि बहुविघ्नानि भवन्ति महतामपि । अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥ १ ॥" तस्माद्ग्रन्थारंभे ( रम्भयत्ने ) प्रत्यूहव्यूहोपशान्तये तन्मंगलं शास्त्रस्यादौ मध्येऽवसाने चेष्यते । अत्र शिष्यप्रश्नः– "ननु स्याद्वादधर्मवर्णात्मकं सर्वमेवेदं मंगलमित्येतावदेवास्तु, मंगलत्रयाभ्युपगमोऽयुक्तः, प्रयोजनाभावादिति" । गुरुः

१ तेभ्योऽनन्तरं वाग्देव्या भवं यद्बीजं ऐंकारस्तत्पूर्वं नमः, ऐंनम इति यावत्.

तापव्यपोहोत्तमचन्दनेन, विकासितं विश्वमनिन्दनेन ॥ ७ ॥
पश्चानुपूर्व्या तु भवे तृतीये, कृतानि मासक्षपणानि येन ।
[1]श्रुतांगलक्षेभमितायुतानि, शतानि पञ्चावतु मां स वीरः ॥ ८ ॥
[2]भवा(व्या)र्चनीयाजितसंभवादयः, स्वयंभुवोऽनन्तभवान्तकृद्भवाः[3] ।
ये [4]भावुकश्रीप्रभवा भवन्तु ते, स्वाध्यायधर्मप्रगुणात्मनां सताम् ॥ ९ ॥
( स्वान्तिषन्मतिविबोधधित्सया मत्कृतस्य ) सदुपदेशसद्मनः ।
वृत्तिम[5]ब्ददिनमानसद्गुणसंग्रहां तदभिधां तनोम्यहम् ॥ १० ॥
आद्यास्त्रयोऽत्र [6]प्रणवा निधेयास्तत्संख्यबीजानि ततोऽम्बरस्य ।

१ श्रुतांगानि एकादशांगानि तन्मितानि लक्षाणि, इभा गजा अष्टौ तन्मितान्ययुतानि दशसहस्राणि अशीतिः सहस्राणीति यावत्. २ भवैर्भव्यैरर्चनीयाः, ते च तेऽजितसंभवादयश्च. ३ अनन्तसंसारस्यान्तकृदन्तकारको भवो जन्म येषां ते. ४ भावुका भाविता मनःसंकल्पितेति यावत्, श्रीर्लक्ष्मीस्तस्याः प्रभव उत्पत्तिर्येभ्य ईदृशा भवन्तु. ५ संवत्सरदिनमानानां सक्षणानां दृष्टान्तानां संग्रहो यस्याम्. ६ प्रणव ॐकारः ७ आकाशबीजं ह्रींकारः.

श्रेयःश्रियां हेतुकमद्वितीयं, त्रैलोक्यलक्ष्म्याः किल सद्वितीयम् ।
श्रीविश्वसेनात्मजमात्मनीनं, श्रयामि गाङ्गीर्यरमाधुनीनम्[1] ॥ ३ ॥
तिर्यग्दयार्थं रथसंस्थितः स्वयं, नेमिः स पाणिग्रहणैकछद्मना ( लक्ष्यतः ) ।
मोहासुरापोहनरायणप्रभः[2], शं यच्छतान्मन्मथवामदेवभः[3] ॥ ४ ॥
शंखेश्वरप्रार्थित[4] नाथनाथ, वामेय शंखेश्वरपार्श्वनाथ ।
चिरं जय त्वं जिनलब्धवर्णै[5]रिति स्तुतो यो गणिलब्धवर्णैः[6] ॥ ५ ॥
अन्तरीक्षनवपल्लवादिका, पार्श्वनाथगणनास्ति विश्रुता ।
तीर्थपूज्यतनुलक्षणै[7]र्मिता, तां स्तवीमि मुदितः सुखावहाम् ॥ ६ ॥
सिद्धार्थभूशासननन्दनेन, चिद्व्यूहदेवांघ्रिपनन्दनेन[8] ।

---

१ धुनीनो नदीशः. २ नरायणो नारायणः, विष्णुरिति यावत्. ३ मन्मथे कामदेवदमने वामदेवसदृशो महादेवसदृशः. ४ शंखेश्वरेण कृष्णेन प्रार्थितस्तत्संबुद्धौ. ५ जिनात् लब्धा वर्णास्त्रिपदीरूपा यैस्तैः. ६ 'गणी' इति लब्धो वर्णो यैस्तैर्गणधरैरिति यावत्. ७ तीर्थंकरशरीरस्य सामुद्रिकलक्षणान्यष्टोत्तरसहस्रं तैः. ८ ज्ञानसमूह एव देववृक्षस्तस्य नन्दनवनेन ।

श्रीविजयलक्ष्मीसूरिविरचितः

# उपदेशप्रासादः



## प्रथमः स्तंभः ।

। श्रीयशोविमलसद्गुरुभ्यो नमः ।

शालिनीछंदः

स्वस्तिश्रीदो नाभिभूर्विश्ववन्धुर्गीर्वाणार्च्यो वस्तुतस्तत्त्वसिन्धुः ।
भास्वद्दीप्त्या निर्जितादित्यचन्द्रः, सत्त्वानव्यादादिमोऽयं जिनेन्द्रः ॥ १ ॥
श्रीभूपनाभिजनपान्वयपुष्करत्वे, चिद्रूपदीधितिगणै रविरेव योऽभूत् ।
स्वीयौजसा शमितमोहतमःसमूहः, कल्याणवर्णविभुरस्तु विभूतये सः ॥ २ ॥

१ 'यो नाभिभूपविपुलान्वयपुष्करेऽर्हन्, लब्धोदयः समभवत्तरणेः समानः' इति पूर्वार्धः क्वचित्.

॥ इति स्तम्भषट्कस्य विषयानुक्रमः ॥

## ॥ पञ्चमस्तम्भः ॥ ५ ॥

॥ चतुर्थस्तम्भः ॥ ४ ॥

## ॥ द्वितीयस्तम्भः ॥ २ ॥

# ॥ श्रीउपदेशप्रासादप्रथमविभागस्य विषयानुक्रमः ॥

## ॥ प्रथमस्तम्भः ॥ १ ॥

काव्यं सम्यक्त्वभेदत्रिकं कथात्रितयसहितं चरमे चैकषष्टितमे व्याख्याने सम्यक्त्ववस्तुस्वरूपं प्ररूपितमस्ति । एवं चात्रै-
कषष्टिर्व्याख्यानानि सप्तषष्टिश्च कथानकानि वर्तन्ते । तेषु सम्यक्त्वस्वरूपभेदादिप्ररूपके आदिमान्तिमव्याख्यानचतुष्के
एकाग्रचित्तेन वाचनीये स्तः । सम्यक्त्वषट्स्थानविषयकपञ्चपञ्चाशत्तमादिव्याख्यानत्रिके गौतमादिगणधरत्रयकथास्त-
त्वरसिकानां तत्त्वज्ञानप्रदाः सन्ति । सप्तमव्याख्यानस्थजमालिकथैकोनविंशतितमस्थद्वितीयनिह्नवकथा च बोधप्रदे स्तः ।
अष्टप्रभावकाधिकारगतद्वादशव्याख्यानस्थत्रयोदशकथानकानि काकजंघकोकाशयोश्च कथे कथारसिकानां रसप्रदा एव
वर्त्तन्ते । चतुर्थस्तम्भप्रान्तेऽत्र प्रथमः खंडः सम्यक्त्वनामा संपूर्णः ।

द्वितीयखंडस्य स्तंभदशकमध्ये आदिस्तंभद्वयं पञ्चमषष्ठनामकमत्र विभागेऽन्तर्गतं । तत्र पञ्चमे स्तम्भे द्वाषष्टितमाच्चतुः-
सप्ततितमव्याख्यानं यावत्त्रयोदशव्याख्यानात्मके प्राणातिपातविरमणनामकं प्रथममणुव्रतमेव विस्तृतं । पञ्चसप्ततितमादा-
रभ्य नवतितमव्याख्यानं यावत् षोडशव्याख्यानात्मके षष्ठे स्तम्भे च द्वितीयं तृतीयं चेति अणुव्रतद्वयं संपूर्णं विवृतं, चतुर्था-
णुव्रतं च सामान्यतः प्ररूपितं, विशेषतस्तु सप्तमस्तम्भादौ व्याख्यातमिति । प्रतिव्रतमत्र स्पष्टतरं स्पष्टितं सरलया भाषयेति
वाचकवर्गोऽल्पेनैवायासेन सुज्ञः स्यादिति निर्विवादं । किं बहुना ? अधोलिखितसविस्तरविषयानुक्रमवाचनेन समग्रग्रन्थवाचने
जाताभिलाषा धर्ममर्मरसिका भव्या धर्मतत्त्वं ज्ञात्वा तदाराधनतत्परा भूयासुरित्याशीःपूर्वकं विज्ञप्यते संसदधिकारिभिः ।

ग्रन्थेऽस्मिन् शुद्धिविषये कृतेऽपि यत्ने स्याच्चेत्स्खलनं मतिमान्द्याद्दृष्टिदोषाद्वा तत्क्षाम्यन्तु सहृदयास्तत्त्वपयोग्राहिणो
विद्वद्राजराजहंसाः, बोधयन्तु चास्मान् प्रमादस्थानानि कृपया, येन भूयस्तत्सावधाना भवाम इति प्रार्थना ॥

संवत् १९७१ श्रीजैनधर्मप्रसारकसभा. भावनगर.

आदिमेऽस्मिन् विभागेऽग्रिमस्तम्भपञ्चात्मके नवतिर्व्याख्यानानामस्ति । तत्र प्रथमस्तम्भचतुष्के केवलः सम्यक्त्वस्वरूपोऽधिकृतो धर्मस्य मोक्षस्य चैकान्तिककारणत्वात् । तत्र तावद्ग्रन्थारम्भे मङ्गलं कृत्वा मङ्गलकरणस्यावश्यकता सयुक्ति प्रतिपादिता । तदनन्तरमादिमे व्याख्याने श्रीजिनेश्वरस्य चतुस्त्रिंशदतिशया वर्णिताः । ततो द्वितीयादिषु त्रिषु व्याख्यानेषु सम्यक्त्वस्य भेदनिरूपणं कृतं, प्रतिव्याख्यानं च कथानकसहितमेव दत्तं । पञ्चमात्सप्तपञ्चाशत्तमं व्याख्यानं यावत्सम्यक्त्वस्य सप्तषष्टिभेदानां व्याख्या कृता एकषष्टिदृष्टान्तदर्शनपूर्वकं । तदित्थम्—

| सम्यक्त्वभेदाः | व्याख्यानसंख्या | दृष्टान्ताङ्कः | सम्यक्त्वभेदाः | व्याख्यानसंख्या | दृष्टान्ताङ्कः |
|---|---|---|---|---|---|
| ४ श्रद्धाः | ४ | ४ | ५ भूषणानि | ५ | ७ |
| ३ लिङ्गानि | ३ | ३ | ५ लक्षणानि | ५ | ६ |
| १० विनयाः | ३ | ३ | ६ यतनाः | २ | २ |
| ३ शुद्धयः | ४ | ४ | ६ आगाराः | ६ | ८ |
| ५ दूषणानि | ५ | ७ | ६ भावनाः | १ | १ |
| ८ प्रभावकाः | १२ | १३ | ६ स्थानानि | ३ | ३ |
| | | | ६७ | ५३ | ६१ |

ततश्चरमं व्याख्यानचतुष्कं सम्यक्त्वस्यान्यभेदादिनिरूपणार्थमेव । तद्यथा—प्रथमव्याख्यानत्रये रोचककारकदीप-

षानुवादमुद्रणेन सर्वजनोपकारं कृतपूर्विणोऽपि वयमेतन्मूलग्रन्थमुद्रापणे सोत्साहाः संजाताः ।

यद्यप्यस्य ग्रन्थस्यान्यमुनिकृतटबासहितत्वादन्यस्माद्वा कुतोऽपि कारणादशुद्धतरत्वान्मुद्रापणे चिरं शिथिलादराः स्थितवन्तो वयं, तथाप्यस्यातीवोपयुक्ततां जानाना गुणगुर्व्या विदुष्या लाभश्रीनाम्न्याः साध्व्याः प्रयासप्रेरणान्यामुत्साहितास्तद्दापितेनैव राजनगर ( अमदाबाद ) निवासिन्या आधारसंज्ञकायाः श्राविकाया द्रव्यसाहाय्येनाग्रिमस्तम्भषट्कमुद्रापणाय प्रेसकापीकार्यं संसज्ञास्त्रिणा जेठालालशर्मणा प्रारम्भितवन्तः, तदनन्तरमेतत्प्रेसकापीविलोकने कृतदयानां दयासागराणां श्रीमदानन्दसागराह्वानां पन्यासपदालङ्कृतानामुपदेशेनाखिलग्रन्थमुद्रापणे कृतनिश्चयाः स्मः ।

संस्कृतभाषादोषबाहुल्येऽस्मिन् ग्रन्थे सन्धिविभक्त्यादिदूषणानि निःशङ्कं शोधितानि गद्यात्मके लेखे, दोषग्रस्ते पद्यात्मके च छन्दोऽनुवृत्त्या क्वचिदल्पदोषा एव शोधिताः, क्वचिद्वर्णन्यूनाधिक्यं कृतं, क्वचिच्छ्लोकोक्तभावार्थानुसारेण पादोऽपि परावर्त्तितः, क्वचिन्मूलकारपाठो दोषयुक्त एव लिखित्वाऽन्यो निर्दोषः पाठः पाठान्तररूपेणैव भिन्नो लिखितः, क्वचिच्च दोषासक्तोऽपि यथातथमेव लिखितो न काचिदपि शुद्धिर्विहिता । किं बहुना? सर्वथा कर्तुः प्रयासगौरवं गीर्वाणभाषाज्ञपाठकवृन्दस्य ग्रन्थलापनानुकूल्यं च मनसि निधाय समपक्षपातया बुद्ध्या यथाक्षयोपशमं शुद्धिविषये प्रयासः कृतः ।

अस्मिन् ग्रन्थे मुख्यास्त्रयः खण्डाः सन्ति—सम्यक्त्वखण्डो देशविरतिखण्डः सर्वविरतिखण्डश्चेति । तत्र प्रथमखण्डः प्रथमस्तंभचतुष्टयरूपो द्वितीयश्चतुर्दशस्तम्भपर्यन्तश्चतुर्विंशतितमस्तम्भपर्यवसानश्च तृतीयः । त्रयोऽपि खण्डाः सविस्तृततरा इत्येतद्यथास्थानं दर्शयिष्यामः ।

वन्तः ? कति वर्षाणि च दीक्षापर्यायं पालयित्वा कं कं देशसंघादिकं पादरजोवचनामृतैस्तर्पितवन्तः ? इत्याद्येतच्चरित-जिज्ञासवोऽपि वयमतृप्ता एवाद्यापि । भव्यजीवपरमोपकारिणामेषां गुणकीर्त्तनेनापि प्रत्युपकर्तुमसमर्था वयं तत्कृतग्रन्थोपदेशश्रवणमननादिना फलेग्रहिणो भवेम चेदेतावतैवात्मानमनृणं मन्येमहि । पूज्यानामेषां सिद्धान्तविषये कीदृग्ज्ञानमद्भुतमभूदिति तत्कृतिमवलोक्य विचिन्तयन्तो वयं न पारयामः पारं प्राप्तुं, यतः सर्वे औपदेशिकविषयाः सूत्रानुसारत एव विविधसूत्रसाक्षिपूर्वकं संदृब्धा विलोक्यन्ते । रसालङ्कारवर्णनादेरभूमेरप्यस्याः कृतेर्वाचने उत्तरोत्तरमधिकाधिक आनन्दोऽनुभूयत एव वाचकवर्गैर्धर्मरसिकैरिति सुस्पष्टं प्रतिभाति, यतः प्रत्युपदेशविषयमागमोक्तकथानकेन संक्षिप्तेन सुघटितेन दृढीकरणाय काचिदचिन्त्यशक्तिर्नियोजिता ग्रन्थनियोक्तृभिः ।

ग्रन्थेऽत्र प्रतिस्तम्भ प्रायेण पञ्चदशव्याख्यानोपेतत्वादेकव्याख्यानाधिक्याच्चैकषष्ट्युत्तरं शतत्रयं व्याख्यानानां विद्यते, तेन प्रतिदिनमेकैकव्याख्याने व्याख्याते संवत्सरेणैव ग्रन्थो व्याख्यायते व्याख्यातृभिर्मुनिवरैरित्याकूतं ग्रन्थकर्तृणामनुमीयते । प्रतिव्याख्यानं चैकद्व्यादिमूलश्लोकसन्दर्भेणोपदेश्यं वस्तूपदिश्य उपदेशसंग्रहाख्यायां स्वोपज्ञतट्टीकायां तं तं विषयं सशास्त्रसाक्षिकं विविच्य संक्षिप्तेन प्रायो मूलश्लोकोक्तेन कथानकेन स स विषयो दृढीकृतः । कथानकेष्वप्यन्यकविकृतैर्हिकपारमार्थिकनीतिविषयकसुभाषितश्लोकाः प्रसङ्गोपयुक्तत्वेन प्रसञ्जिताः । प्रतिव्याख्यानान्ते च स्वकृतश्लोकेनाखिलव्याख्यानरहस्यप्रदर्शनपुरस्सरं भव्यजीवानुद्दिश्योपदेशः कृतः । सर्वत्र स्वकृतौ गीर्वाणभाषा भाषिता सरला, येन सामान्यसंस्कृतज्ञानवान् सर्वः कोऽपि पठनपाठने स्वल्पप्रयासेनैव समर्थो भवति । अत एवास्य ग्रन्थस्य समग्रस्य गुर्जरभा-

मनोवाक्काययोगानां शुद्धिर्या त्विह गद्यते । स एव मणरूपो धार्यः असत्प्रवृत्तिवारकः ॥ ५ ॥
गवाक्षादीनि वस्तूनि युज्यन्ते यानि मन्दिरे । नातिचारव्रतान्येव ज्ञेयानि शास्त्रपाठकैः ॥ ६ ॥
सप्तशतनयासक्तं स्याद्वादद्योतकं वचः । तदेव शिखरं चात्र निर्मलं द्युतिमन्महत् ॥ ७ ॥
रत्नत्रयस्तवारम्भः कुम्भः संदृश्यते महान् । अनन्ताव्ययसम्पत्तिः शिवस्तुात्ध्वजा स्मृता ॥ ८ ॥
शुद्धाशये गर्भगृहे प्रतिष्ठः, चिद्रूपमूर्तिः स्फुटशं प्रदोऽस्तु ।
स्वाप्तः स्वयंभूर्भुवनाधिनाथः, सौभाग्यलक्ष्मीप्सितदोऽन्वहं सः ॥ ९ ॥" इत्यादि ॥

ग्रन्थस्यास्य प्रणेतारो विजयसौभाग्यसूरिवराणामन्तेवासिनो विजयलक्ष्मीसूरीश्वराः संवत् १८४३ संवत्सरेऽमुं ग्रन्थं संपूर्णं रचितवन्त इति प्रशस्तिलेखतो निश्चीयते तेषां सत्तासमयः । तथाहि—

"श्रीमद्विजयसौभाग्यसूरयो गुणभूरयः । ऐक्यकोटिनमस्कारध्यायका गुरवः स्तुताः ॥ ३ ॥
श्रीविजयादिलक्ष्मीसूरिणा तद्विनेयेन हि । वर्णन्यासीकृतो ग्रन्थो दृष्टाक्षरानुसारतः ॥ ४ ॥"

"गुणगतिवसुशशि ( १८४३ ) वर्षे कार्तिकमासे समुज्ज्वले पक्षे ।
गुरुपूर्णायां समजनि सफलो यत्नः सुपञ्चम्याम् ॥ ६ ॥"

इत्यादि। किं तु पूज्यपादा इमे काँस्कान् ग्रन्थानन्यान् ग्रथितवन्तः ? जन्मना कां भूमिं कौ पितरौ कं च वंशं पावित-

## ॥ प्रथमावृतिगत प्रस्तावना ॥

### विदांकुर्वन्तु धर्मतत्त्वरसिकाः सज्जनाः ।

इह खलु जैनधर्मतत्त्वनिरूपकाः सहस्रशो ग्रन्था वरीवर्त्तन्ते । तत्राप्यौपदेशिका ग्रन्था उपदेशमाला—उपदेशामृतकुलक—उपदेशपञ्चाशिका—उपदेशसप्ततिका—उपदेशचिन्तामणि—उपदेशकन्दली—उपदेशकल्पद्रुम—उपदेशतरङ्गिणी—उपदेशपद—उपदेशरत्नाकरादयो बहुतराः प्रसिद्धा अप्रसिद्धाश्च दरीदृश्यन्ते । तेभ्यः सर्वेभ्यो विस्तरतरोऽयमुपदेशप्रासादनामा ग्रन्थो विंशतिसहस्राधिकश्लोकप्रमाणश्चतुर्विंशतिस्तम्भसङ्कलितो जैनधर्मतत्त्वबाहुल्यनिरूपको विजयते । ग्रन्थेऽस्मिन् प्रायेण संक्षेपेण सर्वेषां धर्मतत्त्वानां निरूपणं निरूपितं निरूपकनिपुणैर्ग्रन्थकारैः । औपदेशिकस्यास्य ग्रन्थस्य प्रासादसंज्ञा केन प्रकारेणान्वर्थेति ग्रन्थकृद्भिरेव मूलग्रन्थे ग्रथितं स्तम्भगवाक्षद्वारतोरणादिसर्वतदवयवनिदर्शनपुरस्सरं चरमस्तम्भप्रान्ते श्रीसिद्धाचलस्यादिनाथप्रासादवर्णनपूर्वकम् । तद्यथा—

"अत्रोपदेशप्रासादे अष्टौ बुद्धिगुणाः स्तुताः । सोपानसदृशा ज्ञेयाः शास्त्रमार्गप्रदर्शकाः ॥ १ ॥
विकथावर्जनं शश्वत् सप्तभेदं च वर्णनम् । द्वारं तदेव विज्ञेयं प्रवेशने हितावहम् ॥ २ ॥
अनुयोगाश्चतुर्भेदास्तदाख्यानं हि तोरणम् । विचित्ररचनायुक्तं ध्यातव्यं शास्त्रसद्मनि ॥ ३ ॥
द्विद्विभेदैर्विभक्तानि द्वादशधा व्रतान्यथ । चतुर्विंशतिकानि स्युस्तेऽत्र स्तम्भा उदाहृताः ॥ ४ ॥

**પ્રકાશક અને પ્રાપ્તિસ્થાન :**

પૂ. આ. શ્રી સુરેન્દ્રસૂરીશ્વરજી જૈન તત્ત્વજ્ઞાન શાળા
પટણીની ખડકી, ઝવેરી વાડ,
અમદાવાદ–૩૮૦ ૦૦૧.

**અન્ય પ્રાપ્તિસ્થાન :**

(૧) શ્રી જસવંતલાલ વાડીલાલ શાહ
C/o વાડીલાલ ભલાભાઈની કું
૪૩/એ મસ્કતી માર્કેટ,
ફોન : ઓ. ૩૮૨૬૦૯ / ઘેરી ૪૬૮૪૩૮

(૨) શ્રી શશિકાન્ત ભોગીલાલ
૭૬/૭૮ શેખ મેમણ સ્ટ્રીટ,
ઝવેરી બજાર, મુંબઈ–૪૦૦ ૦૦૨.

**મુદ્રણ વ્યવસ્થા :**

ખુશાલી ઓફસેટ પ્રીન્ટર્સ,
૧૦, કલ્પતરુ સોસાયટી,
મીરામ્બીકા સ્કૂલ રોડ,
નારણપુરા, અમદાવાદ–૧૩.
ફોન : ૪૭૩૬૪૪

卐

પુનઃમુદ્રણ : સં. ૨૦૪૪ કા. સુદ ૧૫

મુલ્ય : ભાગ ૧ થી ૪–૧૭૫–૦૦
ભાગ ૧– ૫૦–૦૦

। श्री विजयलक्ष्मीसूरिविरचितः ।

# । उपदेशप्रासादः ।

। प्रथमो विभागः ।

( प्रथमस्तंभषट्कम् )

प्रेरक
परम पूज्य आचार्य भगवंत श्रीमद्
विजयरामसूरीश्वरजी महाराज
साहेब ( डहेलावाला )

प्रकाशक
आचार्य श्री सुरेन्द्रसूरीश्वरजी
जैन तत्वज्ञानशाला, झवेरीवाड,
पटणीनी खडकी, अहमदाबाद-३८०००१

હાલ આ પુસ્તકાલયમાં ૬૦૦૦ ઉપરાંત સંસ્કૃત પ્રાકૃત- ગુજરાતી ગ્રંથો સંગ્રહિત છે. છાપેલી પ્રતિઓ આશરે ૩૦૦૦ છે અને ૪૦૦૦ ઉપરાંત હસ્તલિખિત ગ્રંથો સંઘરેલા છે, જેનું લિસ્ટ રજીસ્ટાર આકારમાં છે અને ઈંડેકસ ફોર્મમાં કાર્ડ બનાવી રાખેલાં છે. આ પુસ્તકોનો ઉપયોગ દરેક સમુદાયના સાધુ સાધ્વીજી મહારાજો કરે છે. આ પુસ્તકાલયમાં વાંચનાલય પણ છે. જેના દૈનિક વર્તમાનપત્રો, સાપ્તાહિકો તથા માસિકપત્રો મગાવવામાં આવે છે.

૨૪-૨-૧૯૮૮

ચારુચંદ્ર ભોગીલાલ શાહ
મેનેજીંગ ટ્રસ્ટી

શરૂઆતનાં વર્ષોમાં' રોજ-બ-રોજ ના ખર્ચ માટે સ્વ.પૂ.આચાર્યશ્રીના ઉપદેશથી કાળુપુર કાળુશીની પોળના નિવાસી.સ્વ.શાહ નાથાભાઈ હઠીસિહ તરફથી આર્થિક સહકાર મળતો હતો.

આજથી લગભગ ૪૦ વર્ષો પહેલાં આ ટ્રસ્ટના ઉપક્રમે 'સંસ્કૃત-ગુજરાતી શબ્દકોષ' બે ભાગમાં પ.પૂ.આચાર્યશ્રીના ઉપદેશથી સ્વ.પ.શ્રી મુક્તિવિજયજી મ.ના સહયોગ થી કેટલાક વિધ્વાન પંડિતોની સહાયતાથી પ્રકાશિત કરવામાં આવ્યો હતો. તે મહાગ્રંથ અપ્રાપ્ય થતાં સ્વ.પ.પૂ.આ.શ્રી ના પ્રશિષ્ય સ્વ.આ.શ્રી મંગલપ્રભસુરીશ્વરજી મ.ના આર્શીવાદથી અને સ્વ.આચાર્યશ્રીના પ્રપ્રશિષ્ય પૂ.આ.શ્રી વિજયહેમપ્રભસૂરીશ્વરજી મ.ની પૈરણાથી પંડિત શ્રી અંબાલાલ પ્રેમચંદ શાહના સહકારથી સુધારા વધારા સાથે તૈયાર થઈ રહયો છે. નવી બીજી આવૃતિના પ્રગટ થનારા ત્રણ ભાગો પૈકી એક ભાગ સ.૨૦૪૨ માં પ્રગટ કરવામા આવ્યો,જેની અનાવરણવિધિ શેઠ શ્રી. શ્રેણિકભાઈ કસ્તુરભાઈના હસ્તે થઈ હતી. આ મહાગ્રંથમાં આશરે એક લાખ શબ્દો સમાવવામાં આવ્યા છે. દરેક શબ્દની વ્યપત્તિ અને સાહિત્યિક આધાર સ્થળોનો પણ તેમાં નિર્દેશ કર્યો છે. બીજા અને ત્રીજા ભાગનું સુધારા વધારા સાથેનું સંશોધન અને છાપકામ ચાલુ છે.

આ ઉપરાંત આ સંસ્થા તરફથી 'તપાગચ્છ પટ્ટાવલી' નામનો ઐતિહાસિક ગ્રંથ અનુવાદ સાથે પ્રગટ કરવામાં આવ્યો છે. તેમજ બીજો 'મુહપત્તિચર્ચા સાર' નામનો ચાર્ચિક ગ્રંથ જૈન સમાજને ઉપયોગી સમજીને પ્રગટ કરવામાં આવેલ હતો.

શરૂઆતમાં પૂ.આચાર્યશ્રીના ઉપદેશથી આ મકાન માં સાધુ મહારાજોના અભ્યાસ નિમિતે પંડિત રાખી સુવિધા કરવામાં આવી હતી. તેનો લાભ આ સમુદાયના તેમજ બીજા સમુદાયના સાધુ મહારાજો લેતા હતા.

# ટ્રસ્ટીઓનું વક્તવ્ય

શ્રી વિજયનીતિસૂરીશ્વરજી જૈન પૂસ્તકાલય ટ્રસ્ટ તરફથી 'ઉપદેશપ્રાસાદ' ભાગ '- ના પ્રકાશન અંગે આર્થિક સહકાર આપવાનું સૂચન પ.પૂ. આ. શ્રી વિજયરામસૂરીશ્વરજી મહારાજ શ્રી એ કર્યું તે આ સસ્થાના હેતુને અનુરૂપ હોવાથી ઉપર્યુક્ત ટ્રસ્ટના ટ્રસ્ટીઓએ સ્વીકાર્યું. પૂ. આચાર્યશ્રીના સૂચનનો સ્વીકાર કરતી વેળા આ ગ્રંથની ઉપયોગિતા પૂજ્ય સાધુ-સાધ્વીજી મહારાજોના પઠન -પાઠન નિમિત્તક ધ્યાનમાં રાખવામાં આવેલી છે.

સદરહુ ટ્રસ્ટ પ.પૂ.આ. શ્રી વિજયનીતિસૂરીશ્વરજી મહારાજશ્રીના ઉપદેશથી .સં. ૧૯૮૮મા અસ્તિત્વમા આવ્યું. આ ટ્રસ્ટને સ્વ. આચાર્યશ્રીએ અમૂલ્ય સમગ્ર જ્ઞાનભંડાર ભેટ રૂપે આપવાની ઈચ્છા પ્રદર્શિત કરી જે આ ટ્રસ્ટના ટ્રસ્ટમંડળે સહર્ષ સ્વીકારી લીધી. આજથી ૫૦-૫૫ વર્ષો પૂર્વે આવો કીમતી જ્ઞાનભંડાર ટ્રસ્ટને બિનશરતે જાહેર ઉપયોગ માટે અપર્ણ કરવો એ સાહિત્ય તરફની એમની અભિરુચિ અને તેના પ્રચારની ભાવનારુપ વિશિષ્ટ કાર્ય જણાય છે. આ કાર્યને અનુરુપ તેનું સુસંચાલન ચાલે અને ભંડાર સુરક્ષિત રહે તે માટે એક મકાનની આવશ્યકતા જણાઈ આવી અને આ જરૂરિયાત પૂરી કરવાનું સુયોગ્ય કાર્ય ફતાશાહની પોળના મહાવીર સ્વામીજી પોળના પચના સદ્‌ગૃહસ્થો મુખ્યતા સ્વ. શેઠ પનાલાલ ઉમાભાઈ તેમજ સ્વ. શેઠ ભોગીલાલ સાંકળચંદ કે જે આ ટ્રસ્ટના ક્રમશઃ પ્રમુખ અને મેનેજિંગ ટ્રસ્ટી હતા. તેમણે કર્યું. .ફતાશાહ પોળ-મહાવીરસ્વામીજી દેરાસર ટ્રસ્ટને એક મકાન, જે ગાંધીરોડ રાજમાર્ગ ઉપર દેરાસરની સામેની બાજુએ છે, તે કોઈ ધાર્મિક હેતુ માટે સ્વ. શ્રી પ્રેમચદ તલકચંદ તરફથી ભેટ મળેલુ. પણ તે જર્જરિત દશામાં હતુ જેને સુધારી નવા જેવુ બનાવી દેરાસર ટ્રસ્ટે ઉપરના ત્રણે માળ પુસ્તકાલય ટ્રસ્ટને કાયમ માટે વગર ભાડે વાપરવા આપવાનુ નક્કી કર્યું. આ મકાનને નવું બનાવવા માટે સ્વ. પૂ. આચાર્યશ્રીના ઉપદેશથી કોચીન નિવાસી સ્વ. શેઠ ધનજી લીલાધરે રૂ. ૪૦૦૦/- ની રકમનો સહકાર આપ્યો. પરિણામે આ મકાનના ત્રણે માળમા ગ્રંથ ભંડારને સમાવવામા આવ્યો છે.



ટૂંક જગ્યામાં કેમ સમાવીએ કહો સઘળી અનુભૂતિને ?
કોટિ કોટિ વંદન હો એ વીરશાશનની વિરલ વિભૂતિને.....

લુણાવા મંગલ ભૂવન
પાલિતાણા ! સૌરાષ્ટ્ર !
ફા. સુ. ૩ ! સીમંધરસ્વામી -
દીક્ષા કલ્યાણક દિન !

પ. પૂ. આ. દે. શ્રી. મહેન્દ્રસૂરિશ્વરજી મ. સા.
ચરણોભોજભૃંગ
મુનિ મણિ પ્રભવિજ્ય
! રત્નપુંજ !



આ મહાપુરુષ મહાન સાધક હતા. એમના એક અતિનિકટ ના પરિચિત ભક્ત શ્રાવકના શબ્દોમાં કહુ તો ગુરૂદેવશ્રીને પ્રાય કોઈ સૂતેલા જ જોતા ન' તા. અરે ખુદ એમના શિષ્યો પણ... કારણ રાત્રે ૧૨ - ૧ વાગ્યા સુધી તો પ્રાયઃ પોતે જાપમા જ રહેતા. તે પછી કલાક બે કલાક સંથારી જઈ જલ્દી ઉઠી જતાં અને પુનઃ જપ - ધ્યાનમાં ખોવાઈ જતા. એજ ભક્તના કહેવા મુજબ જ્યારે ગિરનારજી તીર્થના જીર્ણોધ્ધારનુ અતિવિકટ કાર્ય કરવાનું હતું. એટલુંજ નહિ પણ આ કાર્ય પાર પડશે કે કેમ? એ એક કપરો કોયડો હતો. આવે ટાણે રાતના ૧૨ - ૧ વાગ્યાના સુમારે પૂજ્યશ્રી પોતાની આરાધનામાં લયલીન બની ગયેલા હતા. આ ભાઈ પણ તે વખતે ગમે તે નિમિત્તથી ત્યા જ હતા. અને અચાનક.... " તારૂ કાર્ય... થઈ જશે' એવો જે દિવ્યધ્વનિ સ્વયં સાભળવાં મળેલો તે આજે પણ ભૂલી શકાતો નથી. આ ઉપરથી તેઓશ્રીની સાધના કેટલી બધી સચોટ હતી, તે આપણને જાણવા મળે છે. એક બીજા ભક્તના કહેવા પ્રમાણે સુરિમંત્ર નો ક્રોડ જેટલો જાપ કર્યો હતો. આ ગચ્છનાયકશ્રીના જીવનનો આવો કેક દિવ્ય પ્રસંગો આજે પણ જાણવા સાંભળવા મલે છે જે અત્રે પ્રસ્તુત છે.

આખર આ શાશસનો સહસ્ત્રરશ્મિ વિશાળ વિશ્વમાં પોતાનો સ્વર્ણિમ પ્રકાશ પાથરી સ. ૧૯૯૮ પોષ વદ - ૩ રોજ પ્રભાતે ૫. ૬૦ મીનીટે એકલિંગજી - ઉદયપૂરમાં આથમી ગયો પૂજ્યપાદશ્રી વીરવીરનું અંતિમ સ્મરણ કરતા સકળ સંઘને રડતો મુકી સ્વર્ગે સિધાવી ગયા. ગમગીન હૈયે ઉદયપુર - શ્રીસંઘ ધ્વારા પૂ. આચાર્ય ભગવંતશ્રીના પ્રાર્થિવ દેહનો - અગ્નિ સંસ્કાર કરવામા આવ્યો. અગ્નિસસ્કારની રાખ્યા ત્યાંના રિવાજ મુજબ પાલિતાણા શેત્રુંજી નદીમા મોકલવાની વ્યવસ્થા કરવામા આવી. આ રાખના કોથળા ભરતાં ત્યાંથી એક સુંદર અને અખંડ શ્રીફળ મળી આવેલું. જાણવા મળે છે તે મુજબ તે જેના હાથમાં આવ્યુ તે માણસ ત્યાને ત્યાં અડધું તો સ્વાહા કરી ગયો ! ખાઈ ગયો ! પરિણામે તેનો કોઢ રોગ બધો તત્કાળી ઝરી ગયો. આ વાત ઉદયપુર - દરબાર સુધી પહોંચતા તેનો શેષ ભાગ પોતાને ત્યા મંગાવી મઢાવી પૂજવા માટે રાખેલો....

સોનાનો સૂર્ય સમ્યક્પ્રકારે ઉદિત થઈ જીવના મધ્યાકાશ ભણી ધીમી છતાં ચોક્કસગતિએ આગળ વધી રહયો હતો. જ્ઞાન ધ્યાન વિનય વૈયાવચ્ચ-તપ-જપ આદિ અપ્રતિમ ગુણોને વિકસાવતા મુનિરાજ શ્રી નીતિ વિજયજીએ સંયમ જીવનનાં એક પછી એક શિખરો સર કરવાં માંડયાં.સં. ૧૯૯૧ માગ.સુ.૫ નાં રોજ સુરત મુકામે પુજ્યશ્રીને ગણિપદ પ્રદાન કરવામાં આવ્યું.સં. ૧૯૯૨ કા.વ. ૧૧ ના રોજ સિધ્ધક્ષેત્રની અંદર તેમને પંન્યાસ પદ આપવામાં આવ્યું. એજ રીતે સં. ૧૯૭૯ માગ.સુદ-૫ ના શુભદિવસે તેઓશ્રીને અમદાવાદ મુકામે વિધિવત મહાન જવાબદારીથી ભરપૂર એવા સૂરિપદથી શોભાયમાન કરવામાં આવ્યા. અને સોનાનો સૂર્ય બરાબર મધ્ય ગગનમાં આવી સર્વ પ્રકારે ચમકી રહયો.....

ઠેર ઠેર સમ્યગ જ્ઞાનનો પીયૂષ - પ્રવાહ વહેવડાવતા પૂજ્યશ્રીએ પોતાનુ પૂર્ણજીવન સંપૂર્ણરીતે સ્વ. પરનું મહાન કલ્યાણ કરવામા જ ગાળ્યું છે. અનેકાનેક ઉપધાન - ઉધાપન પ્રતિષ્ઠા તેમજ યાત્રા - સંઘો વિ. પ્રસંગોએ તેમની - યશ : સુગંધને ચોતરફ પ્રસરાવવામાં કાંઈ જ બાકી નથી રાખ્યું. ૪૯ વર્ષના સુવિશુધ્ધ દીક્ષાપર્યાય દરમ્યાન પૂજ્ય પાદશ્રીની પુણ્યવંતી નિશ્રામાં ૨૦ ઉજમણાં થયા હતા. ૨૨ ઉપધાન થયેલા,૧૦ છરી પાલિત યાત્રા સંઘો નિકળ્યા હતા. યુવાશક્તિ સમાજ પ્રત્યેના પોતાના કર્તવ્યને સુંદર રીતે અદા કરી શકે અને વ્યવસ્થિતરીતે સેવા આપી શકે એ હેતુથી અલગ અલગ ઠેકાણે ૧૬ જેટલા સેવા સમાજ સ્થાપ્યા હતા. અનેકાનેક પ્રતિષ્ઠા પ્રંસગો પણ પૂ. આચાર્યદેવશ્રીના નિશ્રામાં ઉજવાયેલા.

જીર્ણોધ્ધાર તો જાણે પૂજ્યશ્રીનો એક મહાન જીવનમંચ હતો. પૂરબ-પશ્ચિમ - ઉતર - દક્ષિણ ચારે બાજુ વિચરી એક તરફ પરમ કલ્યાણકારીણી વીરવાણીનો ધોધ વહેવડાવ્યો તો બીજી બાજુ અનેક તીર્થો,જિનાલયો કે જે સાવ જીર્ણશીર્ણ હાલતમાં મુકાઈ ગયા હતા તેના રૂડા જીર્ણોધ્ધાર પણ કરાવ્યા. એમાં પણ ગિરનારજી તેમજ ચિતોડગઢના જિનમંદીરોના - પુનરૂધ્ધાર પાછળ તો એમણે જે ભોગ આપ્યો છે તેનું તો વર્ણન થઈ શકે તેમ નથી.

પેઠે નાનો નિહાલ સૌને માટે દર્શનીય અને મંગલ સ્વરુપ ધારણ કરીને માતા-પિતા વિ. ના સો સો મનોરથોની સાથે મોટો થયે જતો હતો.

નાનો નિહાલ બાલ્યકાળથી વૈરાગી દીસતો હતો. "પુત્રના લક્ષણ પારણે" એ ન્યાયે સંસારના રંગરાગ તેમના અંતરને સ્પર્શી શકતા ન હતા. મા બાપ વિ. સૌ કોઈ જુદું જ સ્વપ્ન નિહાળી રહ્યા હતા - ઘેર વહુ લાવવાનુ..... ત્યારે બાલવૈરાગી નિહાલ કોઈ બીજુ જ સ્વપ્ન જોઈ રહયો હતો - સર્વવિરતી રમણીને પરણવાનું......

બાલ નિહાલ જ્યારે માતાના પેટમા હતો ત્યારે જ માને પગે ચાલીને ગિરનારજી તીર્થની જાત્રા કરવાનો થયેલો દોહદલો દોહદ પણ જાણે ભવિષ્યમાં પૂજ્યશ્રીની પાવન પ્રેરણાથી થનારા ગિરનાર મહાતીર્થના જીર્ણોધ્ધારના અતિ મહાન કાર્યનો એક સ્વયંભૂ સંકેત હતો

આખર સુર્યોદયની (ચારિત્રગ્રહણની) મંગળ વેળા આવી તો ખરી, પણ એને લાવતાં તો જબ્બર પુરુષાર્થ ખેલવો પડયો હતો. પૂજ્યશ્રીના જીવનનો એક અંત્યત પ્રેરણાપદ પ્રસંગ કહી શકાય. દીક્ષા લેવાની રજા મેળવવાની ખૂબ ખૂબ કોશિશ કરવા છતા સ્નેહાધીન માતા-પિતા તરફથી જ્યારે રજા મળવી અશક્ય બની ગઈ ત્યારે પોતે નાશી છૂટીને પણ સંયમ ગ્રહણ કરવાની તીવ્ર કોશિશ કરી, પણ સફલતા ન મળી તે ન જ મળી. બાપુજીને પતો લાગતા જ પોતે પુત્રને પાછો પકડી લાવતા. બીજી બાજુ આ પરિસ્થિતિમા તેમના પૂ. ગુરુદેવ પન્યાસપ્રવર શ્રી ભાવવિજયજી ગણીવર્ય પણ તેમને દીક્ષા આપવા તૈયાર ન થયા, આખર સિંહનાદ કરવા પૂર્વક તેમને જાતે જ જંગલમાં જઈ આમ્રવૃક્ષ નીચે સાધુવેશ ધારણ કર્યો અને સંયમ ગ્રહણ કર્યુ.

આ ધન્ય દિવસ હતો વિ.સં. ૧૯૪૯ ની અષાઢ સુદ-૧૧ સોમવારનો આજના કાળમા તીવ્ર વૈરાગ્યની પ્રતીતિ કરવાનારો આવો પ્રસંગ કંઈ સામાન્ય ન કહેવાય... દીક્ષા પછી ચોમાસું પણ બિલકુલ નજીકમાં જ હતું. પ્રથમ ચોમાસુ તેમણે એકલા જ મહેરવાડામા વીતાવ્યુ.

ચાતુર્માસ પછી સં. ૧૯૫૦ ના કા.વ. ૧૧ રવીવારે ' ઉમતા ' ગામે બિરાજમાન પ.પૂ. મુનિ શ્રી કાંતિવિજયજીએ પ.પૂ. શ્રી ભાવવિજયજી ગણિવર્ય ના નામથી દીક્ષાની વિધીપૂર્વક ક્રિયા કરાવી. આમ આપણા ચરિત્રનાયક હવે મુનિ શ્રી નીતિવિજયજી મહારાજના શુભનામથી ચોમેર પ્રસિધ્ધીને પામ્યા.

## સોનાનો સૂર્યોદય



પ. પૂ. આચાર્ય શ્રી વિજયનીતિસૂરીશ્વરજી મ. સા.

બાહય આકાશમાં સવારે નિયમીતરુપે સહસરશ્મિ-સુર્યનો ઉદય રોજે થતો હોય છે. એ કુદરતનો કાયમી ક્રમ છે અને સૌને માટે સામાન્ય છે. પરંતુ આ અસાર સંસારમાથી મોહ-માયાના જનમ-જનમનાં નિબિડ બધનોને ફગાવી દઈ જ્યારે કોઈ આત્મા સ્વ-પરના પરમ કલ્યાણની વિશુધ્ધ કામનાથી સર્વપરિત સંયમની વસમી વાટે સફર કરવા નીકળી પડે છે તે દિ ખરેખર તેના જીવન ગગનની અંદર સોનાનો સૂર્યોદય થાય છે જે સર્વે કોઈના એક અદભૂત આકર્ષણ નું કેંદ્ર બની રહે છે.

આવો, માત્ર સ્વ-જીવનમા જ નહિ, બીજા પણ કૈક પુણ્યાત્માઓના જીવનમાં આવો સોનાનો સૂરજ ઉગાડનારા પ.પૂ. રૈવતચલાદિ મહાતીર્થોધ્ધારક સ્વ. ગચ્છાધિપતિ આચાર્ય દેવ શ્રીમદ્વિજયનીતિ સૂરીશ્વરજી મ.સા.નો કંઈક પુણ્ય પરિચય પામી આપણે પણ સ્વ. જીવનને ધન્ય અને કૃતાર્થ બનાવીએ.

આ મહાપુરુષનો જન્મ વિ.સં.૧૯૩૦માં પો.શુ ૧૧ના પવિત્ર દિવસે રુડા વાંકાનેર નગરમાં થયેલ. એમના પુણ્યશાળી પિતાશ્રીનું નામ 'ફૂલચંદભાઈ' તેમજ રત્નકુક્ષિ માતુશ્રીનું નામ 'ચોથીબાઈ' હતુ. પૂજ્યશ્રીનું પોતાનુ સાંસારિક શુભ નામ નિહાલચંદભાઈ રાખવામાં આવ્યું હતુ. તેમને ત્રણ મોટા ભાઈઓ તેમજ બે બહેનો હતા. બીજના ચદ્રમાની

ॐ अर्हं नमः

## किञ्चित प्रास्ताविकम्

अस्य महाग्रन्थस्य का उपयोगिताऽस्ति ? तदहं दर्शयामि। अयं श्री उपदेश प्रासादनामा महाग्रन्थः सर्वजनोपयोगी वर्तते। कारणं तु अस्मिन् ग्रन्थे श्रुतज्ञानपिपासूनां बालमध्यमविद्वज्जनानां तृप्तिकारक दानशीलतपोभावपोषकविषया ग्रन्थकार महर्षि श्रीविजयलक्ष्मीसूरीश्वरमहाराजेन विविधशास्त्रेभ्य उद्धृत्य संगृहीताः।

तथा च विद्वज्जनोपकारकजैनदर्शनमान्यतात्त्विकपदार्थप्ररुपणाऽपि सुन्दरतरा दृश्यते। ऐतिहासिकसंशोधकानां तु बहवो लाभदायिनो पदार्थाः लभ्यन्ते।

एकैककथासु धर्माधर्मं प्रदर्श्य भवोदधौ पतन्त आत्मानंसन्मार्गे कथं प्रापणीया इत्यादि रीतिरपि दर्शिता।

अरे गीतार्थमहात्मनांमहोपकारिभूतापापालोचनाविधे कथं प्रायश्चित्तं देयं इत्यादि गुप्तपदार्थाः अपि सम्यग् नीत्या प्रदर्शिताः।

अर्थात् सर्वविषयसंग्राहकोऽयं महाग्रन्थस्तस्मादादेयतया सर्वैरपि पठिष्यते इतिमन्ये। अलं विस्तरेण।

दिनांक ७-१२-१९८७

वि. स. २०४४ मार्गशीर्ष कृष्ण द्वितीया

स्थल—नारणपुरा जहवेरी पार्क.

अमदावाद

विजय रामसूरि

## શ્રી ઉપદેશપ્રાસાદ ગ્રંથ પ્રકાશનમાં સુકૃત સહભાગીની યાદી

નામ

(૧) પ. પૂ. પન્યાસ શ્રી રૂપવિજયજી મ. નો ડહેલાનો જૈન ઉપાશ્રય ટ્રસ્ટ
(૨) પ. પૂ. આચાર્ય શ્રી વિજય નીતિ સૂરીશ્વરજી જૈન પુસ્તકાલય ટ્રસ્ટ
(૩) શ્રી ઝવેરીપાર્ક જૈન સંઘ નારણપુરા અમદાવાદ
(૪) શ્રી તીલોકચંદજી ડી. શાહ નેનાવા (હાલ મુંબઈ)
(૫) શ્રી જેશીંગભાઈ ચીમનલાલ શાહ પાટણ ( હાલ મદ્રાસ )
(૬) શ્રી મીશ્રીમલજી પ્રતાપચંદજી મુંબઈ
(૭) શ્રી ચુનીભાઈ ચકાભાઈ અમદાવાદ
(૮) શ્રી લીલાવતી બહેન ચંદુલાલ વૈદ અમદાવાદ
(૯) મંગુબેન ભીખાભાઈ વજેચંદ સપરિવાર
હસ્તે મહેન્દ્રભાઈ ભીખાભાઈ હાલ નવસારી ( ખંભાતવાળા )

અનંત ઉપકારી જ્ઞાની ભગવંતોએ સૂક્ષ્માતિસૂક્ષ્મ પદાર્થોની પ્રરૂપણા કરી આપણા ઉપર અનહદ ઉપકારો કરેલ છે. સર્વ પદાર્થને સમજવા માટે જ અનુયોગની આવશ્યકતા જ્ઞાનિ ભગવંતોએ કથન કરેલી છે, તે અનુયોગને સમજવા માટે જુદા જુદા શાસ્ત્રો સિદ્ધાંતો આપણી પાસે મોજુદ છે, જેમ કે,

દ્રવ્યાનુયોગ સમજવા સંમતિતર્ક

ચરણકરણાનુયોગ સમજવા આચારાગાદિ

ગણિતાનુયોગ સમજવા સૂર્ય પ્રજ્ઞપ્તિ—ચંદ્ર પ્રજ્ઞપ્તિ વિ.

કથાનુયોગ સમજવા જ્ઞાતાધર્મકથાંગ—ઉત્તરાધ્યયન, વિવાક સૂત્ર આદિ.

શ્રી ઉપદેશ પ્રાસાદ ગ્રંથમાં આ ચારે અનુયોગની પ્રાપ્તિ થાય છે. તે ખરેખર આ ગ્રંથની મુખ્ય વિશેષતા રહેલી છે. આપણા શાસનમાં ઉપદેશક ગ્રંથો ઘણા ઘણા રહેલા છે. શ્રી ધર્મદાસગણિ મ. વિરચિત ઉપદેશમાલા, સહસાવધાની આ. શ્રી. મુનિસુંદરસૂરિ મ. વિરચિત ઉપદેશરત્નાકર, શ્રી સોમધર્મગણિ કૃત ઉપદેશ સપ્તતિકા, શ્રી કુલસારગણિ રચિત ઉપદેશસાર આદિ આદિ.

ઉપરોક્ત ઉપદેશક ગ્રંથોની અપેક્ષાએ આ.શ્રી. વિજય લક્ષ્મીસૂરિ મ. નિર્મિત શ્રી ઉપદેશ પ્રાસાદ વિસ્તૃત અને વધુ પદાર્થોની પ્રરૂપણા કરતો ગ્રંથ છે આ મહાગ્રંથના ગ્રંથકાર મહર્ષિએ વિષયને અતિ સરળતાથી પ્રતિપાદન કરવામાં ખુબ જ કુશળતા વાપરી છે. કઠિનમાં કઠિન વાતને પણ આબાલવૃદ્ધ સમજી શકે તે માટે એકેએક વ્યાખ્યાનોમાં શાસ્ત્રીય, લૌકિક લોકોત્તર દ્દષ્ટાંતોનો ઉપયોગ કરેલ છે. સાથે સાથે દરેક વાતને અતિપુષ્ટ બનાવવા શાસ્ત્રપાઠો, આગમ સાક્ષીઓ પણ ઠેરઠેર જોવા મળે છે આથી આ ગ્રંથરત્નને શાસ્ત્ર—સિદ્ધાંત સંગ્રહ કહેવામાં શું અતિશયોક્તિ લાગશે ?

આ ગ્રંથ અતિમહત્તર હોવાથી ૪ વિભાગમાં વિભાજિત કરેલ છે. દરેક ભાગમા ૬-૬ સ્થંભાનો સમાવેશ કરલ છે. સ્થંભમાં પ્રાય ૧૫-૧૫ વ્યાખ્યાનો રહેલાં છે. આથી બધા મળીને આખા ગ્રંથમા ૩૬૧ વ્યાખ્યાનો છે. જે વર્ષના ૧-૧ દિવસ માટે પર્યાપ્ત બને છે. માટે પણ આ ગ્રંથ આદરપાત્ર છે

આજથી પ્રાય: ૨૦૦ વર્ષ પહેલા આ ગ્રંથની રચના થઈ છે. આ ગ્રંથ જૈન ધર્મના નાના મોટા પ્રાય: દરેક વિષયને આવરી લેતો હોવાથી અતિઉપયોગી સાબિત થયો છે. આ ગ્રંથની રચના દ્વારા આચાર્યશ્રીએ આપણા ઉપર મહાન ઉપકાર કરેલ છે. અન્ય ઉપદેશક ગ્રંથોની અપેક્ષાએ આ શ્રી ઉપદેશ પ્રાસાદ ગ્રંથનો વપરાશ વધુ પ્રમાણમા જોવા મળે છે. વળી પૂર્વે છપાયેલ ગ્રંથ પણ આજે અપ્રાપ્ય હોવાથી મારા પૂ. તારક ગુરૂદેવશ્રીને આ ગ્રંથ છપાવવાની ઘણા સમયથી ભાવના હતી તે ભાવનાને અનુરૂપ શ્રુતિભક્તિ રૂપે અનેક સંસ્થાઓએ, મહાનુભાવોએ, આ ગ્રંથ પ્રકાશનમાં લાભ લીધેલ છે. જે અનુમોદનીય છે.

પ્રાન્તે ભવ્યાત્માઓ આ ગ્રંથનો સદુપયોગ કરવા દ્વારા આત્મકલ્યાણ સાધે તે જ શુભેચ્છા.

સંવત ૨૦૪૪, માગસર સુદ ૧૪
તા. ૪-૧૨-૧૯૮૭
સ્થળ : ઝવેરી પાર્ક જૈન ઉપાશ્રય
અમદાવાદ

લી.
પૂજ્યાચાર્ય શ્રી વિજય રામસૂરીશ્વરજી મ. નો
વિનેયાણુ
જગચ્ચન્દ્ર વિજય

હા એક વાત કહેવાની રહી ગઈ .....................!!!! તમારી ઈચ્છા અમે જાણી લીધી છે. તમારે પણ જ્ઞાનપરબમાં લાભ લેવો છે. ને ? આ રહી તે યોજના.................!!!!

**એક પંડિતશ્રીં ને ૧ માસનો પગાર વ્યાજમાંથી રૂા. ૧૧૧૧૧—૦૦**

**એક પંડિતશ્રી ને ૧ માસનો પગાર છુટક રૂા. ૨૦૦૧—૦૦**

તે સિવાય પણ લાભ લેવાના આ રહ્યાં રસ્તાઓ.........

મુદ્રિત પુસ્તકોની ખરીદીમાં,

હસ્તલીખિત પ્રતોની ખરીદીમાં

પાઠશાળા ના નવા મકાનોનાં ખંડોમાં તકતી મૂકવવામાં

પાઠશાળા ના મકાન આગળના ભાગમાં મુખ્ય સહાયક તરીકેની તકતી મુકાવવામાં,

તે સિવાય અન્ય લાભો લેવાની ભાવના વાળાઓએ સંસ્થાનો સંપર્ક કરવા હાર્દીક વિનંતિ.

હવે તો ફક્ત આપે ઉપરોક્ત પાઠશાળાની મુલાકાત જ લેવી રહી .......................!!!

આચાર્ય શ્રી સુરેન્દ્રસૂરીશ્વરજી જૈન તત્ત્વ જ્ઞાનશાળા
ઝવેરીવાડ : પટણીની ખડકી
અમદાવાદ—૩૮૦૦૦૧.

C/o. શશીકાન્ત ભોગીલાલ શાહ
૭૬/૭૮ શેખ મેમણ સ્ટ્રીટ
ઝવેરી બજાર, પટેલ બીલ્ડીંગ
૩ જે માળે, મુંબઈ

લી. સંસ્થાના ટ્રસ્ટી ઓ વતી
(૧) જસવંતલાલ વી. શાહ
C/o. વી. બી. શાહ એન્ડ સન્સ
મસ્કતી મારકેટ અમદાવાદ.
(૨) સુબોધભાઈ એચ. મહેતા

# જરા... બે... મિનિટ...!!

તમે જાણો છો ? આચાર્ય શ્રી સુરેન્દ્રસૂરીશ્વરજી જૈન તત્ત્વજ્ઞાન શાળાની સત્પ્રવૃત્તિ......ના તો બરાબર જાણી લો
આ જ્ઞાનપરબમાં આવનાર આત્માઓ પોતાની જ્ઞાનતૃષ્ણાને અહિં બરાબર સમાવી શકે છે. અહિં આવનાર સાધુ
સાધ્વીજી મહારાજોને જ્ઞાનપ્રાપ્તિ થાય તે માટે ઉપરોકત સંસ્થાએ ૨/૩ પંડિતવર્યોની વ્યવસ્થા કરેલ છે. તે પંડિતવર્યો
પૂજ્ય સાધુ સધ્વીજી મ. ની જ્ઞાનતૃષ્ણા ને ખૂબજ સારી રીતે શમાવે છે.

તદ્ઉપરાંત આ સંસ્થામાં અતિસુંદર અને સુવિશાલ મુદ્રિત તેમજ હસ્તલિખિત જ્ઞાનભંડાર છે. જેમાં દરેક
ભાષાનાં પુસ્તકો ઉપલબ્ધ છે. જેને એકવાર ફક્ત જોવાથી પણ અતિવ આનંદ થાય તેમ છે.
તે સિવાય આવા પ્રાચીન ઉપયોગી ગ્રંથોનું પ્રકાશન કરવાનું કાર્ય પણ આ સંસ્થા એ આરંભ્યું છે.

અંતે એક ખુશખબર.....................

અમદાવાદ શહેરની બહારના વિસ્તારમાં રહેલા પૂજ્ય સાધુ સાધ્વીજી મ. પણ આવી જ્ઞાનપરબ નો લાભ લઈ શકે તે હેતુથી
આ સંસ્થા નારણપુરા વિસ્તારમાં ઝવેરીપાર્ક જૈન દેરાસર ની સામે ટુંક સમયમાં જ પાઠશાળાની શરૂઆત કરવાનું
વિચારે છે. અને છેલ્લે આ વિરાટ કાર્ય વામન એવા અમે કઈ રીતે કરીએ છીએ, ? તે પણ જાણી લો

પરમ પૂજ્ય આચાર્ય દેવેશ **શ્રી વિજય રામસૂરીશ્વરજી મ.**
નો આવી સન પ્રવૃત્તિ અંગે અમોને તે પૂજ્યશ્રીનો નિત્ય ઉપદેશ આવા શુભ કાર્યો માં પ્રેરણા રૂપ છે.
અન્યથા આવું વિરાટ કાર્ય વામન એવા અમે શું કરવાના હતા ?